धर्मशास्त्रग्रन्थमाला.

[ ग्रन्थाङ्कः २५ (३) ]

श्री

वैद्यनाथदीक्षितीय

# स्मृतिमुक्ताफलम्

(तृतीयः खण्डः)

## आशौचकाण्डम्



जगन्नाथ रघुनाथ घारपुरे,

बी ए, एलएल. बी,

पुण्यपत्तनस्थव्यवहारशालाया आचार्यः, मुम्बईविश्वविद्यालयसदस्यः

भारतसङ्घन्यायसभासदस्यः

इत्यनेन संशोधितं, मुद्रापितं, प्रकाशितं च।

प्रथमावृत्तिः

शाकाब्दाः १८६० ] [ क्रिस्ताब्दाः १९३९.

श्री

# श्री वैद्यनाथदीक्षितीयस्मृतिमुक्ताफलस्थ-
# आशौचकाण्ड विषयानुक्रमणिका


| विषयः | पृष्ठम् |
|---|---|
| आशौचशब्दार्थः ... .. | ४७७ |
| स्मृतिचंद्रिकोक्तः .. .. | ,, |
| भट्टाचार्योक्तः . . | ,, |
| विज्ञानेश्वरोक्तः ... ... | ,, |
| आशौचद्वैविध्यं . .. | ,, |
| आशौचे सन्ध्योपासनम् ... | |
| ,, त्याज्यकर्माणि | ४७८ |
| ,, पचयज्ञादि .. ... | ४७९ |
| ,, अभक्ष्याणि . .. | ४८० |
| पुत्रजन्मनि दानादि ... .. | ,, |
| अनेकविधाशौचम् ... . | ४८१ |
| श्राद्धादिमध्ये अघसभवे .. | ,, |
| देवताप्रतिष्ठादिमध्ये ,, ... | ४८२ |
| विवाहमध्ये ,, ... . | ४८३ |
| सद्यःशौचानि .. | ४८४ |
| भृगुपातादिना मृतौ .. | ४८५ |
| आशौचिनां ग्रहणस्नानविधिः . | ,, |
| जामातृदौहित्रभागिनेयादिमृतौ .. | ,, |
| राष्ट्रक्षोभादिना मृतौ ... ... | ४८६ |
| युद्धमरणादौ ... | ४८७ |
| बुद्धिपूर्वमरणे ... .. | ,, |
| पापकर्मणां मृतौ ... ... | ४८८ |
| आहिताग्निदुर्मरणे ... .. | ४८९ |
| दुर्मृतौ प्रायश्चित्तं संस्कारक्रमश्च .. | ४९० |
| गर्भस्रावादिनिमित्ताशौचम् .. | ४९१ |
| गर्भनाशत्रैविध्ये आशौचनियमः | ४९२ |
| सूतिकाशौचम् ... . | ४९३ |
| प्रसवाशौचम् ... ... | ४९४ |
| वर्णविशेषाशौचम् ... ... | ,, |
| अनुलोमप्रतिलोमाशौचम् ... | ४९५ |
| समानोदकाशौचम् ... ... | ४९६ |
| सपिण्डाशौचम् .. | ४९७ |
| स्त्रीषु सापिण्ड्यम् . ... | ४९८ |
| जननाशौचम् ... | ४९९ |
| मातापित्रोः ... ... | ५०० |
| सूतिकायाः . | ५०१ |
| आशौचिनामन्योन्यस्पर्शनिषेधः . | ५०२ |
| दशाहान्तर्गतशिशुमरणाशौचम् ... | ५०३ |
| सूतकाद्याशौचेषु तारतम्यम् ... | ५०४ |
| मृतजाते ... ... | ५०५ |
| नाभिच्छेदोत्तरमृतौ . ... | ५०६ |
| दशाहोपरितनशिशुमरणे | ५०७ |
| खननादिसंस्कारभेदेनाशौचभेदः .. | ,, |
| ऊनद्विवर्षे .. .. | ५०९ |
| खननप्रभृत्याशौचम् ... | ,, |
| सोदरासोदराणाम् . ... | ५१० |
| अनुपनीतमरणाशौचे .. ... | ५११ |
| नामकरणादिनिबन्धनशौचक्रमः ... | ,, |
| खननादिसंस्कारव्यवस्था | ५१२ |
| लौकिकेष्वनादेयाग्नयः ... | ,, |
| त्रिवत्सरादूर्ध्वम् ... ... | ५१३ |
| बालमरणे नारायणबलिः . | ५१४ |
| कन्यामरणाशौचम् ... | ५१५ |
| ऊनद्विवर्षीया ऊढायाः ... .. | ५१६ |
| स्वगृहे पुत्रीप्रसवादिनिमित्ताशौचम् ... | ,, |
| पितृगृहे कन्यामृतौ ... ... | ५१७ |
| उपनीताशौचम् ... | ५१८ |
| कृतसमावर्तनस्याशौचम् ... | ५१९ |

# स्मृतिमुक्ताफलम् ।

## आशौचकाण्डम् ३



**श्रीगणेशाय नमः । अथाशौचप्रकरणम् ।** तत्र **शंखः**—

"दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च। प्रेतकर्मक्रिया यज्ञमाशौचे विनिवर्त्तयेत्" ॥ इति । आशौचशब्दार्थः **स्मृतिचंद्रिकायामभिहितः**—"सपिंडादिजनने मरणे वा सति यदप्रायत्यं दानादिकर्म स्वयोग्यतापादकं पापविशेषात्मकं वा तदाशौचशब्देन बोध्यते" इति । तथा **भट्टाचार्यैः**—"पापक्षयो हि शुद्धिः कर्मयोग्यत्वमेव वा" इति । शुद्धिपदार्थं ब्रुवद्भिस्तद्वि- ५ परीतस्य जननमरणनिमित्तपापविशेषस्य दानादिधर्मानुष्ठानायोग्यत्वस्य वा मतभेदेनाशौचशब्दाभिधेयत्व ज्ञापितम् । **विज्ञानेश्वरोऽपि** (प्रा पृ. १६१ प ५-७)—"आशौचशब्देन कालः स्नानापनोद्यः पिंडोदकदानविधेरध्ययनादिपर्युदासस्य निमित्तभूतः पुरुषगतः कश्चनातिशयः प्रतिपाद्यते" इति । कालापनोद्यमत.शवनिमित्तग्रामाद्याशौचं स्नानापनोद्य ज्ञायमानसवधबधुमरणाद्यघं काल-स्नानाभ्यामपनोद्य सपिंडादिजननमरणाशौचम् इत्यर्थः । **संग्रहेऽपि**— १०

"निमित्त पिण्डदानादेः पुरुषस्थमशुद्धिकृत् । कालस्नानापनोद्यं यत् तदाशौचमितीर्यते" ॥ इति ।

आशौचं द्विविध कर्मानधिकारलक्षण अस्पृशत्वलक्षणं च ।

"अशौचे वर्जयेत्कर्म नित्यनैमित्तिकादिकम् । आशौचिभिस्तथा स्पर्शे स्पृष्ट्वा स्नानेन शुध्यति" ॥ इति स्मृतेः ।

### आशौचे सन्ध्योपासनम् ।

तथा च कर्माधिकारपरिपन्थित्वादाशौचस्य संध्याद्युपासनस्यापि निवृत्तिप्राप्तावपवादमाह १५ **पराशर.** ( ३।३ )—"उपासने च विप्राणामंगशुद्धिस्तु जायते ।

"ब्रह्मचारी गृहे येषा हूयते च हुताशनः । सपर्कं चेन्न कुर्वंति न तेषां सूतक भवेत्" ॥ (३।२५) इति । उपासनं संध्यावंदनं तास्मिन्प्रसक्ते तात्कालिकशुद्धिर्भवति । विप्रग्रहण क्षत्रियादीनामुपलक्षणम् । ब्रह्मचारी उपकुर्वाणो नैष्ठिकश्च । येषां गृहे अग्निहोत्रमनुष्ठीयते तेषामग्निहोत्रानुष्ठानकाले नास्त्याशौचं यदि ते आशौचिभिः ससर्गं न कुर्युरित्यर्थः । २०

अत्र **मरीचिः**—"सूतके कर्मणा त्यागः सध्यादीनां विधीयते" ॥

**कात्यायनश्च**—"सूतके प्रेतके च संध्योपासनादिनित्यकर्माणि स्वाध्यायदानप्रतिग्रहांश्च वर्जयेत्" इति॥

**स्मृत्यंतरेऽपि**—

"राष्ट्रक्षोभे नृपाक्षिप्ते रोगार्त्ते शावसूतके । संध्यावंदनविच्छित्तिर्न दोषाय कदाचन" ॥ इति ।

**विष्णुपुराणेऽपि**— २५

"सर्वकालमुपस्थानं संध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः" ॥ इति ।

**जाबालिः**—

"संध्यां पचमहायज्ञान् नैत्यिकं स्मृतिकर्म च । तन्मध्ये हापयेदेतमाशौचांते पुनः क्रिया" ॥ इति ।

---

१ **क्षगक**-मशुद्धिः पुनरेवस ।

**वैय्याघ्रपादः**—

"स्मार्त्तकर्मपरित्यागो राहोरन्यत्रसूतके । श्रौतकर्मणि तत्कालस्नातः शुद्धिमवाप्नुयात्"॥ इति ।
**शंखः**—"अग्निहोत्रार्थं स्नानोपस्पर्शनान्त तत्कालं शौचम्"। इति । **कण्वः**—
"अग्निहोत्रहवं कुर्यादन्याभावे स्वय द्विजः। कुर्यात्स्नात्वाऽर्द्रवासास्तु तस्मात्कालादृतेऽशुचिः"॥ इति।
**मनुः**—                                                                                        ५
"दर्शं च पौर्णमासं च कर्म वैतानिकं च यत् । सूतकेऽपि त्यजन्मोहात्[1]प्रायश्चित्तीयते हि सः"॥ इति ।
अत्र **चंद्रिकायाम्**—"श्रौतानामप्यग्निहोत्रादीना प्रथमारंभात्प्रागाशौचे त्याग एव । प्रतिप्रसव-
विधीनां प्रथमारंभोत्तरकालानुष्ठेयाग्निहोत्रादिविषयत्वात्" इति । दर्शपूर्णमासयोरनुष्ठानप्रतिपादन-
मघागमात्प्रागारब्धविषयं तथैव शिष्टाचारादिति केचित् । **जातूकर्णिः**—
"सूतके तु समुत्पन्ने स्मार्त्तं कर्म कथं भवेत् । पिंडयज्ञं चरुं होममसगोत्रेण कारयेत्"॥ इति । १०
पिंडयज्ञः पिंडपितृयज्ञः। चरुः पार्वणस्थालीपाकः। होमः औपासनहोमः। एतान् अघागमात्प्राग्घोमार्थं
सकल्पितैर्द्रव्यैः तदभावे अघरहितश्रोत्रियगृहादाहृतैराशौचरहितेन कारयेदित्यर्थः । **बृहस्पतिरपि**—
"सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्ते तु हावयेन्न तु हापयेत्"॥ इति ।
न हापयेत् न त्यजेदित्यर्थः । **जाबालिः**—
"वैतानाग्नौ स्वय कुर्यात्कर्मत्यागो न विद्यते । शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजेः"॥ इति। १५
**स्मृतिरत्ने**—
"सूतके होमवत्कर्म तदन्येनैव कारयेत् । अग्निहोत्रं स्वयं कुर्यात्स्नात्वेव नियमोदितम्"॥ इति ।
अनेनैवाभिप्रायेण **पैठीनसिरपि**—"नित्यानि तु निवर्तेरन्वैतानवर्जं शालाग्नौ चैके" इति ।
**संवर्त्तः**—

"पंचयज्ञविधानं तु न कुर्यान्मृतिजन्मनो. । हावयेदन्यगोत्रेण नित्यहोममतंद्रितः"॥ इति । २०

**स्मृतिरत्ने**—

"नित्यं नैमित्तिकं कुर्यात्काम्यकर्म न किंचन । आधान पुनराधान पशुः सौत्रामणी तथा ॥
"चातुर्मास्यानि सोमश्च तथैवाग्रयणक्रिया । अकाम्यत्वेऽप्यनैतेषां सूतकादावनुष्ठितिः"॥

**संग्रहे**—

"शावे च सूतकेऽघाख्ये कर्मणां त्याग इष्यते । द्रव्याण्यपि प्रदुष्यन्ति स्वाध्यायश्च निवर्तते ॥ २५
"अस्पृष्टानां च भाण्डानां दशाहे शुद्धिरिष्यते । द्रव्याणां चापि संस्पर्शे विना मांस समुत्सृजेत् ॥
"साध्यं कर्माग्निहोत्रं च प्रेतकार्याणि चाप्लुतः । कुर्यादन्येन होमं तु कारयेन्नान्यदाचरेत्"॥ इति ।
**स्मृत्यर्थसारे**—"जाताशौचे मृताशौचे त्रेताग्निसाध्याग्निहोत्रदर्शपूर्णमासाद्या नित्या नैमित्तिकाः
क्रियाः कार्याः । औपासनाग्निसाध्यास्तु सायप्रातर्होमपार्वणस्थालीपाकाद्या नित्यनैमित्तिका हावनीयाः
सर्वथा न त्यक्तव्याः । यजमानः स्नात्वाऽऽचम्य उद्देशत्यागं कुर्यात्सर्वं काम्यं वर्ज्यं दानप्रतिग्रह- ३०
पंचमहायज्ञनित्यश्राद्धस्वाध्यायादीना स्मार्त्तानां त्याग एव नित्यस्नानशौचाचमनभोजननियमा-
स्पृश्यस्पर्शस्नानं च कुर्यादेव"। तथा च **कण्वः**—
"शौचमाचमन स्नान नियमं भोजनादिषु । अस्पृश्यस्पर्शनस्नान कुर्यादाशौचवान् द्विजः"॥
सूतकान्नभोजने स्वकुल्यानां न दोषः । अन्येषां दातृभोक्त्रोरन्यतरेण ज्ञाते दोष उभाभ्यामपरिज्ञाने
न दोषः । तथा च **षट्त्रिंशन्मते**—                                                          ३५

---

[1] क-न्मोहात्; खग-त्यजेन्मोहात् ।

" उभाभ्यामपरिज्ञातमाशौचं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् " ॥ इति ।
"द्रव्याणि स्वामिसंबन्धात्तदघे त्वशुचीनि वै । स्वामिशुध्यैव शुध्यंति वारिणा प्रोक्षितान्यपि"॥ इति
स्मृत्या स्वामिसंबंधद्वारा दुष्टत्वेन सर्वद्रव्याणां प्रतिग्रहनिषेधे प्राप्ते केषुचिद्द्रव्येष्वनुग्रहमाह
**मरीचि** —
५ " लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपय.सु च ॥
" तिलौषधाजिने चैव पक्वापक्वे स्वय गृहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके " ॥ इति ।
पक्वं भक्ष्यजातमपूपादि । अपक्वं तंडुलादि । पक्वान्ने दोषस्मरणात् । तथा **चांगिराः**—
" अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषां त्रिरात्रे तु पयः पिबेत् ॥
" नाद्याच्छूद्रस्य पक्वान्नं विद्वानाशौचिनोऽपि च । आददीताममेवास्मादवृत्तावैकरात्रिकम् " ॥ इति ।
१० अन्नसत्ररतादेवामं ग्राह्यम् । आपदि तु अन्यस्मादप्याशौचिन. दिनमात्रपर्याप्ततंडुलादि ग्राह्यम् ।
पक्वान्नं तु सर्वथा न ग्राह्यमित्यर्थः । अपक्वतंडुलादिवत् पक्वापूपाद्यपि अन्नसत्ररतादेव ग्राह्यमित्युक्तं
**संग्रहे**—
" भक्ष्यजातं तथा पक्वमपक्वं तंडुलादिकम् । अन्नसत्ररतस्यैव ग्राह्यमित्यगिरा मुनिः " ॥ इति ।
**तत्रैव**—
१५ " दधि क्षीरं घृतं शाकं पटु पुष्प तिलौषधम् । काष्ठं मूलं फलं मासं मधु कूपाम्बु चाजिनम् ।
" पण्यान्यघेऽपि गृह्णीयात्स्वय तु स्वाम्यनुज्ञया " ॥ पटु लवणम् । **अंगिराः**—
" यत्तु क्षेत्रगतं धान्यं कूपवापीषु यज्जलम् । अभोज्यादपि तद्भोज्यं यच्च गोष्ठगतं पयः ॥
" आमं मांसं मधु घृत दधि क्षीरमथौषधम् । गुड तक्रं तथोदश्विद्भोज्यान्येतानि नित्यशः ॥
" तदहर्मात्रवृत्त्यर्थमामं ग्राह्यं सदापदि । आमं पूयति संस्कारैः सम्यक् तेभ्यः प्रतीप्सितम् ॥
२० " तस्मादामं ग्रहीतव्यमन्नं सूतमृतांतरे " । इति । **दक्षः** ( ६।१९ )—
" स्वस्थकाले त्विदं सर्वं सूतकं[1] समुदाहृतम् । आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् " ॥
**याज्ञवल्क्यः** ( प्र. ४१ )—
" आपद्गतः प्रगृह्णन्यो भुंजानो वा यतस्ततः । न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः " ॥
**विज्ञानेश्वरीये**—
२५ " सूतके मृतके चापि दुर्भिक्षे [4]भिक्षितं द्विजैः । उपप्लवे च देशस्य तेषामल्पेन निष्कृतिः " ॥ इति ।
**चंद्रिकायाम्**—
"दाने विशिष्ट आर्त्तस्य व्याधिना शुचितोच्यते । अनिच्छतोऽपि यो वस्तु दातुं हेमादि वाञ्छति"॥ इति ।
**ब्राह्मे**—"अकालमृत्योः शांत्यर्थं महादाने च रोगिणाम्"॥ इति । अशौचं न विद्यत इत्यनुवर्त्तते ।
**संग्रहे**—" न देयं न प्रतिग्राह्यमघे देयं सदापदि " इति ।
३० **पुत्रजन्मनि दानम्** । पुत्रजन्मनि दानमाह **पराशरः** ( १२।२२)—
" सत्रयज्ञे विवाहे च संक्रांतौ ग्रहणे मृतौ । पुत्रजाते व्यतीपाते दत्तं भवति चाक्षयम् ।
" शर्वर्यां दानमस्तीति नान्यत्र तु विधीयते " ॥ **वृद्धमनुरपि**—
"जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम् । हिरण्यधान्यगोवासतिलान्नगुडसर्पिषाम्"॥ इति ।
**गौतमोऽपि**—" प्राङ्नाभिवर्धनात्पुण्यं तदहरित्येके " इति ।

---

१ क्ष-पुट । २ क्ष-शुक्र । ३ क्ष-भूतक; अशौचं । ४ ख-भिक्षितं । ५ क्ष-हेमादि ।

आशौचदीपिकायाम्—
" दाने सुतोदये शुद्धिर्द्दिनाड्यौ पितृसंनिधौ । अहोरात्रं तु दूरस्थे पितर्यल्प गते त्वहः "॥ इति ।
एतच्च जातकर्मप्रकरणे सविस्तर प्रतिपादितम् ( पृ ७९–८० ) ।

**अनेकविधाशौचम्** । अनेकविधमाशोचमाह दक्षः ( ६।२ )—

" सद्यःशौच तथैकाहस्त्र्यहश्च चतुरस्तथा । षड्दशद्वादशाहाश्च पक्षो मासस्तथैव च ॥ ५

" मरणात तथा चान्यत्पक्षाश्च दश सूतके " ॥ इति । दशपक्षा इत्युपलक्षणम् ।

" गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् " इत्यादिना पचाहादिपक्षाणामपि स्मरणात् ।
**सद्यःशौचम्** । तत्र सद्यःशौचमाह याज्ञवल्क्य. ( प्रा २८–२९ )—
" ऋत्विजा दीक्षिताना च याज्ञिकं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
" दाने विवाहे यज्ञे च सग्रामे देशविप्लवे । आपद्यपि च कष्टाया सद्यःशौच विधीयते "॥ इति । १०
सद्यःशौच नाम स्नानातमघम् ।

"सद्यःशौचे तु तावत्स्यादाशौचं सस्थितस्य तु । यावत्स्नानं न कुर्वंति सचैलं बांधवा बहिः" ॥
इत्यंगिरःस्मरणात् । अत्र ऋत्विक्शब्दो मनुना विवृतः ( २।१४३ )—

"अग्न्याधेय पाकयज्ञमग्निष्टोमादिकान्मखान् । यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते " ॥
वृतो वरणेन संस्कृत इत्यर्थः । स च वरणजन्यसस्कारोऽग्न्याधेयादौ प्रवरणप्रभृतिप्रयोगपरिसमाप्ति- १५
पर्यंतमनुवर्त्तत इति तदनुवृत्तिपर्यंतमृत्विजा दीर्घकालाशौचमध्येऽपि " सद्यःशौच विधीयते " इति
सबधः । दीक्षणीयादिना सस्कृता दीक्षिताः । तेषां याज्ञिकं यज्ञे भव कर्म कुर्वतां सद्यःशौचम् ।
अत्र विज्ञानेश्वरः (पृ १८५प १९)—" दीक्षितस्य 'वैतानोपासनाः कार्या' इत्यनेन सिद्धेऽपि
पुनर्वचन सद्यःस्नानविशुध्यर्थम् " इति । सत्रिव्रतिदातृशव्दानामर्थाः संग्रहकारेण दर्शिताः—
" सत्री गृहीतनियमो यज्ञे दाने च दीक्षितः । चाद्रायणाद्यनुष्ठाता व्रती तु ब्रह्मचार्यपि ॥ २०
"श्राद्धे गृहीतसकल्पो व्रती भोक्ता च कीर्तितः । दाता नित्यान्नदाता च वानप्रस्थश्च कीर्तितः"॥ इति ।
दाने सतताऩ्नदाने गृहीतनियमः कृतसकल्पः । यज्ञे दीक्षितः सत्रीत्यनेनोक्तः । ब्रह्मविद्यतिः । दाने
पूर्वसंकल्पितद्रव्यदाने विवाहे कृतकौतुकबधने सद्यःशौचमित्यर्थः । अंगिराः—
" जनने मरणे चैव त्रिष्वाशौचं न विद्यते । यज्ञे विवाहकाले च देवयागे तथैव च ॥
" ऋत्विजा यजमानानां परिकर्मादि कुर्वताम् " । यज्ञः सोमयागादिर्वैदिकः । देवयागो मातृकादि- २५
देवत्यो लौकिको यागः । बृहस्पतिः—
" नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् । नाशौचं सूतके प्रोक्तं शावे वाऽपि तथैव च"॥ इति ।
चंद्रिकायाम् " यद्यपि नाशौचमिति सामान्यशब्दात्सद्यःशौचस्याप्यपवादः प्रतिभाति तथापि
स्मृत्यंतराविरोधार्थं तद्व्यतिरिक्तस्याशौचस्यापवाद इत्यवगतव्यम् " ॥ इति ।
पैठीनसिः— ३०
" विवाहकाले यज्ञेषु यात्राया तीर्थकर्मणि । न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् " ॥
श्राद्धादिमध्ये अघसंभवे । चंद्रिकायाम्—
" अथ देवप्रतिष्ठाया गणयागादिकर्मणि । श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत् ॥
" विवाहे कन्यकायाश्च लाजहोमादिकर्माणि " ॥ इति । विज्ञानेश्वरीये—
" नित्यमन्नप्रदस्यापि कृच्छ्रचांद्रायणादिषु । निर्वृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥ ३५

---

१ खग-दुर्ग

"गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित्" ॥ इति। षडशीतौ—
"सूतकाद्याकुलमागत्य मनेकाहं तु यद्व्रतम्। कायिकं कर्म कुर्वीत न तु दानार्चनं व्रतम्॥
"सूतकानंतरे त्वाद्धि तत्कर्तव्यमतंद्रितैः" ॥ इति। विष्णुः (२२।५२)—"न देवप्रतिष्ठोत्सव-विवाहेषु न देशविभ्रमे नात्ययपि च कष्टायामाशौचं न व्रतिनां व्रते न सत्रिणां सत्रे" इति।
५ दक्षः (३।५)—
"राजर्त्विग्दीक्षितानां च बाले देशांतरे तथा। व्रतीनां सत्रिणां चैव सद्यःशौचं विधीयते" ॥ इति।
चंद्रिकायाम्—
"नरेंद्रमंत्रिव्रतिनां विवाहोपप्लवादिषु। सद्यःशौचं समाख्यातं कांतारापदि संगते" ॥
संग्रहेऽपि—
१० "कृच्छ्रदेवोत्सवश्राद्धदानहोमजपाध्वरे। प्रारब्धे तत्प्रवृत्तानां सद्यःशौचमथान्ते" ॥ इति।
अत्र स्नानं शावविषयम्। न तु प्रसवविषयम्। तत्र पितृव्यतिरिक्तानां स्नानस्याविधानात्।
अत्र प्रारंभशब्दार्थः स्मृत्यर्थसारे दर्शितः—
"आरंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः। नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥
"निमंत्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि। पाकारंभात्परं कर्तृन् दातृन्भोक्तृंश्च न स्पृशेत्" ॥ इति।
१५ 'श्राद्धे पाकपरिक्रिया' इति एतत्करणकालसंकल्पात्परमारब्धपाकक्रियाविषयम्।
तत्पूर्वं सिद्धपाकविषयेऽपि यमः—
"पाकोपकल्पनादूर्ध्वं सूतके मृतकेऽपि वा। कारयेच्छ्राद्धमन्येन पक्वान्नं परिवेषयेत्" ॥ इति।
कारयेत्कुर्यादित्यर्थः। अत्र केचिदाहुः—"संकल्पात्पूर्वमशौचे प्राप्ते कर्ता सकल्पविधिना श्राद्ध-मन्यैः कारयेत्" इति एतत्स्मृतिचंद्रिकादिविरोधादुपेक्ष्यम्। यत्तु—
२० "ऋत्विगादिर्यदा कुर्याद्धोमं श्राद्धक्रियां क्वचित्। उदर्के त्वेव कुर्वीत कर्तुः स्यादशुभं फलम्" ॥ इति
तत्पिंडपितृयज्ञहोमविषयं श्रौबालादिकर्तृकश्राद्धक्रियाविषयं च। "अध्वर्युरपरेणाग्निं दक्षिणं जान्वाच्य मेक्षण उपस्तीर्य" इत्यापस्तंबादिस्मरणात्। अत आशौचेऽन्येन श्राद्धं न कारयितव्यम्।
ब्राह्मे—
"तावद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे। स्नानं त्ववभृथो यावत्तावत्तस्य न विद्यते॥
२५ "गृहीतमधुपर्कस्य यजमानस्य चर्त्विजाम्। पश्चात्पतितमाशौचं न भवेदिति निश्चयः॥
"कुर्वतां यज्ञियं कर्म याजकानां तथैव च। निमंत्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि॥
"निमंत्रितस्य विप्रस्य स्वाध्यायनिरतस्य च। देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्" ॥ इति।
अत्र चंद्रिकायाम्—"दीक्षितस्य यज्ञसंकल्पानंतरं ऋत्विजां मधुपर्कग्रहणानंतरमाशौचं न विद्यते। संभृतसंभारस्य तु पूर्वक्षणेऽपि नाशौचम्। 'यज्ञार्थं बहुसंभारसंभृतस्यापि नो भवेत्'
३० इति स्मृतेः। अयमर्थः। यज्ञार्थं संभृतसंभारस्य कस्मिंश्चिदसमस्तयज्ञादावनुष्ठानार्थस्य अनुष्ठानाग-संकल्पस्यापि आशौचापगमादूर्ध्वं वसंतादिनियतकर्मकालासंभवे तस्मिन्वर्षे करिष्यमाणयज्ञादि-क्रमविषये यज्ञसंकल्पात्पूर्वक्षणे शुद्धिर्भवति" ॥ इति। यज्ञग्रहणं प्रतिष्ठादेरुपलक्षणार्थम्। अत
एव विष्णुः (२२।५२)—"देवताप्रतिष्ठाविवाहयोः पुनः संभृतयोः" इति। एतदुक्तं भवति।
यावति काले संभृतबहुसंभारवारणं कर्तुं शक्यते तावत्कालमध्ये प्रतिष्ठाविवाहांगभूतकालांतरं यत्र
३५ न लभ्यते तद्विषये तत्संकल्पात्प्रागपि कर्तुराशौचं न भवति" इति।

**स्मृत्यंतरे**–"यज्ञे संभृतसंभारे विवाहे श्राद्धकर्मणि" ॥ इति । अत्र **चंद्रिकायाम्**—
संभृतसंभार इति सर्वत्र संबध्यते । इदमपि **विष्णुवचनसमानविषयम्**। 'श्राद्धे सभृतसंभार' इत्येतत्तु पक्वद्रव्याभिप्रायम् । पक्वद्रव्योपकल्पनसकल्पनसंकल्पयोर्मध्ये सूतके मृतके वा समुत्पन्ने अनंतरोक्त-सद्यःशौचविधिबलात्तस्मिन्नेव काले श्राद्ध कर्तव्यम् । आमद्रव्योपकल्पनसंकल्पयोर्मध्ये सूतके मृतके वा जाते अमावास्यायामाशौचापगमादनन्तरं वा कर्तव्यम् । ५
" श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके । अमायां तु प्रकुर्वीत शुद्धाविके मनीषिणः ॥
" देये पितॄणां श्राद्धे तु अतरा मृतसूतके । आशौचानंतर कार्यं तन्मासीन्दुक्षयेऽपि वा ॥
" कार्ये प्रत्याब्दिके श्राद्धे अतरा मृतसूतके । आशौचानतरं कार्यमिति वासिष्ठभाषितम् "॥
इति **गोभिलवसिष्ठादिस्मरणात्** । यत्तु **स्मृत्यंतरे**—
" वर्षश्राद्धे तु सप्राप्ते पित्रोराशौचसंभवे । तदानीमशुचिर्न स्यात्कुर्याच्छ्राद्ध मृतेऽहनि " ॥ इति । १०
यदपि—
"मासिकान्याब्दिकं पित्रोरशुद्धोऽप्यौरसः सुतः । कुर्यादेव तिथिप्राप्तमिति **शातातपो**ऽब्रवीत्" ॥ इति तत्संकल्पितश्राद्धविषयम् । श्राद्धदिने पाके निर्वृत्ते कुतपकाले 'अद्य पार्वणविधानेन श्राद्धं करिष्ये' इत्यारभात्परमागते आशौचे कर्ता कुर्यादेवेत्यर्थः । तथा **चंद्रिकायाम्**—
" अद्य श्राद्धं करिष्य इति संकल्पात् पर तत्पूर्वक्षणे चारब्धे पाके कर्त्तुः शुद्धिः । अद्य श्राद्धं तत्र १५ भवता भोक्तव्यम् इति निमन्त्रिते ओं तथेति प्रतिश्रुते निमन्त्रितस्य निमंत्रणादूर्ध्वमाशौचे प्राप्ते तस्य शुद्धिः । निमत्रणात्प्राग्विप्रस्याशौचे प्राप्ते पूर्वदिने निश्चितमपि परित्यज्य विप्रांतरमामन्त्र्य श्राद्धं कर्तव्यमिति सद्यःशौचविधानाद्भोजनात् पूर्व स्नात्वैव भुजीत कर्तापि स्नात्वैव कर्म कुर्यात् "।
तथा **विज्ञानेश्वरीये**—
" यज्ञे संभृतसंभारे विवाहे श्राद्धकर्मणि । तथा चौलादिसस्कारे सद्यःशौचं विधीयते " ॥ इति । २०
**स्मृत्यंतरे** च—
" आशौचं कर्ममध्ये तु शावं सूतकमेव वा । आपतेद्यदि सर्वेषा सद्यःशौचं विधीयते ॥
मातापित्रोश्च मरणे पुत्रस्य मरणे तथा " ॥ इति ।
एव च श्राद्धे पाकसकल्पाभ्यां पूर्वमघागमे आशौचानंतरदिने तदसंभवे अमायां वा कुर्यात् । पाकानंतरं सकल्पात् पूर्वपरं वा अघागमे तास्मिन्नेव काले कुर्यात् । द्वितीयवरणानतर भोक्तुराशौच २५ नास्ति । कुतपकालवरणात्पूर्वमघागमे अन्यं वरयेत् । ततः परमघागमे तमेव भोजयेत् । **यत्तु**—
" भोजनार्थे तु सभुक्ते विप्रैर्दातुरघागमः । यदा कचित्तदोच्छिष्टशेष त्यक्त्वा समाहितः ॥
" आचम्य परकीयेन जलेन शुचयो द्विजाः " ॥ इति । एतत् श्राद्धव्यतिरिक्तविषयम् । यागमध्ये अघागमे अवभृथांतरमनुष्ठेयम् ।

**विवाहमध्ये आशौचसंभवे** । विवाहे नांदीमुखात्परमघागमे शेषहोमान्तस्य कर्मणा विवाहशब्द- ३० वाच्यत्वेन कर्मैक्याच्छेषहोमांतं साङ्गं कर्मानुष्ठेयम् । तथा च **दक्षः** ( ६–१८ )—
" यज्ञकाले विवाहेषु देवयागे च निष्कृतौ । हूयमाने तथैवाग्नौ नाशौचं न च सूतकम् " ॥ इति ।
विवाहेष्विति बहुवचनं शेषहोमांतकर्माभिप्रायम् । **ब्राह्मे**—
" विवाहकाले कन्याया लाजहोमादिकर्मणि । प्रायश्चित्तपरस्यापि स्वाध्यायनिरतस्य च " ॥

सद्यःशौचमिति प्रकृतम्। लाजहोमादीत्यादिशब्देन शेषहोमांतं कर्मजातमुच्यते। स्वाध्यायोऽत्र वेदपारायणम्। तथा च वेदपारायणं प्रकृत्य बोधायनः—"प्रणवव्याहृतिपूर्वकं वेदादिमारभ्य सततमधीयीत नांतरा विरमेत्। व्याहरेद्वा नास्यांतरा जननमरणाशौचम्"॥ इति। विवाहमध्ये पित्रोर्दम्पत्योर्मरणे स्मृत्यंतरे—

५ "उद्वाहांकुर आरब्धे मातापित्रोर्मृतिर्यदि। तत्काले सकलं कृत्वा शेषहोमं समाचरेत्॥
"विवाहशेषमध्ये तु दंपत्योर्मरणं यदि। कर्मशेषं ततः कृत्वा पश्चाद्दहनमाचरेत्"॥ इति।

शेषहोमांतं कर्म तदानीमेव परिसमाप्य दहनं कुर्यादित्यर्थः।

दीक्षितस्य दीक्षामध्ये मातापितृमृतौ।

दीक्षितस्य दीक्षामध्ये मातापितृमृतिविषये संस्कारमात्रं कृत्वा यज्ञं समापयेदित्याह वृद्धगार्ग्यः—

१० "ज्येष्ठस्य तु क्रतोर्मध्ये मातापित्रोर्मृतिर्यदि। संस्कृत्य शालामागत्य यज्ञशेषं समापयेत"॥

शांडिल्यः—

"दीक्षितोऽप्येकपुत्रस्तु मातापुत्रोर्मृतिर्यदि। दीक्षारूपं निधायात्र संस्कुर्यान्नोदकाप्लवः॥
"संस्कृत्य शालामागत्य यज्ञशेषं समापयेत। पावयेद्दर्भपुंजीलैर्दीक्षारूपं यथाविधि"॥ इति।

पावयेत्। दीक्षाविध्युक्तमंत्रैरिति शेषः। एकपुत्र इति विशेषस्मरणात् पुत्रांतरसद्भावे तेनैव कार्यते।

१५ "ज्येष्ठस्य तु क्रतोर्मध्ये" इति स्मरणात्। ज्येष्ठेनैव कार्यमित्यपि प्रतीयते। अत्र यथाशिष्टाचारं व्यवस्था। विवाहमध्ये अवगमे भोक्तादिनियमः षट्त्रिंशन्मते विशेष उक्तः—

"विवाहोत्सवयज्ञेषु अंतरा मृतसूतके। परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः"॥

परैः आशौचरहितैर्दातव्यं न त्वाशौचिजनैः। भोजनार्थं वृत्तैर्ब्राह्मणैर्भोक्तव्यं चेत्यर्थः। तत्रैव—

"भुंजानेषु तु विप्रेषु अंतरा मृतसूतके। अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः"॥ इति।

२० संग्रहेऽपि—

"श्राद्धोत्सवादौ भुक्त्यंते पाकादौ चापसंभवे। परैर्देयं च भोक्तव्यं न दोष इति निश्चयः"॥ इति।

क्रतुरपि—

"विवाहोत्सवयज्ञादिष्वंतरा मृतसूतके। शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत"॥ इति।

आशौचिजनैर्दातृभोक्तृभांडादिस्पर्शो न कर्तव्य इत्यर्थः। तथा च विष्णुः—

२५ "अस्पृष्टाना च भांडानां दशाहे शुद्धिरिष्यते। द्रव्याणां चाविसंस्पर्शे विना मांसं समुत्सृजेत॥
"भुक्त्वा स्पृश्यैस्तथाशौचिकेशर्कीटैश्च दूषितम्। कुशोदुंबरबिल्वाद्यैः पनसांम्बुजपत्रकैः॥
"शरपुष्पीसुवर्चादिकाथं पीत्वा विशुध्यति"॥ इति।

आशौचिदर्शनं वर्ज्यमित्युक्तं विष्णुपुराणे (३।१६–१३)—

"उदक्यासूतिकाशौचिमृताहारैश्च वीक्षितं। श्राद्धे सुरा न पितरो भुंजते पुरुषर्षभ"॥ इति।

३० अवगमात्प्राक्संकल्पितद्रव्याणां दोषाभावः। विशेषमाह बृहस्पतिः—

"विवाहोत्सवयज्ञादिष्वंतरामृतसूतके। पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः"॥

इदं देवार्थं इदं पित्रर्थं इदं ब्राह्मणार्थमित्यवगमात् प्रागेवोद्दिष्टपदार्थेष्वत्रं नास्तीत्यर्थः।

क्रतुरपि—"पूर्वसंकल्पितद्रव्यं दीयमानं न दुष्यति" इति। दक्षोऽपि—

"यज्ञोत्सवे व्रते श्राद्धे सूतके समुपागते। पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः"॥ इति।

३५ एतेन श्राद्धादौ आरंभात्परमवसभवे पूर्वसंकल्पितामद्रव्यदानं न दोषः। तदर्थमेव पक्वस्य दानं च न दोषः।

यज्ञादौ प्रागुद्दिष्टमामद्रव्यं परैः पाचयित्वा दातव्यम् । 'परेरन्नं दातव्यम्' इति वचनात । प्रारब्धे भोजने अघागमे दातुः न स्नानशुद्धिविधानेऽपि शेषमन्नं परैर्देयमिति वचनात अन्नं परैर्देयमिति सिद्धम् ।

भृगुपातादिना मृतौ पराशरः ( ३।१२ )—

" भृग्वग्निमरणे चैव देशांतरमृते तथा । बाले प्रेते च संन्यस्ते सद्यः शौचं विधीयते " ॥ इति ।

भृगुः प्रपातः । अग्निः प्रसिद्धः । भृग्वग्निमरणं प्रमादादिना दुर्मरणमात्रोपलक्षणम् । तन्निमित्तमरणे सति तत्संबंधिनां सद्यःशौचम् । असपिंडे च देशांतरमृते सद्यःशौचम् । बालोऽत्राकृतनामा । तस्मिन्मृते सति तत्संबन्धिनां मरणनिमित्तं सद्यःशौचमित्यर्थः । जननिमित्तमस्त्येव ।

" नृतिमध्ये मृते बाले न शावं सूतकं भवेत " इति स्मृतेः ॥ मनुरपि ( ५।७७ )—

" बाले देशांतरस्थे च पृथक्पिंडे तु संस्थिते । सवासा जलमाप्लुत्य सद्य एव विशुध्यति " ॥ इति ।

देशांतरस्थ इत्यसपिंडविशेषणम् ।

संन्यस्तादिमृतौ । संन्यस्ते मृते सति तत्सपिंडानां सद्यःशौचम् । अत्र व्यासः—

" नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् । नाशौचं कीर्तितं सद्भिः पतिते च तथा मृते" ॥

याज्ञवल्क्यः—

" देशांतरमृतिं श्रुत्वा क्लीबे वैखानसे यतौ । मृते स्नानेन शुध्यति गर्भस्रावे च गोत्रिणः " ॥

वैखानसाः वानप्रस्थाः । संग्रहेऽपि—

" आद्ययोराश्रमिणोर्नाशे वर्णोक्तं त्वन्ययोर्मृतौ । सद्यः शौचं गृहिण्येव सद्योऽन्येषु सदा मिथः "॥ इति ।

आद्ययोर्ब्रह्मचारिगृहस्थयोर्मृतौ स्वस्वजात्युक्तमेव भवति । अन्ययोर्वानप्रस्थसंन्यासिनोर्मृतौ सद्यःशौचम् । इत्येव प्रकारेणाशौचं गृहिणि गृहस्थविषये । अन्येषु ब्रह्मचारिवानप्रस्थयतिषु परस्पर सर्वदा सद्यः-शौचम् । गृहस्थमृतौ ब्रह्मचारिवानप्रस्थयतीनां, ब्रह्मचारिमृतौ ब्रह्मचारिवानप्रस्थयतीनां, वान-प्रस्थमृतौ वानप्रस्थब्रह्मचारियतीनां, यतिमृतौ यतिब्रह्मचारिवानप्रस्थानां सपिंडानां परस्परं सद्यः-शौचं भवतीत्यर्थः ।

यत्तु स्मृत्यंतरम्—

" सर्वसंगनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नाशौचं नोदकक्रिया " ॥ इति

तत्र नाशौचमिति दशाहाद्यभिप्रायम् । स्नानमात्रमस्त्येव । सद्यःशौचस्य विहितत्वादिति चंद्रिकायाम् ।

विष्णुः—

" दानादौ ग्रहणे सद्यः पुत्रजन्मनि चापदि । निष्कृतौ तीर्थयात्रायां वेदपारायणे व्रते ॥

"नामकर्मादिसंस्कारे प्रारब्धे सद्य इष्यते" ॥ नामकर्मादित्यादीशब्देन स्मशानांताः संस्कारा गृह्यंते ।

आशौचिनां ग्रहणस्नानविधिः । वृद्धवसिष्ठः

" मृते च सूतके चैव न दोषो राहुदर्शने । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते" ॥ अंगिराः—

" सर्वे वर्णाः सूतके च मृतके राहुदर्शने । स्नात्वा श्राद्धं प्रकुर्वीरन् दानं शाठ्यविवर्जिताः" ॥ इति ।

जामातृदौहित्रभागिनेयादिमृतौ संग्रहे—

" श्वश्रूश्वशुरतत्पुत्रयाज्याचार्यसुतर्त्विजाम् । उपाध्यायस्य सद्यः स्यान्मृतौ तत्प्रतियोगिनाम्" ॥ इति ।

श्वश्र्वादिप्रतियोगिनां मृतौ श्वश्र्वादिना सद्यःशौचमित्यर्थः ।

वृद्धयाज्ञवल्क्यः—

" मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते । स्याले च तत्सुते वाऽपि सद्यःस्नानेन शुध्यति " ॥

मित्रविषये सद्यःशौचमसन्निधौ। सन्निधौ तु दिनं वक्ष्यते। दौहित्रभागिनेयमृतौ सद्यःशौचं विदेश-स्थानुपनीतविषयम्। प्रत्यक्षे व्रतात्प्रागपि पक्षिणीविधानात्। स्याले च स्नानं परोक्षे।

**राष्ट्रक्षोभादिना मृतौ पराशरः—**

"दुर्भिक्षे राष्ट्रसंभ्रांतावापदां च समुद्भवे। उपसर्गमृतौ चैव सद्यःशौचं विधीयते"॥

५ उपसर्गमृतौ क्षामक्षोभाद्युपप्लवमृतौ सपिंडानां सद्यःशौचमित्यर्थ.। **ब्रह्मपुराणे—**

"दुर्भिक्षे प्राणरक्षार्थं कृतयत्नस्य देहिनः। राष्ट्रभ्रंशस्थितस्यापि पुत्रदारांश्च रक्षितुम्॥

"विभ्रष्टस्य स्वदेशाच्च अन्यदेशपरिग्रहे। ग्रहोपतापे घोरे च दारुणायामथापदि॥

"ग्रहोपतापशांत्यर्थं क्रियमाणे च कर्मणि। शीतवातातपैर्यत्र ह्यथैव मरणं भवेत्॥

"तत्रोपसर्गात्त्वं देह रक्षमाणस्य किं भवेत्"॥ अवमिति प्रकृतम्।

१० **शिल्पिदासवैद्यराजादीनां सद्यःशौचम्। बृहस्पतिः—**

"शिल्पिनः कारवो वैद्या दासीदासाश्च नापिताः। राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्तिताः॥

"सव्रतः सत्रपूतश्च आहिताग्निश्च यो द्विजः। राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः॥

"उद्यतो निधने दाने आर्तो विप्रो निमंत्रितः। तथैव ऋषिभिर्दृष्टं यथाकालेन शुध्यति"॥ इति।

शिल्पिनश्चित्रकाराद्याः। कारवः सूपकारप्रभृतयः। वैद्याश्चिकित्सकाः। यस्य च पुरोहितादेरनन्य-

१५ साध्यमंत्राभिचारादिकर्मार्थमाशौचाभावमिच्छति तस्य तत्कर्मण्याशौचाभावः। निधने संग्रामे। दाने अन्नादिदाने। चोद्यतः कृतोपक्रमः। आर्तः आपदं प्राप्तः। निमंत्रितः श्राद्धादौ। यथाकालेन दशरात्रादिना। तथा स्नानेनेव शुध्यतीत्यर्थः। अत्र **व्यासः—**

"शिल्पिनश्चित्रकाराद्याः कर्म यत्साधयंत्यलम्। तत्कर्म नान्यो जानाति तस्माच्छुद्धा स्वकर्मणि॥

"सूपकारेण यत्कर्म करणीयं नरेष्वपि। तदन्यो नैव जानाति तस्माच्छुद्धः स सूपकृत्॥

२० "चिकित्सको यत्कुरुते तदन्येन न शक्यते। तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः॥

"दास्यो दासाश्च यत्किंचित् कर्म कुर्वंति लीलया। तदन्ये न क्षमाः कर्तुं तस्मात्ते शुचयः सदा॥

"राजा करोति यत्कर्म स्वप्नेऽप्यन्यस्य तत्कथम्। एवं सति नृपः शुद्धः संस्पर्शे मृतसूतके॥

"यत्कर्म राजभृत्याना हस्त्यश्वगमनादिकम्। तन्नास्ति यस्मादन्यस्य तस्मात्ते शुचयः स्मृताः"॥ इति।

दास्यादीनां स्वामिकर्मण्येव सद्यःशौच स्वकर्माधिकारस्तु मासावधिक एव। स्वामिशौचे न स्पृश्यत्वम्।

२५ "दासी दासश्च सर्वे वै यस्य वर्णस्य यो भवेत्। तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकम्"॥

इत्यंगिरःस्मरणात्। **शातातपः—**

"मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च। स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः"॥ इति।

**स्मृत्यंतरे** तु—"सद्यःस्पृश्यो गर्भदासो भक्तस्तु स्यात् त्र्यहाच्छुचिः" इति। **मनुः** (५।९२–९३)—

"न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम्। ऐंद्रस्थानमुपासीना ब्रह्मभूता हि ते सदा॥

३० "राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते। प्रजानां परिरक्षार्थमासनं चात्र कारणम्"॥ इति।

सत्रिणां प्रारब्धयज्ञानाम्। तेऽपि खल्वैंद्रस्थानमुपासीनाः देवतायजनपरत्वात्। तथा च **श्रुतिः—**

"एष वा एतर्हींद्रो यो यजते" इति। ब्रह्मभूताः धर्मस्वरूपिणः। माहात्मिके महात्मा इंद्रः। तस्येदं महात्मिकम्। तस्मिन् स्थाने आसीनस्येति शेषः।

राज्ञ आशौचाभावमुपपादयति **स एव** ( ५।९५–९६ )—

" सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्यर्यमस्य च । अष्टानां लोकपालानां वपुर्धारयते नृपः ॥
"लोकेशाधिष्ठितो राजा नास्याशौचं विधीयते । शौचाशौचं हि मर्त्यानां लोकेशप्रभवेऽप्ययम्" ॥ इति ।
**युद्धमरणादौ स एव** ( ५।९७, ९४ )—
" उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च । सद्यः सतिष्ठते धर्मस्तथाशौचमपि स्मृतम् ॥ ९७ ॥
" डिम्भाहवहतानां च विद्युता पार्थिवेन च । गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः " ॥ ९४ ॥　५
ब्राह्मणगवाद्यर्थे मृतो इति । डिम्भो बालः । **बृहस्पतिः**—
" शस्त्रेणाभिमुखो यस्तु वध्यते क्षत्रकर्मणा । यज्ञः सतिष्ठते तस्य सद्यःशौचं विधीयते " ॥ इति ।
**ब्रह्मपुराणे**—
" ब्राह्मणार्थे गवार्थे वा भूम्यर्थे वा वियुज्यते । राज्ञो वा राजभृत्यस्य सत्वोद्रिक्तस्य संगरे ॥
" संमुखस्य हतस्यापि सद्यःश्राद्धक्रिया भवेत् " । यत्तु **स्मर्यते**—　१०
" ब्राह्मणार्थे विपन्ना ये योषिता गोग्रहेऽपि वा । आहवेऽभिहतानां च एकरात्रमशौचकम् " ॥
इति तत्कालान्तरमृतिविषयम् । तथा च **संग्रहे**—
" गोविप्रस्त्रीकृते प्रेते राज्यार्थे वा हते युधि । शौचं चोर्ध्वक्रियाः सद्यो यद्यनिच्छास्त्यघं मृतौ ॥
" एकरात्रं भवेद्युद्धे क्षतैः कालान्तरे मृते " ॥ इति " यद्यनिच्छास्त्यघ मृतात् " इति मृतौ
यदीच्छाभावः तदापि दुर्मृतत्वात्सद्यःशौचमित्यर्थः । **याज्ञवल्क्यः** ( प्रा २७ )—　१५
" महीपतीनां नाशौचं हतानां विद्युता तथा । गोब्राह्मणार्थे सग्रामे यस्य चेच्छति भूमिपः" ॥ इति ।
**गौतमः** (१४।८–११)—"गोब्राह्मणहतानामन्वक्षम् । राजक्रोधाच्च । युद्धे । प्रायानाशकशस्त्राग्निविषो-दकोद्बन्धनप्रपतनैश्चेच्छताम्" इति । गवार्थे ब्राह्मणार्थे वा हतानां ये सपिण्डाः तेषामाशौचमन्वक्षं यावदन्वीक्ष्यते शवस्तावदेव । संस्कारानन्तरं स्नात्वा शुध्येयुः । एवं गोब्राह्मणयोरन्यतरेण यो हतः तत् ज्ञातीनामन्वक्षमाशौचम् " गवार्थे ब्राह्मणार्थे वा हतानां गोभिर्हतानां ब्राह्मणैर्वा सद्यःशौचम् " २०
इति **स्मरणात्** । आयुद्धमायोधनम् । प्रायो महाप्रस्थानं अशनमाशः स एवाशकः । सत्येव भोज्ये क्रोधादिना भोजननिवृत्तिरनाशकः इत्यर्थः । इच्छतामित्युक्तत्वात् प्रमादमृतानामाशौचोदकसद्भवः ।
तथा **चांगिराः**—
" यदि कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया " ॥ इति
**बुद्धिपूर्वमरणे वधे प्रायादिमरणे च** । बुद्धिपूर्वमरणे **पराशरः**—　२५
" बाले देशान्तरस्थे च पतिते च यतौ मृतौ । सद्यःशौचं तथेच्छातो जलाग्न्युद्बन्धनादिषु " ॥
**ब्रह्मपुराणे**—
" शृंगिदंष्ट्रिनखिव्यालविषवन्हिमहाजलैः । सुदूरात्परिहर्तव्यैः कुर्वन् क्रीडां मृतस्तु यः ॥
" नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता । गृहीता ये च राज्ञा वै चौर्यदोषेण कुत्रचित् ॥
" परदारान्हरंतश्च रोषात्तत्पतिभिर्हताः ।　३०
" असमानैश्च संकीर्णैश्चंडालाद्यैश्च विग्रहम् । कृत्वा तैर्निहतास्तद्वच्चंडालादीन्समाश्रिताः ॥
" क्रोधात् प्रायं विषं वन्हि शस्त्रमुद्बन्धनं जलम् । गिरिवृक्षप्रपातं वा ये कुर्वंति नराधमाः ॥
" ब्रह्मदण्डहता ये च ये चैव ब्राह्मणैर्हताः । महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥
"पतितानां न दाहः स्यान्नाशौचं नास्थिसंचयः । न चाश्रुपातः कर्तव्यो ह्युदकस्य क्रिया न च" ॥ इति ।

हारीतः—"पापंडानाश्रितानामग्न्याशिना नाग्न्याशौचम्" इति। पापंडाः वेदबाह्याः। अनाश्रिताः अनाश्रमिणः। स्मृत्यंतरे—

"चंडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतानलात्। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥
"ये वेश्यापतयो विप्रा ये च शूद्रान्नभोजनाः। ये चान्ये पापकर्माणस्तेषां भस्मांतसूतकम्"॥

५ दक्षः (६।१९)—

"व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा। क्रियाहीनस्य मूर्खस्य नास्तिकस्य विशेषतः॥
"व्यसनासक्तचित्तस्य पराधीनस्य सर्वदा। नित्यस्नानविहीनस्य भस्मांतं सूतकं भवेत्"॥ इति।

दाहपर्यंत सूतकमित्यर्थः। संवर्त्तः—

"क्रियाहीनस्य मूर्खस्य कदर्यस्य तथैव च। ऋणग्रस्तस्य दुष्टस्य भस्मातं सूतकं भवेत्"॥

१० अत्र विज्ञानेश्वरः—"दर्पादिना चंडालादीन्हंतुं गतो यस्तैर्मारितस्तस्य 'सर्वेन स्नानमान सोपायेन' इति विध्यतिक्रमनिमित्तपिंडोदकाशौचादिनिषेधः। न तु प्रमादामृतस्य" इति।

ब्राह्मे—"प्रमादादेव निःशङ्कमकस्मादपि यो नरः। शृंगिदंष्ट्रिनखिव्यालविषविद्युज्जलाग्निभिः॥
"चंडालैर्वाऽथ चौरैर्वा निहतो यत्र कुत्रचित्। तस्य दाहादिकं कुर्यात्तस्मान्न पतितस्तु सः"॥ इति।

संग्रहे—

१५ "अन्वक्षं शृंगिचोरांत्यविद्युच्छस्त्रविषाग्निभिः। मायानशनतोयाग्निपूर्ते त्वामात्यतितः॥
"प्रमादाद्दुर्मृतौ सद्यः क्रियाशौचे समाचरेत। वैधे मायादिमरणे त्र्यहं सद्यश्च तत्क्रियाम्"॥ इति।

शृंगिचोरादिभिः कामात्प्रवृत्तितः बुद्धिपूर्वप्रवृत्त्या मृते सति तत्सापिंडानामन्वक्षं भस्मांतमाशौचम्। प्रमादाद्दुर्मृतौ अबुद्धिपूर्वमरणे सद्यः अविलंबेन क्रियाशौचे कुर्यात। दाहादिनिपिंडदानः प्रेतक्रियाश्च आशौचं चानुतिष्ठेदिति यावत्। वैधे शास्त्रचोदिते मायादिति मरणे त्र्यहमाशौच तत्क्रियाः प्रेतक्रियाश्च

२० सद्यस्तदेव कुर्यात। एतदुक्तं भवति—"अन्यतानुष्ठानाशक्तजीर्णशारीरिकित्स्यरोगाणां तु थार्जाविना आग्निजलप्रवेशभृगुपतनानि महापथगमनं वा गच्छेत। न पृथार्जातितुमिच्छेत्" इति वृद्धगार्ग्यादिवचनविहिते बुद्धिपूर्वाग्निप्रवेशादिमरणे त्र्यहम। तदानीमेव प्रेतकृत्यं च कुर्यादिति।

गार्ग्यः—

"दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमान्यदि। प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा॥

२५ "अगाधतोयराशिं वा भृगोः पतनमेव वा। गच्छेन्महापथं वाऽपि तुषारगिरिमादरात्॥
"उत्तमानाप्नुयाल्लोकानात्मघाती भवेत्क्वचित्॥
"वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः॥
"तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः। तृतीये सूतकं दत्वा चतुर्थे श्राद्धमाचरेत्"॥ इति।

वसिष्ठः—

३० "वाराणस्यां मृतो यस्तु प्रत्याख्यातभिषक्क्रियः। काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः॥
"अविमुक्तस्थितस्तस्य कर्णमूलगतो हरः। प्रणवं तारकं ब्रूते नान्यथा कस्यचित्क्वचित्॥
"प्रयागवटशाखायां देहत्यागं करोति वा"॥ मनुः—
"यः कामतो महापापं नरः कुर्यात्कथंचन। न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते"॥

इत्याघातमननेन यत्र शास्त्रतोऽनुज्ञायते तत्र त्र्यहमाशौचम्। एतच्चात्महननाभ्यनुज्ञानं युगांतरविषयम्।
" प्रायश्चित्तविधानं च विप्राणां मरणांतिकम्। भृग्वग्निपतनं चैव वृद्धादिमरणं तथा॥
" कलौ युगे त्विमान् धर्मान्वर्ज्यानाहुर्मनीषिणः "॥ इति कलौ निषेधस्मरणात्। संग्रहे—
" षट्पापटपतितप्रव्रज्यासिमोघजाः। स्वैरिण्यनाश्रमिस्तेना गर्भभर्त्रात्मघातिनः॥
" नाशौचार्हास्तदा तूष्णीं दाहाः पश्चात्तु भक्षिते। दुर्मृता वत्सराते वा षण्मासाते त्र्यहाः क्रियाः॥ ५
" त्र्यहं चाघमिलाहस्य नारायणबलिर्भवेत् "॥ इति। प्रव्रज्यावासी सन्यस्य तद्धर्महीनः। मोघजः वृथाजातः क्रियागुणाः कस्यचिदर्थस्यासाधकः। स्वैरिणी कुलटा। एतच्च कुलटायाः सद्यःशौच स्वैरचारे। अनाश्रमिणः अधिकारे सत्यकृताश्रमविशेषपरिग्रहाः। गर्भघातिनः भर्तृघातिनः आत्मघातिनः। अत्र लिंगमविवक्षितम्। एतेषां मरणे सपिंडानामशौच नानुष्ठेयम्। तदानीं तूष्णीं दाहाः। पश्चाद्वत्सरेऽतीते षण्मासानन्तरं वा नारायणबलिं कृत्वा मन्त्रवद्दाहादिक्रियाः कार्याः। अत्राघं त्र्यहमित्यर्थः। १०
अत्र बृहस्पतिः—
" विषोद्बन्धनशस्त्रेण यः स्वात्मानं प्रमापयेत्। मृतोऽमेध्येन लेप्तव्यो नाग्निसंस्कारमर्हति "॥
अंगिराश्च—
" कामतो मरणं प्राप्तं आस्ये मतस्य निवेशयेत्। ब्रह्मघ्नसममित्याहुः काष्ठवद्दहनं भवेत् "॥
जाबालिः— १५
" पतितेऽनशने प्रेते विदेशस्थो शिशौ च न। पापटानाश्रितास्तेनभर्तृघ्न्यः कामगादिकाः।
" सुरापा आत्मत्यागिन्यो नाशौचोदकभाजिनः "॥ मनुरपि (५।८९)—
" पापटमाश्रितानां च चर्तीनां च कामतः। गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम् "॥
आपस्तंबः—
" व्यापादयेत्त आत्मानं स्वयमग्न्युदकादिभिः। विहितं तस्य नाशौचं नापि कार्योदकक्रिया "॥ २०
यमः—
" नाशौचं नोदकं नाश्रु न कुर्यात्प्रेतकर्म च। ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् "॥
ब्रह्मदंडः ब्रह्मशापः। कटधारणं प्रेतधारणम्।
आहिताग्निदुर्मरणे। आहिताग्नेर्दुर्मरणे पराशरः—
" वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे। पात्राणि तु दहेदग्नौ यजमाने वृथा हते॥ २५
" आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया। तेषामपि तथा गंगा तोयेऽवस्थापनं हितम्॥
" कृत्वाग्निमुदकं स्थानं दर्शनं वाहनं कथाम्। रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति "॥
स्नाननिषेधः प्रेतस्यैव। ज्ञातीनां सद्यःशौचविधानात्। अयं च संस्कारनिषेधो यावद्वत्सरम्।
तथा च षट्त्रिंशन्मते—
" गोब्राह्मणहतानां च पतितानां तथैव च। ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् "॥ इति। ३०
संवत्सरादूर्ध्वमपि नारायणबलिं कृत्वा कुर्यादित्याह व्यासः—
" ये मृताः पापमार्गेण तेषां संवत्सरात्परम्। नारायणबलिं कृत्वा कुर्यादूर्ध्वक्रियां द्विजः॥
" तत्र त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः। तृतीये तूदकं दत्वा चतुर्थे श्राद्धमाचरेत् "॥
अखंडादर्शे—
" अब्दांते वाऽथ षण्मासे पुनः कृत्वा तु संस्कृतिम्। त्रिरात्रमशुचिर्भूत्वा पिंडं कुर्यात्क्रियादिकम्"॥ ३५

सगोत्रः सपिंडः । असंनिहितदेशस्थसपिंडमरणेऽपि वत्सरादूर्ध्वं सद्यःशौचमुक्त दीपिकायाम्—

"पुरुषाणां सपिंडाना वर्षात् प्राक्तु मृते सति । वर्षादुपर्यवगते स्नानमाचमनं भवेत्" ॥ इति।

बालमरणे विशेषः स्मर्यते—

"अपर्याप्ते तु बालस्य मरणे समुपस्थिते। न स्नानमाचरेच्छ्रुत्वा पर्याप्ते तत्समाचरेत्"॥ इति।

**गर्भस्रावादिनिमित्ताशौचम्** । मातुर्गर्भस्रावादिनिमित्तमाशौचमाह पराशरः—　　५

"यदि गर्भो विपद्येत स्रवते चापि योषितः । यावन्मासस्थितो गर्भो दिनं तावत्तु सूतकम्"॥ इति। यदि गर्भस्रावपातो स्याता तदा यावत्सु मासेषु गर्भः स्थितस्तावन्माससंख्यासमदिन मातुः सूत्याशौचमित्यर्थः । इदं चतुर्थमासप्रभृत्या सप्तमात् । अर्वाक्तु त्रिरात्रं स्रावपातौ विविनक्ति स एव—

"आ चतुर्थाद् भवेत्स्रावः पातः पंचमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतक भवेत्"॥ इति।

सप्तममासप्रभृति मातुः प्रसवनिमित्तमाशौच दशाह भवतीत्यर्थः । याज्ञवल्क्यः (प्रा. २०)—　　१०

"गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम्" ॥ इति । मासतुल्या निशा इति चतुर्थमासमारभ्या सप्तमाद्वेदितव्यम् । मनुरपि (५।६५)—"रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति" इति। स्रवतिर्यद्यपि द्रवद्रव्यकर्तृके परिस्पन्दने प्रयुज्यते तथाप्यत्र द्रवाद्रवसाधारणरूपेऽधःपतने वर्त्तते ।

चतुर्थमासादर्वाक्तु यथावर्णाशौचमाह मरीचिः—　　१५

"गर्भस्रुत्या यथामासमचिरे तूत्तमे त्र्यहः । राजन्ये तु चतू रात्र वैश्ये पंचाहमेव तु ॥

"अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता" ॥ इति । अयमर्थः—अचिरे चतुर्थमासादर्वाचीने काले गर्भस्रुत्या यथामास नाशौचं किंतूत्तमे ब्राह्मणवर्णे त्रयो दिवसा मातुः शुद्धिहेतवः क्षत्रियवर्णे चतूरात्र मातुः शुद्धिकारण वैश्यवर्णे पचाहो मातुः शुद्धिहेतुः शूद्रवर्णस्याष्टाहेन शुद्धिरिति।

**स्मृतिरत्ने**—"यावन्मासत्रय तावत्त्र्यहाशौच विधीयते ॥　　२०

"षण्मासाभ्यतरं यावद्गर्भस्रावो भवेद्यदि । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥

"अत ऊर्ध्वं स्वजात्युक्तमाशौच तासु विद्यते"॥ इति षण्मासाभ्यन्तरं यावच्चतुर्थमासमारभ्येत्यर्थः।

**दीपिकायाम्**—

"स्रावपातावप्रसवो गर्भनाशास्त्रिधा स्मृताः । मातुर्मासत्रये स्रावे त्रिरात्रमशुचिर्भवेत् ॥

"चतुर्थादिषु मासेषु मासतुल्यमघं भवेत् । सप्तमादित्रिमासेषु सूतिकातुल्यता भवेत्" ॥ इति ।　२५

**दशकेऽपि**—

"मातुर्गर्भविपत्स्वघं त्रिदिवसं मासत्रयेऽतो यथामासाहं त्रिषुसूतिकाविधिरतः स्नानं पितुः सर्वदा ।

"ज्ञातीनां पतनादिजातमरणे पित्रोर्दशाहं सदा" इति । मासत्रये प्रथमे द्वितीये तृतीये वा मासि गर्भस्रावे मातुः त्रिरात्रमघ स्यात् । अतःपर मासत्रये चतुर्थपञ्चमषष्ठेषु मासेषु यथामासाहं माससमसंख्याकान्यहोरात्राणि अघं भवति । अतः पर मासषट्कादूर्ध्वं मातुः सूतिकाविधिः । ब्राह्मण्या दशरात्रमघं　३० भवति । सर्वदा स्रावपातयोः पितुः स्नानान्तमघम् । ज्ञातीना पतने स्नानान्तमघमित्यर्थः" ॥

**दीपिकायाम्**—"गर्भनाशादिसर्वेषु स्नानमेव पितुर्भवेत् ॥

"चतुर्थादित्रिमासेषु ज्ञातीनामाप्लवो भवेत् । पित्रोश्च भ्रातृबन्धूनां दशाहं स्यात्सुतोदये" ॥ इति ।

संग्रहेऽपि—

"त्र्यहं मासत्रये मातुर्गर्भस्रावे ततः परम्। मासतुल्यान्यहान्यूर्ध्वं षण्मासात्सूतिकाविधिः॥

"स्रावाद्येव पितुः स्नानमन्येषा पतनादि तत्। गर्भनाशश्चतुर्मासे स्रावः पातस्ततो द्वयोः"॥

स्रावादि पितुरेव स्नानं नान्यस्य। अन्येषां पितृव्यतिरिक्तानां तत्स्नानं पतनादीत्यर्थः॥

५ **वरदराजीये संग्रहेऽपि**—

"संपातात्पितुराप्लवस्त्रिदिवसं तस्मिन्कठोरस्य चेत्।ज्ञातेरप्यथ सप्तमादिषु पितृज्ञात्योर्दशाहं भवेत्"॥इति। अत्र **चन्द्रिकायां** विशेषः—अचिरगर्भस्रावे मातुरेवाशौचं न पित्रादिसपिण्डानाम्। तथा च **मरीचिः**—"स्रावे मातुस्त्रिरात्र स्यात्सापिण्डाशौचवर्णनम्"॥ इति। यत्तु **सुमन्तुनोक्तम्**—"गर्भमासतुल्या दिवसा गर्भस्रसने सद्यःशौचं च" इति अस्यार्थः—गर्भस्रंसने चतुर्थे मासि

१० गर्भस्रावे मातुश्चतूरात्रमाशौचं सपिण्डपुरुषस्य सद्यःशौचमिति।

**याज्ञवल्क्यश्च**—"मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः"। इति।

**वृद्धवसिष्ठोऽपि** "गर्भस्रावे मासतुल्या दिवसा स्त्रीणाम्। स्नानमात्रमेव पुरुषस्य ईषत्कठिनगर्भस्रावेतु त्रिरात्रम्" इति। एतत्तु चतुर्थमासजातगर्भस्रावविषयमिति व्यक्तम्। मासान्तरे ईषत्कठिनस्यैवा-संभवात्। अस्य वचनस्य तात्पर्यार्थः—चतुर्थे मृदुतया ईषत्कठिनतया वा गर्भस्रावे मातुश्चतूरात्र-

१५ माशौचम्। सपिण्डपुरुषस्य मृदुतया स्रावे सद्यःशौचम्। ईषत्कठिनतया स्रावे त्रिरात्रमाशौचमिति। पुरुषग्रहदत्तसपिण्डस्त्रीणां नाशौचम्। यत्तु **मरीचिना** सपिण्डस्त्रीपुंससाधारण्येन त्रिरात्रमुक्तम्। "पाते मातुर्यथामासं पित्रादीना दिनत्रयम्" इति तत्पञ्चमषष्ठमासविषय मासान्तरे गर्भपातासंभवात्। यत्तूक्तम् "सद्यःशौचं सपिण्डाना गर्भस्य पतने सति" इति तच्चतुर्थमासान्तर्गतमृदुरूपगर्भस्राव-विषयम्। तत्रैव **वृद्धवसिष्ठेन** सपिण्डपुरुषस्य सद्यःशौचविधानात्। स्रावे पातशब्दो मातुर्जठरा-

२० द्बहिर्निर्गमनगुणेन स्रावेण साम्याद्वर्तते। मुख्यार्थपरत्वे पूर्वोक्तवचनविरोधापत्तेरिति। एवं चतुर्थे मृदुतया स्रावे सपिण्डानां सद्यःशौचं ईषत्कठिनतया स्रावे त्रिरात्रमाशौचं सपिण्डपुरुषाणाम्। स्त्रीणां तु नास्ति। पञ्चमे षष्ठे च मासे स्त्रीपुंससाधारण्येन सपिण्डानां त्रिरात्रमाशौचमिति **चन्द्रिकायां** निर्णीतम्। **विज्ञानेश्वरीये** तु—"सद्यःशौचं सपिण्डानां गर्भस्य पतने सति" इति सपिडानां सद्यःशौचविधानं मृदुगर्भपतनविषयम्। यत्पुनर्वसिष्ठवचनम् (४।३४)—"ऊन-

२५ द्विवर्षके प्रेते गर्भपतने सपिडानां त्रिरात्रम्" इति तत्पंचमषष्ठयोः कठिनगर्भपतनविषयमिति। एतदेवाभिप्रेत्योक्त **शतके**—"पाते सद्यस्तु कठिने त्र्यह पित्रादिषु स्मृतम्" इति। पाते द्रवात्मके ज्ञातीनां सद्यःस्नानं कठिनपाते त्र्यहमित्यर्थः। **स्मृतिरत्ने**—

"स्रावे मातुस्त्रिरात्र स्यात्सापिंडाशौचवर्जनम्। पाते मातुर्यथामास पित्रादीनां दिनत्रयम्"॥ इति।

**स्मृत्यर्थसारे**—"चतुर्मासाभ्यंतरे गर्भनाशः स्राव उच्यते। तत्र स्रावे आद्यमासत्रये मातुस्त्रिरात्रमा-

३० शौचं। चतुर्थे चतूरात्रम्। सगोत्रसपिडानां सद्यःस्नानेन सद्यःशुद्धिः। पञ्चमषष्ठयोर्गर्भनाशः पाते उच्यते। पाते मातुर्गर्भमाससंख्यासमदिनमाशौचम्। सपिण्डानां त्रिरात्रं सप्तममासप्रभृतिप्रसव उच्यते। प्रसवे जननिमित्तमाशौच पूर्णं दशाहादिकं सर्वेषां यथावर्णं भवति। समानोदकाना त्रिरात्रम्" इति॥

**षडशीतौ** तु—

"त्रिदिनं त्रिषु मासेषु चतुर्थेषु चतुर्दिनम्। स्रावे तु मातुरेव स्याज्ञ ज्ञातीनां न वै पितुः॥

"पंचमे पचषष्ठे षड् दिवसाः पातसूतकम्। मातुस्त्र्यिमथान्येषां पितुश्च त्रिदिन समम्"॥ इति।

स्मृत्यंतरे—

" स्रावे चैव पितुः स्नान सपिडानां न विद्यते। चतुर्थे तु सपिडानां शुद्धिः सद्यो जलाप्लवात्॥

" पाते तेषा त्रिरात्र स्यात्पितुश्च भ्रातुरेव हि। प्रसवे जननाशौचं सपिढाना तु विद्यते॥

" सोदकाना तृतीयाश्च बाधवाना न चैव हि " इति। यत्तु यमेनोक्तम्—

" अदतजाते तनये शिशौ गर्भच्युते तथा। सपिढाना तु सर्वेषामहोरात्रमशौचकम् "॥ इति ५
तत्परोक्षविषयम्। सूतिकाशौचम्। सप्तममासप्रभृति सर्ववर्णस्त्रीणा स्वजात्युक्तमाशौचम्—

" अत ऊर्ध्वं प्रसूतौ तु दशाहः सूतकं भवेत।

" क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशेन तु। शुध्येत् शूद्रस्तु मासेन वर्णाशौचमिदं स्मृतम् "॥
इति स्मरणात्। एतच्च मातापित्रादिसाधारणाशौचाभिप्रायम्। यत्तु प्रचेतसोक्तम्—

" सूतिका सर्ववर्णाना दशाहेन विशुध्यति। ऋतौ तु न पृथक्स्त्रीणा सर्ववर्णेष्वयं विधिः "॥ इति १०
स्त्रीणा रजोदर्शने यस्त्रिरात्राशौचविधिः स सर्ववर्णेष्वविशिष्ट इत्यर्थः। अत्र सर्ववर्णाना " सूतिका
दशाहेन शुध्यति " इत्येतत्प्रसवमयासृङ्‌निःसरणप्रायत्यप्रयुक्तयुगत्रयपरिहरणनिमित्तभूताशौचाभि-
प्रायम्। ऋतुमत्याशौचसाहचर्यात्। अत्र सर्वशब्दः शूद्रेतरवर्णेषु सकोचनीयः। यदाह पारस्करः—
"द्विजातिः सूतिका या स्यात्सा दशाहेन शुध्यति। त्रयोदशेऽन्हि संप्राप्ते शूद्रा शुध्यत्यसंशयः "॥

संवर्त्तश्च— १५

" अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिका। दशरात्रेण शुध्यति भूमिष्ठ च नवोदकम् "॥ इति
दशाहात्पर सत्यपि सूतके दशाहे शुध्यभिधान वाक्यश्रवणदर्शनादिनिषेधविषयम्। " दशाहदर्शनं
वाक्य सूतिकायास्त्यजेत्ततः " इति स्मरणात्। दशाहात्परं सूतिकायाः कर्मानर्हत्वलक्षण-
मात्रमेव सूतक न तु दशाहवदनिरीक्ष्यत्वादिलक्षणम्। तथा पैठीनसिः—" सूतिकां पुत्रजननीं
विशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीम् " इति। २०

अत्र चंद्रिकायाम्—" कर्माण्यत्रादृष्टार्थानि दानादीनि विवक्षितानि। विशतिरात्रेण
गतेनेत्यर्थः। प्रसवदिनमारभ्य विशतिदिनेष्वतीतेषु दानादिधर्मा भवन्तीत्यर्थः। एव च सूतिकायां
असृङ्‌निःसरणनिबन्धनमप्रायत्य युगत्रयपरिहरणादिहेतुभूतं द्विजातिषु दशरात्रपर्यंतं अस्पृश्यत्वादि-
हेतुभूत स्वजात्युक्तदशद्वादशपञ्चदशाहपर्यंतदानादिधर्मानधिकारलक्षणं तु द्विजातिषु पुत्रजनन्यां
विंशतिदिनपर्यंत स्त्रीजनन्या मासपर्यंतमित्यवगतव्यम् " इति। विज्ञानेश्वरोऽपि—"माता शुध्ये- २५
द्दशाहेन " इत्येतत्सव्यवहारयोग्यतामात्रम्। अदृष्टार्थेषु पुनः कर्मसु पैठीनसिना विशेष उक्तः—
" सूतिकां पुत्रजननीं विशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीम् " इति।

वसिष्ठः—

" सूतकांते भवेन्नारी व्यवहारार्हतां गता। श्रौतस्मार्तादिकार्येषु स्त्रीप्रसूर्मासतः शुचिः॥

" तथा विशतिरात्रेण योग्या पुप्रसवा तु वै "॥ इति। ३०

स्मृत्यर्थसारेऽपि— " सूतिकास्ववर्णाशौचे गते व्यवहारयोग्यैव। अदृष्टार्थेषु कर्मसु तु पुत्र-
प्रसूर्विशतिरात्रेण स्त्रीप्रसूर्मासेन शुध्यति। मासोऽत्र सावनो ज्ञेयः " इति।

एव च विज्ञानेश्वरादिषु प्रसवदिनमारभ्य विशतिरात्रादिक मातुराशौच प्रतीयते।
स्मृतिचन्द्रिकायां तु प्रसवदिनमारभ्येति कण्ठरवेणोक्तम्। आशौचशतककारेण सूतिकाया

दशमदिनविहितस्नानानन्तरदिनमारभ्य विंशतिदिनानि संभूय मासमिति एवं स्त्रीजनने चत्वारिंशद्दिनानीत्युक्तं शिष्टाचारानुसारेण।

"चत्वारिंशद्दिनानि स्युर्जनन्याः स्त्रीप्रसूतके। त्रिंशत्पुंप्रसवे ज्ञातेर्दशाहमुभयोरपि"॥ इति अयमेवार्थो दशकेऽपि प्रतिपादितः।

५ **प्रसवाशौचम्**। यत्तु **चतुर्विंशतिमते** उक्तम्—

"अधस्तान्नवमान्मासाच्छुद्धिः स्यात्प्रसवे सदा। मृते जीवे पिता तस्मिन्नहोभिर्माससंख्यया"॥ इति एतच्चंद्रिकायां व्याकृतम्—अधः नवममासात्सप्तममासादारभ्येति शेषः। तदेतत्सूतिकाव्यतिरिक्तसपिंडविषयम्। सूतिकादिसर्वसपिंडविषयत्वे अत ऊर्ध्वं स्वजात्युक्तमाशौचं तासु विद्यत इति पूर्वोक्तवचनविरोधापत्तेः। एवं च यदुक्तं **विष्णुना**—"ब्राह्मणस्य सपिंडानां जननमरणयोर्दशाह-
१० माशौचं द्वादशाहं राजन्यस्य पंचदशाहं वैश्यस्य मासं शूद्रस्य" इति तदेतद्विष्णुवचनं "नवमे दशमे वाऽपि प्रबलैः सूतिमारुतैः। निःसार्यते बाण इव यंत्रछिद्रेण सज्वरे" (प्रा. ८३) इति **याज्ञवल्क्योक्त**नवमदशममासप्रसवविषयं वेदितव्यमिति **स्मृतिरत्नेऽपि**। यत्तु **चतुर्विंशन्मते** 'अधस्तान्नवमान्मासात्' इति अस्यार्थः सप्तममासादारभ्य नवममासादर्वाक् प्रसवे सति पित्रादीना माससंख्यया तैरहोभिः शुद्धिः। सूतिकाया दशरात्रं नवममासादारभ्य सपिंडांना दशाहेन शुद्धिरिति।
१५ एवं च सप्तमे अष्टमे वा मासि प्रसवरूपे गर्भनाशे सति पितृभ्रातृज्ञातीनां यथाक्रमं सप्ताहमष्टाहमाशौचं भवति। नवमे दशमे वा प्रसवे सति दशाहमाशौचामिति **चंद्रिकास्मृतिरत्नमाधवीयादौ** स्थापितम्। **अन्ये** तु "अधस्तान्नवमान्मासात्" इत्येतत् मातृपितृभ्रातृव्यतिरिक्तज्ञातिविषयम्।

"सप्तमे वाऽष्टमे वाऽपि नारीणां गर्भपातने। मातापित्रोर्दशाहं स्यात्सोदराणां तथैव च"॥ इति **स्मरणा**दित्याहुः। **अपरे** तु "जातमृते मृतजाते वा सपिंडानां दशाहम्" इति **हारीत**स्मरणात्
२० सप्तममासप्रभृति मृतजाते जातमृते वा सपिंडानां जनननिमित्तं पूर्णमाशौचमिति **विज्ञानेश्वरेणा**भिधानात् "सप्तमादिषु पितृज्ञात्योर्दशाहं भवेत्" इति **वरदराजीये**ऽभिधानात्

"मृतजातेऽपि वा जातमृते वा पतनात्परं ज्ञातीनां सूतकं पूर्णम्" इति **हारीत**शासनमिति **शतके**ऽभिहितत्वाच्च सप्तमाष्टमयोरपि ज्ञातीनां पूर्णमाशौचमित्याहुः।

अत्र व्यवस्थामाहुः—संनिहितानां पितृभ्रातृरूपसपिंडानां सप्तमाष्टमयोः पूर्णमाशौचम्।
२५ "मातापित्रोर्दशाहं स्यात्सोदराणां तथैव च" इति **मनुना** विशिष्य स्मरणात् पितृभ्रातृव्यतिरिक्तं व्यवहितसपिंडविषयम्। अधस्तान्नवमान्मासादिति नवममासमारभ्य प्रसवनिमित्तदशाहादिसूतकं सर्वसपिंडानामविशेषेण भवति। तत्र हि प्रसवो मुख्यः। तथा च **श्रूयते** "दशमे मासि सूतवे" इति। **उपनिषदि** च "दश वा नव वा मासानन्तःशयित्वा यावद्वाऽथ जायते" इति।

**वर्णविशेषाशौचम्**। तत्र यथावर्णमाशौचमाह **दक्षः**—

३० "शुध्येद्विप्रो दशाहेन द्वादशाहेन भूपतिः। वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति"॥

**याज्ञवल्क्यश्च** (प्रा २२)—

"क्षत्रस्य द्वादशाहानि विशः पंचदशैव तु। त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः"॥ इति। न्यायवर्तिनः द्विजशूद्रशुश्रूषादिनिरतस्य। **मनुरपि** (५।५८)—"अशुद्धा बांधवाः सर्वे सूतकेऽपि तथैव च" इति। बांधवाः सपिंडाः। तथैव दशाहमित्यर्थः। **बोधायनोऽपि** (१।५।९०)
३५ "सपिंडेष्वा दशाहमाशौचम्" इति।

संवर्तोऽपि—
"जातस्यापि विधिर्दृष्ट एष एव मनीषिभिः । दशरात्रेण शुध्येत वैश्वदेवविवर्जितः"॥ इति ।
व्यासोऽपि—
"दशाह शावमाशौचं सपिंडेषु विधीयते । जननेऽप्येवमेव स्यान्निपुणा शुद्धिमिच्छताम् "॥ इति ।
स्मृत्यंतरेऽपि—"शावमाशौच दशरात्र जननेऽप्येवम्;" इति । एतद्दशरात्राशौच ब्राह्मणविषयम् । ५
संग्रहेऽपि—
"दशाह द्वादशाह च पक्ष मासमिति क्रमात् । ब्रह्मक्षत्रियविट्शूद्रवर्णाना पूर्णसूतकम् " ॥ इति ।
मुख्यकर्तुरघ तावदितिवचन शुभकर्मनिर्हत्वपरम् । "एकोद्दिष्टान्त एव स्यात् संस्कर्तुः शुद्धता त्वघात्" इति वचनात् । स्मृत्यंतरे तु क्षत्रियादीना दशाहादयोऽप्याशौचकल्पा दर्शिताः ।
यथाह पराशरः— १०
"क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः । तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् " ॥
तथा च शातातपः—
"एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा । शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके " ॥ इति ।
वसिष्ठस्तु ( ४।२८—२९ )— "पंचदशरात्रेण राजन्यो विंशतिरात्रेण वैश्यः " ॥ इति ।
अंगिरास्त्वाह— १५
"सर्वेषामेव वर्णाना सूतके मृतके तथा । दशाहाच्छुद्धिरेषां वा इति शातातपोऽब्रवीत् " ॥ इति ।
अत्र विज्ञानेश्वरः (पृ. १८०प. ६-७)—"एवमनेकोच्चावचाशौचकल्पाः स्मृतिषु दर्शिताः । तेषां लोकसमाचाराभावान्नातीव व्यवस्थादर्शनमुपयोगीति नात्र व्यवस्था प्रदश्यते " इति ।

## अनुलोमप्रतिलोमाशौचम् ।

यदा पुनर्ब्राह्मणादीना क्षत्रियादयः सपिंडा भवंति तत्राह हारीतः— २०
"दशाहाच्छुध्यते विप्रो जन्महानिषु योनिषु । षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥
"शूद्रविट्क्षत्रियाणा तु ब्राह्मणे संस्थिते सति । दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः"॥ इति ।
एतदविभक्तविषयम् ।
"क्षत्रविट्शूद्रजातीना यदि स्तो मृतसूतके । तेषां तु पैतृकाशौचं विभक्तानां तु मातृकम् " ॥
इत्यापस्तंबस्मरणात् । विष्णुरप्याह ( २२।२२—२६ )—"क्षत्रियस्य विट्शूद्रेषु सपिंडेषु २५ षड्रात्रत्रिरात्राभ्या वैश्यस्य शूद्रे सपिंडे षड्रात्रेण शुद्धिः । हीनवर्णाना तूत्कृष्टेषु सपिंडेषु जातेषु मृतेषु वा तदाशौचव्यपगमे शुद्धिः " इति । पराशरः—
"एकपिंडास्तु दायादाः पृथग्दारनिकेतनाः । जन्मन्यपि विपत्तौ च तेषां तत्सूतकं भवेत् "॥ इति ।
एकपिंडाः उत्तमवर्ण उत्पादको येषा ते तथा पृथग्दारनिकेतनाः हीनवर्णाः स्त्रियः निकेतनान्युत्पत्ति- स्थानानि येषा ते दायादाः पुत्राः तत्सूतकमुत्तमवर्णसंबंध्याशौचमित्यर्थः । ३०
बोधायनेनाविशेषेण दशाह इत्युक्तम्—
"क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बांधवाः । तेषामाशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते "॥ इति ।
पाराशरे तु विशेषेणोक्तम्—" षड्रात्रं स्यात् त्रिरात्र स्यादेकरात्र क्रमेण तु " इति ।

अनयोश्च पक्षयोरापदनापद्विषयत्वेन व्यवस्था । संकरजातीनां शूद्रेष्वंतर्भावात्तेषां शूद्रवदा- शौचम् । तथा मनुः ( १०।४१ )—" शूद्राणां तु सधर्माणः सर्वे तद्वंशजाः स्मृताः" इति । ३५

ब्राह्मेऽपि "शौचाशौचं प्रकुर्वीत शूद्रवद्वर्णसंकराः" इति। अनुलोमप्रतिलोमानामाशौचविशेष-माहापस्तंबः—

"सर्वेषामनुलोमानामाशौचं मातृवर्गवत्। पैतृकं प्रतिलोमानामाशौचं सद्भिरिष्यते"॥ इति। शूद्रप्रतिलोमाना त्वाशौचाभाव एव। यदाह हारीतः—"न शूद्रप्रतिलोमानामाशौचं वाऽस्ति ५ किंचन"। जाबालिः—

"मासं शूद्रस्य शेषाणां सदाशौचमिति स्थितिः। तथापि मरणे तेषां स्नानमात्रं विधीयते"॥ विज्ञानेश्वरे च "प्रतिलोमा धर्महीनाः" (गौतम सू ४।२०) इति।

**समानोदकाशौचम्।** समानोदकाशौचमाह **मनुः** (५।७०)— "जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते"। **पराशरः** —"दिनत्रयेण शुध्यति ब्राह्मणाः प्रेतसूतके"। ब्राह्मणाः १० समानोदका इति शेषः। तथा च **जाबालिः**—

"दशाहेन सपिंडानां शुद्धिः स्यात्तु त्रिरात्रतः। समानोदकानामपि गोत्रजानामहः स्मृतम्"॥ **देवलः**—"समानोदकानां त्र्यह गोत्रजानामहः स्मृतम्" इति। **बृहस्पतिरपि**—

"दशाहेन सपिंडास्तु शुध्यंति प्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यंति गोत्रजाः"॥ इति। सकुल्याः समानोदकाः। स्नानं तु मरणविषयम्। जन्मनि सगोत्रस्य स्नानाभावात्। **संग्रहे**— १५ "जाते च सूतके प्रेते त्र्यहं सद्योव्रतादयः" इति। उपनयनात्पूर्वं मरणे सद्यःशुद्धिरित्यर्थः।

**सजातीयसापिण्ड्यम्।** सजातीयेषु सापिंड्यावधिमाहतुः **शंखलिखितौ**—

"सपिंडता तु सर्वेषां गोत्रतः साप्तपौरुषी" इति। यतः प्रभृति संतानविश्लेषः स कूटस्थः। तत्संतानेषु तमादिं कृत्वा गणिताः पुत्रपौत्रादयः सप्तपुरुषपर्यंताः सपिंडाः। तेषां सर्वेषां कूटस्थसंततिजातानां गोत्राः। एकगोत्रलक्षणोपाधिसद्भावे सति सपिंडता भवतीत्यर्थः। एवं च कूटस्थादूर्ध्वस्थस्वस्त्री-२० पुंससंततिजातानां दौहित्रपौत्राणां गोत्रभेदादन्योन्यमसपिंडता मंतव्या। **माधवीये**—

"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिंडभागिनः। पिंडदः सप्तमस्तेषां सापिंड्यं साप्तपौरुषम्"॥ इति। **स्मृत्यंतरेऽपि**—

"ऊर्ध्वं पंचसु पित्रादिष्वधः पुत्रादिपंचसु। स्मृतं सजातिसापिंड्यमेतत्संतातिजेष्वपि"॥ अत्र दातृकूटस्थव्यतिरेकेण पंचसु सापिण्ड्यस्मरणं वेदितव्यम्। ततश्च ताभ्यां सह सप्तपुरुषमित्यर्थः। २५ **बोधायनः** (१।५।९१) "सपिण्डता त्वा सप्तमात्" इति। **स्मृत्यन्तरे**—

"सर्वेषामेव वर्णानां विज्ञेया साप्तपूरुषी। सपिण्डता ततः पश्चात्समानोदकधर्मता"॥ **मनुरपि** (५।६०)—

"सपिंडता तु पुरुषे सप्तमे विनिवर्तते। समानोदकभावस्तु जन्मनाम्नोरवेदने"॥ सप्तमे पुरुषे अतिक्रांते तदूर्ध्वं सपिंडता निवर्तते इत्यर्थः। **स्मृत्यंतरेऽपि**—"समानोदकभावस्य ३० निवृत्तिः स्यादवेदने" इति। **व्याघ्र**—

"समानोदकभावस्त्वनुवर्तेता चतुर्दशात्। जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते"॥ इति। जन्म च नाम च जन्मनामनी। तयोः स्मरण यावत्तावत्समानोदकभाव इत्यन्ये मन्यते। ततः परं निवर्तत इत्यर्थाडुक्तम्। **पारस्करः** (३।१०।१६)—"आ सप्तमात्सापिंड्यमा दशमात्समानो-दकत्वम्" इति।

दीपिकायाम्—

"अष्टमात्प्राक्सपिंडाः स्युर्द्विविधा अष्टमादयः। त्रयः समानोदकाः स्युस्ततोऽन्ये गोत्रजाः स्मृताः"॥ इति। इद दशमपर्यंतं समानोदकत्वस्मरण विदेशस्थविषयम्। आ चतुर्दशात्समानोदकत्वस्मरणं सनिहितदेशवर्तिषु चतुर्दशपुरुषादूर्ध्वमपि स्नेहोपलालनादिद्वारा जन्मनामवेदनेऽपि समानोदकत्वे निवृत्तिपरम्। "जन्मनाम्नोरवेदने" इति **मनु**वचनं सनिहितदेशवर्तिषु बंधुत्वपरिपालनाद्यभावेन जन्मनामवेदनाभावे चतुर्दशपुरुषादर्वागपि समानोदकत्वनिवृत्तिपरम्। "आ सप्तमाद्दशमाद्वा समानग्रामवासे यावत् संबंधमनुस्मरेयुः" इति **वसिष्ठ**स्मरणात्। सगोत्रेषु व्यवस्था **चंद्रिकायां** दर्शिता—"जन्मनाम्नोरस्मरणेन समानोदकभावो येषां निवृत्तस्ते गोत्रजाः स्नात्वा शुध्यंति। येषां जन्मनाम्नोः स्मरणे सत्यपि चतुर्दशपुरुषातिक्रमात् सगोत्रत्वं तेषां न स्नानमात्राच्छुद्धिः 'समानोदकानां त्र्यहं गोत्रजानामहं स्मृतम्' इति **जाबालि**वचनस्यैवंविधगोत्रजविषयत्वात्" इति। सप्तपौरुषसपिंडता ब्राह्मणादिसवर्णेषु समाना। विजातीयसापिण्ड्यं कन्यायाः सापिण्ड्यम्। विजातीयेषु त्रिपुरुषमेव सापिंड्यम्। यदाह **पाराशरः**—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु"॥ कूटस्थसजातीयेषु सपिण्डता सप्तमादूर्ध्वं विनिवर्तते। विजातीयेषु त्रिपुरुषादूर्ध्वं विनिवर्तते इत्यर्थः। तथा च **शातातपः**—

"पुत्राणामसपिंडानामप्रत्तानां च योषिताम्। सपिंडता तु निर्दिष्टा पितृपक्षे त्रिपूरुषी"॥ इति। असपिंडानां विजातीयानां अप्रत्तानां अदत्तानामनूढानामित्यर्थः। **स एव**—

"यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिंडाः पृथक्शौचाः पिंडस्त्वावर्तते त्रिषु"॥ एकस्माद्ब्राह्मणादेर्जाताः एकजाताः। पृथक्क्षेत्राः भिन्नजातीयासु स्त्रीषु जाताः। अत एव पृथक्जनाः। एकपिंडाः सपिंडाः। पिंडस्त्वावर्तते त्रिषु। तेषां त्रिपुरुषमेव सापिंड्यमित्यर्थः। **व्यासोऽपि**—

"ये त्वेकजाता बहवो भिन्नयोनय एव च। भिन्नवर्णाश्च सापिण्ड्यं भवेत् तेषां त्रिपूरुषम्"॥ इति। **वृद्धपराशरोऽपि**—"तावत्तत्सूतकं गोत्रे चतुर्थपुरुषेण तु"। तत्सूतकं भिन्नजातीयसंततिविषयोक्तं सूतकं तावद्यावत्त्रिपुरुषं चतुर्थपुरुषेण तु निवर्तत इत्यर्थः। यत्तु **पराशरेण** (३।१०–११)—सजातीयेषु पंचमादिषु सापिंड्यनिवृत्तिपूर्वक आशौचतारतम्यमुक्त

"दायाद्विच्छेदमाप्नोति पंचमो वाऽऽत्मवंशजः। चतुर्थे दशरात्रं स्यात्षड्दिनाः पुंसि पंचमे॥

"षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात्"॥ इति। आत्मवंशजः पंचमः। वाशब्दात्षष्ठः सप्तमो वा दायात्पिंडाद्विच्छेदमवाप्नोति। पितृपक्षे कूटस्थमारभ्य गणनायां चतुर्थे दशरात्रमाशौचं पंचमे षड्रात्रमित्यादि। यदपि **मनुनोक्त** (९।१८६)—

"त्रयाणामुदक कार्यं त्रिषु पिंडः प्रवर्तते। चतुर्थः पिंडदातैषां पंचमो नोपपद्यते"॥ इति। यदपि **गौतमेनोक्तम्** (१४।१२)—"पिंडनिवृत्तिः पंचमे त्रयाणामेकमुदकं कार्यं सप्तमे वा" इति "सापिंड्यं सप्तपुरुषम्' इत्यादि **स्मृत्यंतरे**—वचनस्यास्य च **पराशर**द्विवचनस्य विकल्पो द्रष्टव्यः इति। **माधवीये**—एतच्छिष्टाचारविरुद्धत्वाद्युगांतरविषयत्वेन योजनीयमिति। **स्मृतिरत्न-विज्ञानेश्वरी**यादावभिहितम्। यत्तु **याज्ञवल्क्येनोक्तम्** (आ. ५३)— "पचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा" इति। एतच्च कन्याविषये पंचमपर्यंतं सापिंड्यप्रतिपादनं विवाहनिषेधार्थम्। आशौचविषये तु त्रिपुरुषमेव कन्यासापिंड्यम्।

तथा च **वसिष्ठः** ( ४।१८ )–" अप्रत्तानां तु स्त्रीणां सापिंड्यं त्रिपुरुषं विज्ञायते," **शंखश्च**–
" पुत्राणामसवर्णानामप्रत्तानां च योषिताम्। सापिण्डता विनिर्दिष्टा पितृपक्षे त्रिपूरुषी "॥ इति।
**अग्निस्मृतौ**—" स्त्रीषु त्रिपुरुषं ज्ञेयं सपिंडत्वं द्विजोत्तमाः" इति। **ब्रह्मपुराणे** च—
" सपिंडता तु कन्याना सवर्णानां त्रिपूरुषी। एकोदकास्ततश्चोर्ध्वं निर्दिष्टास्तु त्रिपूरुषाः "॥ इति।
५ **स्मृत्यर्थसारे**—" स्त्रीषु सापिंड्यं त्रिपुरुषमेवाप्रत्तासु " इति। प्रत्तानां तु स्त्रीणां सप्तपुरुषमेव सापिंड्यम्। यदाह **व्यासः**—
" प्रत्तानां तु तथा स्त्रीणां सापिंड्यं सप्तपूरुषम्। नारीणा भर्तृसापिंड्यं प्राह देवः प्रजापतिः"॥ इति।
**स्मृत्यंतरेऽपि**—
" स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे। एकत्वं सा गता भर्तुः पिण्डे गोत्रेऽथ सूतके "॥ इति।
१० अप्रत्तस्त्रिया जन्मनि मरणे चाशौचव्यवस्था कृता **शतके**—
"आ त्रिपूरुषमेवाघं कन्याया मृतिजन्मनोः। आ सप्तपुरुषं पुंसः सापिंड्यं च तथा द्वयोः"॥
कन्याया मृतिजन्मनोः सतोर्यावत्त्रयः पुरुषा अनुक्रांता भवंति तावदघं भवति। पुंसः पुरुषस्य मृतिजन्मनोरा सप्तपूरुषमघं भवति। उभयत्राङ् अभिविधौ। ततश्चावधिभूतानां पुरुषाणां तत्तत्पुत्राणां चावधिमतां सर्वेषामघं भवति। तथा द्वयोः स्त्रीपुंसयोः कन्याविषये त्रिपुरुषं सापिंड्यम्। पुरुषविषये
१५ सप्तपुरुषमित्यर्थः। अत्र कूटस्थानीयत्वात् कूटस्थभ्रातुरप्याशौचं भवति। तथा **स्मृत्यंतरे**—
" आत्मपुत्रपितृभ्रातृभ्रातृव्यस्त्रीप्रसूतके। दशरात्रेण शुध्यंति नान्येषां सूतकं भवेत् "॥
आत्मशब्देन जनक उच्यते। तेन पुत्रादयः प्रत्येकमभिसंबध्यंते।
**दीपिकायाम्**—
" पुत्री पौत्री तथा भ्रात्री तथा सहजपुत्र्यपि। पितुः सहजपुत्री च पंचानां सूतिकाविधिः "॥
२० **संग्रहे** च—
" कन्यकाजनने भ्रातृपितृतद्भ्रातृतत्सुताः। पितामहश्च तद्भ्राता शुध्यंति दशरात्रतः "॥ इति।
**संग्रहान्तरे** च—
"पुंसि जाते सपिंडानां स्त्रियां पित्रोः पितुः पितुः। सोदराणां पितृव्याणां तत्सुतानामघं भवेत्"॥ इति।
सोदराणा भ्रातृणामित्यर्थः। सोदरशब्दो भिन्नोदरस्याप्युपलक्षकः। त्रिपुरुषान्तर्वर्तिभिन्नोदराणां
२५ सर्वेषामिदं सूतकं समानम्। तत्र विशेषः **स्मर्यते**—
"भिन्नोदरस्य भार्या तु स्त्रीप्रसूता भवेद्यदि। भ्रातुर्दशाहमाशौचं तत्पुत्रस्य न विद्यते"॥ इति।
भिन्नोदरभ्रातृपत्न्याः पुत्र्यां जातायां भिन्नोदरभ्रातुरेवाघं न तत्पुत्रस्येत्यर्थः। यत्तूक्तम**ग्निस्मृतौ**—
" पुजन्मनि सपिंडाना दशाहाच्छुद्धिरिष्यते। स्त्रीजन्मनि सपिंडाना त्र्यहाच्छुद्धिरिष्यते "॥ इति।
अत्र त्र्यहादित्यापद्विषयं त्रिपुरुषव्यतिरिक्तसमानोदकविषयं वा। यतस्तत्रैवोक्तम्—
३० " त्र्यहादेकोदकाना च एकाहं सोदके क्वचित् " इति। एकाहमिति सगोत्रविषयम्।
अत्र कन्यासपिण्डानां भ्रातृपितृपितामहानां तत्सुतानां पितामहभ्रातुश्च दशाहं सूतकम्। कन्यासोदकाना चतुर्थपंचमषष्ठानां त्र्यहं सूतकम्। सप्तमस्य एकाहमिति केचित्। अन्ये तु कन्यासपिंडानां त्रिपुरुषांतर्वर्तिनामेव दशाहं सूतकं सोदकानां नास्ति त्र्यहादेकोदकानामित्येतत्पुंप्रसवविषयमित्याहुः। अत्र यथास्वदेशाचारं व्यवस्था।

अपरे स्त्रीपुंससाधारण्येन मूलस्मृतिषु प्रसवाशौचविधानाच्चंद्रिकास्मृतिरत्नमाधवीय-विज्ञानेश्वरादिषु प्रौढनिबंधेषु चाविशेषेण मातादिसमानाशौचविधानादाधुनिकसंग्रहकारोक्त-त्रिपुरुषाशौचे प्रमाणाभावात् त्रिपुरुषं कन्यायाः पितृगृहनिरूपणस्य कन्यामरणाशौच उपयोगात् संप्रसवेऽपि त्रिपुरुषसपिण्डानां दशाहं सूतकमस्तीत्याहुः । अत्र यथास्वदेशाचारं व्यवस्था ।

जननाशौचं द्विविधम् । अस्पृश्यत्वलक्षणं कर्मानधिकारलक्षणं चेति । तत्रास्पृश्यत्वलक्षणं मातुरेव पूर्णमाशौचं पितुरपि स्नानात्पूर्वं नान्येषां सपिण्डानाम् । स्नानादूर्ध्वं पितुरस्पृश्यत्वलक्षणं नास्ति । किंतु कर्मानधिकारलक्षणमेव । तथा पैठीनसिः—

"जाते सपिण्डाः शुचयो मातापित्रोस्तु सूतकम् । सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः"॥ इति ।

तस्यार्थश्चन्द्रिकायामुक्तः —"सपिण्डस्य जनने पितृमातृव्यतिरिक्ताः सपिण्डाः शुचयः । सपिण्ड-जननिमित्ताशौचे कर्मानधिकारलक्षणे विद्यमानेऽप्यस्पृश्यत्वाभावात् स्पर्शयोग्याः । ततश्चास्पृश्या-न्मातापित्रोरस्पृश्यत्वलक्षणं सूतकं भवति । तत्र कारणं मातापित्रोर्जायमानप्राणिपिण्डहेतुत्वात् तत्रापि तन्निकटतया पितुः स्पर्शनिमित्तस्य मातुर्गर्भान्निर्गमनानुकूल्येनाया नाशात् । ततश्च गन्तव्या स्नानमात्रापनोद्यं सूतकं मातुरेव स्यात् । न पितुः । स्नानमात्रेण पिता शुचिः । अपनाशात् स्पर्शयोग्यो भवति" इति । तथा च स्मृत्यर्थसारे—जननेऽप्येवं मातापित्रोर्मातुर्वास्पर्शनात्मकं नान्येषां ज्ञातीनामिति । मरणे सपिण्डानामस्पृश्यत्वं यथा जननेऽप्येतदस्पृश्यत्वं तथा मातापित्रोरेव भवति । नान्येषां सपिण्डानां जायमानप्राणिपिण्डकर्तृत्वरहितानां मातापित्रोर्मध्येऽपि स्नानमात्रापनोद्यमस्पर्शं न पितुः सूतमाशौचं मातुरेवेत्यर्थः । अंगिराः—"प्राक् स्नानाज्जनने अस्पृश्यः कर्महानि-र्मृताशौचवत्" इति । स्नानात्प्राक् पिता अस्पृश्यः । ऊर्ध्वं तु स्पृश्य एव । किं तु कर्महानिः तस्य शाववदस्तीत्यर्थः । संवर्त्तः—

"सचैलं तु पितुः स्नानं जाते पुत्रे विधीयते । माता शुध्येत दशाहेन स्नातस्य स्पर्शनं पितुः"॥

न दोषावहमित्यर्थः । आदिपुराणेऽपि—

"सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः । कृत्वा सचैलस्नानं तु स्पृश्यो भवति तत्क्षणात्"॥ इति ।

अंगिराः—

"सूतके सूतिकावर्जं सम्पर्को न निषिध्यते । संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते"॥ इति ।

एतद्दशाहगतसूतिकास्पर्शे स्नानमात्रविधानमकामकृतविषयम् । बुद्धिपूर्वस्पर्शे तु स्नानं अग्निस्पर्शो घृतप्राशनं च कर्तव्यम् ।

"पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा च कामतः । स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति"॥

इति स्मरणात् । यत्तु बोधायनेनोक्तं (१।५।१०५–१०६)—"जनने तावन्मातापित्रोर्दशाह-माशौचं मातुरित्येके" इति एतच्चंद्रिकायां व्याख्यातम्—अस्पृश्यत्वलक्षणं मातापित्रोर्दशाह-माशौचमित्येतत्पूर्वपक्षत्वेनोक्तमिति तावद् ग्रहणादवगम्यते । तेन मातुरित्येक इत्ययमेव सम्यक्पक्ष इति न पूर्वोक्तविरोध इति अखंडादर्शे तु विवृतम् । युगपत्स्त्रीपुंसप्रसवे अस्पृश्यत्वलक्षणमाशौचं मातापित्रोः । अन्यतरप्रसवे मातुरेवास्पृश्यत्वलक्षणमाशौचम् । अथवा मातापित्रोरिति पितुः ससर्ग-विषयम् । पितुरिति पितुरससर्गविषयमिति । तथा च वसिष्ठः (१६।२३)—

"नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति । रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते"॥

बृहस्पतिः—
"शावाशौचं तु सर्वेषां सूतकं मातुरेव च। स्नानं प्रकुर्यात्तु पिता स्पृश्यो भवति तत्क्षणात्॥
"यस्तया सह संसर्गं प्रकुर्याच्छयनासनम्। बांधवो वा परो वापि स दशाहेन शुध्यति"॥ इति।
सुमंतुः—"मातुरेव सूतकं तां स्पृशतां च नेतरेषाम्" इति। मातुः सूतिकां स्पृशतां च जनाना-
५ मस्पृश्यत्वलक्षणं भवति नेतरेषाम्। अस्पृशतां जनानां न भवतीत्यर्थः। अत्रिः—
"संपर्काज्जायते दोषः पारक्ये चैव जन्मनि। तद्वर्जनात्पितुरपि सद्यःशौचं विधीयते"॥ इति।
पारक्ये परसंबंधिजनने।
पराशरः—"ब्राह्मणानां प्रसूतौ तु देहस्पर्शो विधीयते।
"सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्। सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः"॥ इति।
१० अस्पृश्यत्वलक्षणं सूतकं मातापित्रोः। तत्रापि दशाहमस्पृश्यत्वं मातुरेव पितुः स्नानपर्यन्तमेवेत्यर्थः।
सूतक्या सह संसर्गकरणे तन्निमित्तमस्पृश्यत्वं दशाहमस्तीत्याह स एव—
"यदि पत्न्यां प्रसूतायां संपर्कं कुरुते द्विजः। सूतकं तु भवेत्तस्य यदि विप्रः षडंगवित्॥
"संपर्काज्जायते दोषो नान्यो दोषोऽस्ति वै द्विजे। तस्मात्सर्वप्रयत्नेन संपर्कं वर्जयेद्बुधः॥
"प्रसवे गृहमेधी तु न कुर्यात्संकरं यदि। दशाहाच्छुध्यते माता त्ववगाह्य पिता शुचिः"॥ इति।
१५ भर्तुः स्नानानंतरसंसर्गनिमित्त एक एव दोषोऽस्पृश्यत्वापादको जायते न तु जनननिमित्तको
दोषोऽस्ति तस्मात्संपर्कं वर्जयेत्। गृहस्थः सूतिकया सह यदि सहशयनासनभोजनादिकं न कुर्यात्
तदा स्नानेनैव स्पृश्यो भवति। माता तु दशाहेन शुद्धा भवतीत्यर्थः। मनुरपि (५।६१-६२)—
"सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः। निरस्य तु पुमांछुक्रमुपस्पृश्यैव शुध्यति"॥ इति।
'उपस्पृश्य पिता शुचिः' इत्येतदुत्तरार्धेनोपपादयति। शुक्रं निरस्य गर्भाधानं कृत्वेति यावदुपस्पृश्य
२० स्नात्वा पिता शुचिः गर्भाधानं कृत्वा तदानीं स्नातस्य पितुरस्पृश्यत्वापादकं जननाशौचमिदानीं
तत्स्नानादूर्ध्वं न भवतीत्यर्थः। याज्ञवल्क्योऽपि (प्रा. १९)
"पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम्। तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात्"॥ इति।
अत्र विज्ञानेश्वरः (पृ १७२ पं.२८)—"सूतकं जनननिमित्तमस्पृश्यत्वलक्षणं पित्रोः मातापित्रोरेव।
न सर्वेषां सपिंडानां तत्राप्यस्पृश्यत्वं मातुर्ध्रुवं दशाहपर्यन्तं स्थिरमित्यर्थः। कुतः तदसृग्दर्शनात्तस्याः
२५ संबंधित्वेनासृजो दर्शनात्पितुर्ध्रुवं न भवति स्नानमात्रेणास्पृश्यत्वं न विद्यते। यस्मिन्दिने कुमारजननं
तदहर्न दुष्येत तन्निमित्तदानाद्यधिकारापहं न भवतीत्यर्थः। यस्मात्तस्मिन्नहनि पूर्वेषां पित्रादीनां
पुत्ररूपेण जन्म उत्पत्तिः तस्मात्तदहर्न प्रदुष्येत" इति। स्मृत्यर्थसारे—जनननिमित्तमस्पृश्यत्वं मातु-
रेव। पितुः स्नानानंतरमस्पृश्यत्वं नास्ति। जनने सपिंडानामस्पृश्यत्वं सर्वदा नास्त्येवेति। षडशीतौ—
"यावत्सूतकमस्पृश्या माता प्राक् स्नानतः पिता। अन्येषां तु सपिंडानामस्पृश्यत्वं न सूतके"॥ इति।
३० यत्तु संग्रहे—
"आर्त्तं शावेऽङ्गसंस्पर्शं त्यजेत्सूतौ चतुर्दिनम्। स्पर्शेनास्य तु स्नानं कृच्छ्रोऽस्याशौचिनः स्मृतः" इति
प्रसवे चतुर्दिनमंगस्पर्शवर्जनमुक्तम्। तत्स्नानान्तरक्षणमारभ्य पितुः सर्वदा च सर्वसपिंडाना-
मस्पृश्यत्वलक्षणाशौचाभावं प्रतिपादयन्तीभिः पूर्वोक्तसर्वस्मृतिभिर्विरुद्धत्वादुपेक्ष्यम्।
यच्चात्र स्मृत्यंतरमुक्तम्—
३५ "स्पृष्टस्पृष्टिं भाषणं च सहवासं च वर्जयेत्। अन्याशौचवतां पुंसां न स्पृशेच्च कदाचन॥

यत्तु कैश्चिदुक्तम् "सूतके सूतिकावर्ज्यं संस्पर्शो न निषिध्यते" इति **स्मरणात्** दशाहात्परमपि सूतिकायाः स्पर्शो न कर्तव्य इति तन्न। उक्तानेकस्मृत्यनुसारेणास्य वचनस्य दशाहाभ्यंतरे सूतिकास्पर्शनिषेधविषयत्वे नोपपत्तेः। 'अघांतं स्पर्शमेव' इति शतकक्रुद्वचनं देशाचारमूलमिति सिद्धम्।

**आशौचिनामन्योन्यस्पर्शनिषेधः**। आशौचिनामन्योन्यस्पर्शं निषेधति **भृगुः**—

५ "शावाशौचे समुत्पन्ने सूतके च द्विजातिभिः। अन्याशौचवतां स्पर्शो न कर्तव्यो द्विजन्मनाम्॥
"आशौचेऽप्यन्यदाशौचं स्पृशेद्यदि च कामतः। चरेत्सांतपनं कृच्छ्रं प्राजापत्यमकामतः॥
"सूतके शावसंस्पर्शे मत्या कृच्छ्रद्वयं चरेत्। अमत्या कृच्छ्रमेकं स्यादित्युवाच बृहस्पतिः"॥

**स्मृत्यंतरे तु**—

"परस्याशौचिनः स्पर्शे शावाशौचं कथं भवेत्। मत्या सांतपनं कुर्यादमत्या तु तदर्धकम्॥
१० "अस्थिसंचयनादर्वागेवं शुद्धिर्विधीयते। ऊर्ध्वं त्रिरात्रं विज्ञेयममत्या तु दिनं भवेत्"॥ इति।

शावाशौचे तु आशौचरहितेन यावदाशौचं आशौचिस्पर्शो न कर्तव्यः "मरणे यावदाशौचं तत्संस्पर्शो निषिध्यते" इति **स्मरणात्**।

एकाशौचवतामपि चतुर्दिनपर्यन्तं परस्परस्पर्शं निषेधत्याश्वलायनः—

"अस्थ्नां संचयनादर्वाक् तत्सपिण्डाः परस्परम्। न संस्पृशेयुरङ्गानि पुत्राश्च प्राग्दशाहतः॥
१५ "अक्षतेऽपि चतुर्थेऽह्नि सति संचयने यदि। परस्परं सपिण्डानामङ्गस्पर्शो विधीयते॥
"सापिण्डाः पञ्चमाहादि स्पृशेयुस्तु परस्परम्। स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः॥
"दशाहादित्रिभागेन कृते संचयने क्रमात्। अंगस्पर्शनमिच्छंति वर्णानां तत्त्ववेदिनः॥
"चतुर्थे पंचमे वाऽन्हि संस्पर्शः कथितो बुधैः"॥ इत्यादीनि **व्यासदेवलादि**वचनानि युगांतरविषयाणि। "अस्थिसंचयानदूर्ध्वमंगस्पर्शनमेव च" इति कलियुगनिषिद्धधर्मेषु **स्मरणात्**।

२० **यत्त्वंगिरसोक्तम्**— "नाशौचं सूतके प्रोक्तं सपिंडानां क्रियावताम्" इति अस्यार्थः—क्रियावतां जन्मदाख्यदेवताप्रीत्यर्थं पूजादिक्रियावतां पित्रादिसपिंडानां जन्मदाख्यदेवतायागानुष्ठानसमये कर्मानधिकारलक्षणमाशौचं नास्तीति। तथा च **व्यासः**—

"सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिताः॥
"प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा। रात्रिष्वेतेषु कुर्वीत पुत्रजन्मनि सूतके॥
२५ "षष्ठेऽह्नि यागं दानं च जन्मदानां तु कारयेत्"॥ पूजादानार्थं तेषु दिनेषु तत्समये शुद्धिरित्यर्थः।

**मार्कंडेयः**—

"रक्षणीया तथा षष्ठ्यां निशायां तु विशेषतः। रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः॥
"पुरुषाः शस्त्रहस्ताश्च तत्र गीतैश्च योषितः। रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके"॥ इति।

**बृहस्पतिः**—

३० "जन्मतः पंचमं तारं याते चंद्रे शिशुं पिता। भूषयेद्भूषणैः सर्वैः पंचायुधसमन्वितैः॥
"विशेषात्कन्यकायाश्च कर्तव्यं मंगलं तथा। तत्र सायुधमा कल्पमायुः श्रीकांतिदं शिशोः"॥ इति।

**नारदश्च**—

"जननात्सप्तमे चाह्नि मृत्युरायाति घातुकः। तद्दिने चैव रक्षेयं कर्तव्यायुर्विवृद्धये॥
"सायान्हे पूज्यविघ्नेशमपूपैश्च पृथग्विधैः"॥ **मार्कण्डेयः**—

३५ "अग्न्यंबुहीने च तथा निर्धूमे सूतिकागृहे। अदीपशस्त्रमुसले भूतिसर्षपवर्जिते॥

" क्षणप्रध्वंसिनी कल्मषहंत्यात्मसंभवम् । सा जातहारिणी नाम तद्रक्षेत्सूतिकागृहम् " ॥ इति ।
प्रथमदिने जातकर्मादिनिमित्ता शुद्धिर्भवति । तथा च वृद्धयाज्ञवल्क्यः—
" कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः । हिरण्यभूगवाश्वाजवासोधान्यधनादिषु ॥
"तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत् । भक्षयित्वा तु तन्मोहात् द्विजश्चान्द्रायणं चरेत्"॥
इति प्रसवाशौचम् । ५

## दशाहान्तर्गतशिशुमरणाशौचम् ।

अंतर्दशाहे जातमृतौ मृतजनने च सपिंडानां सद्यःशौचमाह बृहद्विष्णुः—" जाते मृते मृते जाते कुलस्य सद्यःशौचम् " इति ॥
शंखोऽपि—" प्राङ्नामकरणात्सद्यःशौचम् " इति । पारस्करः—" जीवन् जातो यदि प्रेयात्सद्य एव विशुध्यति " इति । कात्यायनोऽपि— १०
" अनिवृत्ते दशाहे तु पंचत्वं यदि गच्छति । सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रिया"॥ इति ।
'न प्रेत नैव सूतकम्' इति पाठांतरम् । तदग्रे वक्ष्यते । मातापित्रोस्तु दशाहमुक्तं वरदराजीये—
" मृतजाते जातमरणे वा सर्वास्ववस्थासु मातापित्रोर्दशाहमाशौचम् " । तथा च बृहस्पतिः—
" जातमात्रे मृते वाऽपि दशाहात्पितरौ शुची । कृते नाम्नि सनाभीनां दशरात्रमघं भवेत् ॥
" भिन्नोदराणां भ्रातॄणां जातदंते मृते त्वघम् । दशाहं कृतचौले तु दत्तादीनां विधीयते "॥ इति । १५
पिंगलोऽपि[1]—"जात उभयोः कृते नाम्नि सोदराणां भ्रातॄणाम् " इति । पितृव्यतिरिक्तज्ञातीनां सद्यःशौचविधानं शिशुमरणनिमित्तस्याशौचस्य स्नानाच्छुद्धिप्रतिपादनपरम् । न प्रसवनिमित्तस्य । तत्तु दशाहमस्ति । तथा च बृहन्मनुः—
" दशाहाभ्यंतरे बाले प्रमीते तस्य बांधवैः । शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते" ॥ इति ।
बांधवैः सपिंडैः शावाशौचं न कर्तव्यं पितृवद्दीर्घकालं न कर्तव्यं किं तु सद्य एव । सूत्याशौचं तु दशाहं विधीयते इत्यर्थः । विज्ञानेश्वरोऽपि—मृतजनने जातमृतौ च सपिंडानां जनननिमित्तमाशौचं परिपूर्णम् । जातमृते मृतजाते वा सपिंडानां दशाहमिति हारीतस्मरणादिति । पारस्करोऽपि ( )—" अतःसूतके चेदोत्थानादाशौचं सूतकवत् " इति । आ उत्थानात् आ सूतिकाया उत्थानाद्दशाहमिति यावत्सूतकवदिति । शिशूपरतिनिमित्तोदकदानवर्ज्यमित्यर्थः । २०
आपस्तंबोऽपि (१।५।१६।१९-२०)—"अंतःसूतिके चेोत्थानाशौचं सूतकवन्मृते तस्मिन्नेव बाले तु सद्यःशौचं नात्रोदकम्" इति । अस्यार्थः । यस्मिन् जाते सूतकं प्रवृत्तं तत्सूतकमध्ये तस्मिन्नेव बाले मृते मातापित्रोः सूतकवत् ओत्थानादाशौचं सपिंडानां जनननिमित्तमोत्थानान्मरणनिमित्तं पित्रादीनां न प्रेतायोदकदानमित्यर्थः । व्याघ्रोऽपि— २५
" अंतर्दशाहे जातस्य मरणं यदि संभवेत् । सद्यःशौचं सपिंडानां सूतकं तु प्रवर्तते ॥
" गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत् । मृतके स्नानतः शुद्धिः सपिंडानां च सर्वशः "॥ इति ।
अत्र विज्ञानेश्वरः (पृ. १७६ पं. ९)—" एवमादिवचनपर्यालोचनया जनननिमित्ताशौचसंकोचो नास्तीत्यवगम्यते " इति । ३०
नन्वेवं दशाहं जनननिमित्ताशौचस्य सत्त्वे मरणनिमित्ताशौचस्य निषेधे कोऽतिशयः । उच्यते
" सद्यःशौचे तु तावत्स्यादाशौचं संस्थितस्य तु । यावत्स्नानं न कुर्वन्ति " इति शिशूपरमानिमित्तं तत्कालस्नानं एकोतिशयः । दशाहपर्यंतमस्पृश्यत्वाभावोऽपरः । तारतम्यं च स्मर्यते— ३५

---

[1] ख ग—पैङ्गलेपि ।

"सूतकात् द्विगुणं शावं शावात् द्विगुणमार्तवम्। आर्तवात् द्विगुणं सूतिस्ततोऽपि शवदाहकम्"॥ इति।
किं च सपिंडानां जननिमित्ताशौचवन्मरणनिमित्तस्यापि दशाहमभ्युपगमे दशमदिनमृतौ तदूर्ध्वमपि शावाशौचप्रसंगः। तथाहि—
"अनिर्दशाहे जनने पश्चात्स्यान्मरणं यदि। प्रेतमुद्दिश्य कर्तव्यं तत्राशौचं स्ववंशुभिः"॥ इति
५ अंगिरःस्मरणेन जन्मदिनादूर्ध्वं द्वितीयादिदिने शिशुमरणे दशाहादूर्ध्वमपि प्राप्तस्य मरणाशौचस्य
"अंतर्दशाहे जातस्य शिशोर्निष्क्रमणं यदि। सूतकेनैव शुद्धिः स्यात्पित्रोः शातातपोऽब्रवीत्॥
"दशाहाभ्यंतरे बालः कदाचिन्म्रियते यदि। शावाशौचं न कर्तव्यं सूत्याशौचेन शुध्यति॥
"दशाहांतर्गते बाले शुद्धिः स्याज्जन्मना सह"। "अंतर्दशाहोपरतस्य सूतिकाहोभिर्वाशौचम्"
इति व्याघ्रयमशंखस्मृतिवचनैर्यद्यपि बाधः सिध्यति तथापि "तच्चेदंतःपुनरापतेत्तच्छेषेण शुध्ये-
१० रन्। रात्रिशेषे द्वाभ्याम्। प्रभाते तिसृभिः" इति गौतमस्मरणात् (१४।५-७) सूतकांतिमदिने शिशुमृतौ तत्परं त्र्यहमाशौचम्। प्रभातमरणे त्र्यहं च पित्रोरिव पूर्णाधित्वे सपिंडानामपि प्रसज्येत।
तस्माज्जननिमित्तपूर्णाशौचस्य मरणनिमित्तस्य सद्यःशौचस्य च महान्फलभेदः।
अत एव संग्रहे—
"सूतकांतस्तु जातस्य मृतौ शिष्टाहमिष्यते। पितुस्तु त्र्यहमंत्याहे तत्प्रभाते त्र्यहं भवेत्"॥ इति।
१५ अयमर्थः। सूतकमध्ये जातस्य मृतौ सपिंडानां जननिमित्तमवं शिष्टाहं भवति। मरणनिमित्तं तु सद्यः। "जात उभयोः" इति स्मरणात्। जातशिशुमृतौ तु पित्रोः सदा पूर्णाधित्वेऽपि
"सूतकेनैव शुद्धिः स्यात्पित्रोः शातातपोऽब्रवीत" इति वचनबलात्सूतकशेषेणैव मरणाशौचस्यापि निवृत्तिः। सूतकांतिमदिने तन्मृतौ तत्परं पितुर्त्र्यहमाशौच प्रभाते अरुणोदयकाले त्र्यहम्। यद्यपि मातुरप्येवं तथापि तस्याः दशाहात्परमपि सूतकस्य सत्त्वात्पितृमात्रद्व्यहत्र्यहविधानम्। अत्र तुशब्दो
२० ज्ञातीनां द्व्यहत्र्यहविधिनिवर्तकः। पितृग्रहणाद्भ्रातृव्युदासः। 'कृते नाम्नि सोदराणाम्' इति दशाहात्परमेव भ्रातुः मरणाशौचविधानादिति। यत्तु सोदराणामपि दशाहाशौचमुक्तं व्याघ्रेण—
"बाले मृते सपिंडानां सद्यःशौचं विधीयते। दशाहेनैव दंपत्योः सोदराणां तथैव च"॥ इति
तद्दशाहानंतरबालमरणविषयम्। चंद्रिकायां तु दशाहेनेति जन्मदिनमृतबालमरणविषयम्।
जन्मदिनादूर्ध्वं मृतबालविषयेऽपि व्याघ्रः—
२५ "अंतर्दशाहे जातस्य शिशोर्निष्क्रमणं यदि। सूतकेनैव शुद्धिः स्यात पित्रोः शातातपोऽब्रवीत"॥इति।
पित्रोरिति सोदरभ्रातृणामुपलक्षणार्थम्। यत्तु पैठीनसिवचनम्—"जात उभयोः कृते नाम्नि सोदरभ्रातृणां च" इति तत्र कृते नाम्नीति नामकरणदिनस्य दशमस्योपलक्षणार्थम्। एवं चायमर्थः—
जाते शिशौ जन्मदिने प्रेते मातापित्रोः सोदरभ्रातृणा च दशाहमाशौचम्। कृते नाम्नि नामकरण-
दिने दशमे वा मृते सति पूर्वोक्तानामेवाहोरात्रमाशौचमिति।
३० तथा च शंखः—"दशमान्तर्गते बाले शुद्धिः स्याज्जन्मना सह"। अयमर्थः—दशमांतर्दशाह-
मध्ये बाले गते प्रेते जन्माशौचशुद्ध्या सह मातापित्रोः सोदरभ्रातृणां च शुद्धिः स्यादिति
ओत्थानाद्याशौचमिति वदन् आपस्तंबोऽपि अंत:सूतके दशमदिनेऽपि शिशुमरणे तद्दिन
एवाशौचं न पुनरहःशेषे द्वाभ्यां प्रभाते त्र्यहमित्यादिको विशेषोऽस्तीति दर्शयतीति। एवं
च जन्मदिने शिशुमरणे पित्रोः सोदरभ्रातृणां च मरणनिमित्तमाशौच दशाहं द्वितीयादिदिनेषु
३५ दशमदिनेऽपि मरणे शिष्टाहमेवाशौचम्। प्रसवाशौचेनैव सर्वदा शुद्धिरिति चंद्रिकोक्तनिष्कर्षः।

**स्मृतिरत्नमाधवीयादौ** भ्रातॄणां व्याघ्रवचनानुसारेणाशौचमुक्तम् । यथादेशाचारमत्र व्यवस्था । तदेवं मरणाशौचं सपिण्डानां सद्यः पित्रोर्दशाहं जननाशौच सर्वेषां दशाहमिति स्थितम् । अत्र **विज्ञानेश्वरः** । ( पृ १७६ प. १९–२५ ) यत्तु **बृहन्मनुवचनम्**—

"जीवन् जातो यदि ततो मृतः सूतक एव तु । सूतकं सकलं मातुः पित्रादीनां दिनत्रयम्"॥ इति यच्च **बृहत्प्रचेतोवचनम्**— ५

"मुहूर्तं जीवितो बालः पचत्व यदि गच्छति । मातुः शुद्धिर्दशाहेन सद्यःशौचास्तु गोत्रिणः"॥ इति तत्रैव व्यवस्था । जननानन्तर नाभिकर्तनात्प्राङ्मृतो पित्रादीना जननिमित्तमाशौचं दिनत्रयम् सद्यः-शौचं अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शौचमिति शंखवचनात् । नाभिवर्धनोत्तरकाल तु शिशुप्रायणे जननानिमित्तमाशौचं संपूर्ण सपिढानाम् ।

"यावन्न च्छिद्यते नालं तावन्नाप्नोति किल्बिषम् । छिन्ने नाले ततः पश्चात्सूतक तु विधीयते"॥ इति **जैमिनिस्मरणात्** । १०

**चंद्रिकायामपि** जन्मनि पित्रादिसपिढानामपि त्रिगत्रमाह **वृद्धमनुः**–"जीवन् जातो यदि ततः" इति । **अयमर्थः**—जीवन् जातः शिशुर्यदि नाभिच्छेदात्पूर्वं मृतस्तदा स्वजात्युक्तं सूतक मातुः पूर्णमेव पित्रादिसपिढाना त्रिरात्रमिति । **यद्बृहत्प्रचेतसो** वचनम्—"मुहूर्तं जीवितो बालः पंचत्वं यदि" इति तत्सद्यःशौचमग्निहोत्रानुष्ठातृविषयम् । "अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्काल शौचम्" १५ इति **शंखस्मरणात्** । यत्तु **हारीतेनोक्तम्**—"जातमृते मृतजाते वा सपिढानां दशाहम्" इति । सूतकमिति शेषः । अत्र जातमृते यद्दशाहमुक्तं तज्जातस्य शिशोर्नाभिच्छेदादूर्ध्वं मरणे वेदितव्यम् । **बृहन्मनुवचनसमानविषयत्वेऽन्योन्यविरोधापत्तेः** । मृतजातविषये तु दशाहमेव सूतकं **पारस्करेणाप्युक्तम्**—

"गर्भे यदि विपत्तिः स्यात् दशाहं सूतकं भवेत्" इति । सपिढानामिति शेषः । यत्तु २०

"पुत्रो जातो यत्र मृतो मृतो वा सूयते यदि । सूतक मातुरेव स्यात् पित्रादीनां दिनत्रयम्" ॥ इति तदेतन्मृतजातस्य त्रिरात्रसूतकं वृत्तस्वाध्यायोपेतपित्रादिविषयम् । एतच्च वृत्तस्वाध्यायोपेतपित्रादेरपि कलौ न कार्यम् "वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा" इति **कलौ** निषेध**स्मरणा**दिति । एवं च नाभिच्छेदात्पूर्वं जातमरणे त्रिरात्रं नाभिच्छेदादूर्ध्वं जातमरणे मृतजाते च दशरात्रमिति निर्णयः । तथा च **स्मृत्यर्थसारे**—"नाभिच्छेदादूर्ध्वं शिशुमरणे निष्प्राणशिशुनिर्गमे च जननिमित्ताशौचं २५ कृत्स्नं यथावर्णं सर्वेषां सपिढानामस्त्येव । मरणनिमित्ते सद्यःशुद्धिः । "नाभिच्छेदात्पूर्वं शिशुमरणे तु जननानिमित्ताशौचं सपिढाना त्रिरात्रम् । मरणनिमित्ते सद्यःशुद्धिः" इति **स्मृतिरत्नेऽपि** ।

**बृहन्मनुः**—

"दशाहाभ्यंतरे बाले प्रमीते तस्य बांधवैः । शावाशौचं न कर्तव्यं सूत्याशौच विधीयते" ॥ एतत् नाभिच्छेदादूर्ध्वं वेदितव्यम् । तथा च **जैमिनिः**— ३०

"यावन्न छिद्यते नालं तावन्नाप्नोति किल्बिषम् । छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते"॥ इति । नाभिच्छेदात्प्राक्तु **बृहन्मनुराह**–"जीवन् जातो यदि ततः ० त्रिरात्रकम्" इति । यत्तु **बृहत्प्रचेताः**– "मुहूर्तं जीविते बालः ० गोत्रिणः" इति । अत्र सद्यःशौचविधानमग्निहोत्राद्यनुष्ठानार्थं तात्कालिक-शुद्धिप्रतिपादनपरम् । 'अग्निहोत्रार्थमिति' **शंखस्मरणात्** । यद्वा 'मुहूर्तं जीवित' इति

सद्यःशौचविधानं पित्रादीनां सपिंडानां नाभिच्छेदात्पूर्वं शिशुमरणे मरणनिमित्तकं जनननिमित्तं तु दिनत्रयमस्त्येवेति। तथा च **पारस्करः**—

"नाभिकृन्तनतः पूर्वं शिशोर्निष्क्रमणं यदि। जाताशौचं सपिडानां त्रिरात्रमिति निश्चयः॥
"पित्रोस्तु मरणाशौचं सद्य एव सपिंडवत्। नाभिकृंतनतः पश्चाद्दशाहं सूतकं भवेत्"॥ इति।

५ **षडशीतौ**—

"नाभिकृंतनतः पूर्वं शिशौ प्रेते तु सूतकम्। मातुः पूर्णमतोऽन्येषां पितुश्च त्रिदिनं समम्॥
"छिन्ननाभेः शिशोर्मृत्यौ मृतस्य प्रसवेऽपि च। मातुश्च गोत्रिणां चैव सर्वेषां पूर्णसूतकम्"॥ इति।

**माधवीये**ऽप्ययमेवार्थः प्रपंचितः।

यत्तु **कैश्चिदुक्तम्**। त्र्यहविधेर्नाभिच्छेदात्पूर्वविषयत्वाप्रतीतेर्वचनांतराभावादनुदाहृतत्वाच्च बहुस्मृति-
१० विरोधाच्च नेयं व्यवस्थोपपद्यते। अतो नेदं त्र्यहविधिवचनमादरणीयमिति। तन्न।

"यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते"॥ इति "छिन्नायामाशौचम्" इति **जैमिनिहारीता**दिवचनैर्नाभिच्छेदादूर्ध्वं सूतकप्राप्तिविधानाज्जातमृते दशाहाशौचविधायकवचनस्य च नाभिच्छेदोत्तरकालमरणविषयत्वोपपत्तेः। त्र्यहविधायक**वृद्धमनु**-वचनस्य चाबाधेन नाभिच्छेदात्पूर्वकालमरणाविषयत्वेनोपपत्तेः। न च नाभिच्छेदात्प्राक् सूतकप्राय-
१५ संभवे न त्र्यहविध्यनुपपत्तिः। वचनप्राप्तस्य बाधायोगात्। अतः परस्पराविरोधेन विषयव्यवस्थैव प्रदर्शनीया। सा च प्रदर्शिता **विज्ञानेश्वरा**दिभिः। वचनांतराभावोऽप्यसिद्धः। "नाभिकृंतनतः पूर्वं शिशोर्निष्क्रमणं यदि" इत्यादिवचनजातस्य सुगमत्वात्।

'यच्चोक्तं पित्रादीनां दिनत्रयम्' इत्यनेन **वृद्धमनु**वचनेन जातमरणे त्र्यहमस्पृश्यत्वं विधीयते इति तदपि न। "पित्रोस्तु मरणाशौचं सद्य एव सपिडवत्" इति नाभिच्छेदात्पूर्वमरणे तन्निमित्तस्य सद्यः-
२० शौचस्य विधानात् तदुत्तरमरणे च सपिडानां सद्यःशौचविधानाज्जनननिमित्तास्पृश्यत्वलक्षणाशौचस्य च निरस्तत्वान्नाभिकृतनतः पूर्वमित्यादिवचनानुग्रहाच्च त्र्यहविधानस्यास्पृश्यतामात्रविषयत्वानुपपत्तेः। अतो नाभिच्छेदात्पूर्वं शिशुमरणे जनननिमित्ताशौचं पित्रादीनां सपिंडानां त्रिरात्रमरणनिमित्तं सद्यःशौचम्। नाभिच्छेदादूर्ध्वं शिशुमरणे निष्प्राणशिशुनिर्गमने च जनननिमित्ताशौचं पूर्णं मरण-निमित्तं पितृव्यतिरिक्तानां सद्यःशौचम्। पित्रोस्तु दशाहमिति युक्तम्। यत्तु **कात्यायनोक्तम्**—

२५ "अनिवृत्ते दशाहे तु पंचत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्न प्रेतं नैव सूतकम्"॥ इति एतत् **विज्ञानेश्वरेण** व्याख्यातम् (पृ १७६ पं. १६)—"सूतकमस्पृश्यत्वं नैव पित्रादीनां भवतीत्यर्थः। अथवा अयमर्थः—अंतर्दशाहे यदि शिशूपरमस्तदा न प्रेताशौचम्। यदि तत्र सापिडजननं तदा सूतकमपि नैव कार्यं किंतु पूर्वाशौचेनैव शुद्धिरिति"॥

**चंद्रिकायां** तु—"यत्तु **शाकटायनेनोक्तम्**—

३० "बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम्"॥ इति तन्मातुलादिविषयम्। ततश्चायमर्थः। न मातुलादिबंधूनामिह कालापनोद्यशावाशौचं सूतकं वा किंतु तन्निमित्तमप्रायत्यं स्नानमात्रेण नश्यति" इति। एवं च यदुक्त**मखण्डादर्शे**—'निमित्ताभावा-न्नैमित्तिकस्याप्यभावः' इति **न्यायेन** निमित्तभूतस्यायुषि सति सपिडानामाशौचं स्यात्तस्मिन्नष्टायुषि सति कस्य केन निमित्तेनाशौचं भवति तस्मात्तस्मिन्नष्टे सत्याशौचमपि नष्टं स्यात्। अतो नास्त्याशौचं

सपिंडानामिति । तद्दशाहाभ्यंतरे बाल इत्यादिपूर्वोक्तवचननिचयबलादुपेक्षणीयमेव इति । **इति दशाहांतर्गतशिशुमरणाशौचम् ।**

**अथ दशाहोपरितनशिशुमरणाशौचम् ।** तत्र **मनुः** ( ५।७७, ६६ )—
“ बाले देशांतरस्थे च पृथक् पिंडे च संस्थिते । सवासा जलमाप्लुत्य सद्य एव विशुध्यति ॥
“ नृणामकृतचौलानामशुद्धिर्नैशिकी स्मृता । निवृत्तचौलकानां तु त्रिरात्राच्छुद्धिरिष्यते ”॥ ( ६६ ) ५
अनयोरयमर्थः—बाले अजातदंते षाण्मासिक इति यावत्संस्थिते मृते सपिंडः सद्य एव विशुध्यति । देशांतरस्थे च पृथक्पिंडे समानोदके संस्थिते स्वाशौचकालादूर्ध्वं श्रुत्वा सद्यः शुध्यति । अकृतचौलानामप्राप्ततृतीयवर्षाणां षष्ठमासादूर्ध्वं मरणे ज्ञातीनामशुद्धिर्नैशिकी । आशौचमेकरात्रम् । निर्वृत्तचौलानां प्राप्ततृतीयवर्षाणा सप्तमवर्षात्प्राङ्मरणे त्रिरात्रमाशौचमिति । तथा च **याज्ञवल्क्यः** (प्रा २३)—
“ आ दंतजन्मनः सद्यः आ चौलान्नैशिकी स्मृता । त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ” ॥ १०
खननेऽहस्त्र्यह दाहे त्यागे च चौलं चूडाकर्मव्रतादेश उपनयनम् ।
**शंखोऽपि**—“ अजातदंते तनये सद्यःशौचं विधीयते । अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूडके ॥
“ तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति बांधवाः ” ॥ इति । **व्यासोऽपि**—
“ आ दंतजन्मनः सद्यः आ चौलादेकरात्रकम् । त्रिरात्रमोपनयनाद्दशरात्रं ततः परम् ” ॥ इति ।
**खननादिसंस्कारभेदेनाशौचभेदः** । अत्र खननादिसंस्कारभेदेनाशौचव्यवस्था दर्शिता **संग्रहे**— १५
“ चौलात्परं भवेद्दाहो नाम्नः प्राक् खनन परम् । दाहो वा खननं दन्तात्परं त्यागः स वा स तत् ॥
“ दाहेऽहः खनने सद्यो दंतोत्पत्तेरधःपरम् । खननेहस्त्र्यहं दाहे त्यागे च त्र्यहमिष्यते ” ॥ इति ।
चौलात् त्र्यब्दाद्वा पर मृतस्य दाह एव संस्कारः । नाम्न एकादशाहाद्वा प्राङ्मृतस्य खननमेव संस्कारः । एकादशाहात्पश्चाद्दंतजननात्पूर्वं खनन वा दाहो वा विकल्पेन स्यात् । दंतजननात्षष्ठमासाद्वा परं मृतस्य खनन दाहः त्यागो वा संस्कारः । तत्र दंतोत्पत्तेरर्वाङ्मृतस्य दाहे सपिंडानामाहः अहो- २०
रात्रमाशौचम् । अत्र खनने सद्यःशौचम् । दंतोत्पत्तेः परं तु खननपक्षे अहोरात्रम् । दाहपक्षे त्यागपक्षे च त्र्यहमघ भवतीत्यर्थः ।

अत्र **विष्णुः** ( २२।२६–२८ )—“ अदन्तजाते बाले प्रेते सद्य एव । नास्याग्निसंस्कारो नोदकक्रिया च । दंतजाते त्वकृतचौले त्वहोरात्रेण ” इति ।
**चंद्रिकायाम्**— २५
“ स्त्रीणां तु पतितो गर्भः सद्यो जातो मृतोऽथ वा । अजातदंतो मासैर्वा मृतः षड्भिर्गतैस्तथा ॥
“ वस्त्रादिभूषित कृत्वा न्युप्तव्यः स तु काष्ठवत् । खनित्वा तु शनैर्भूमौ सद्यःशौच विधीयते ॥
“ जातदंत मृतं स्नात्वा चरेदेकाहमेव तु ” ॥ **अंगिराः**—
“ अनुजातस्य तावत्स्यादाशौच संस्थितस्य तु । यावत्स्नानं न कुर्वन्ति सचेलं बांधवा बहिः ”॥ इति ।
अनुजातो जातदंताद्बालतरः । अनुत्पन्नदंत इत्यर्थः । **जमदग्निः**— ३०
“ यो नामकरणात्पूर्वं पंचत्वमुपगच्छति । गर्ते एवोपगुह्यैनं स्नानाच्छुध्यन्ति गोत्रिणः ॥
“ नामक्रियाया ऊर्ध्वं तु बालो यदि भवेन्मृतः । सद्यःशौचं सपिंडानां भूमौ निखनने कृते ॥
“ दहेद्वा काष्ठवद्बाल क्षिपेदेकाहमेव तु ।
“ चूडीकृतेऽकृते वाऽपि जातदंतो मृतो यदि । आ त्रिवर्षात्तु दहने त्रिरात्रेणैव शुध्यति ॥

" खनने नैशिकी शुद्धिः सपिंडानां विधीयते "॥ इति।

यत्तु **यमवचनम्**—

" अदंतजाते तनये शिशौ गर्भच्युते तथा। सपिंडानां तु सर्वेषामहोरात्रमशौचकम् "॥ इति।

यदप्याश्वलायनवचनम्-"अदंतजाते पर्यति चैकरात्रम्" इति। पर्यति मृते। यदपि **देवरातवचनम्**-

५ " नाम्नो दंतोद्गमाच्चौलाद्दुपनीतेरधः क्रमात्। सद्यःशौचमहस्त्र्यहो नियताग्न्युदकः परः "॥ इति

यदपि **संग्रहवचनम्**—" प्राङ्नामकरणात्सद्य एकाहो दंतजन्मनः " इति। दंतोत्पत्तेः पूर्वमेकाहाशौचविधायकमेतादृशं वचनं दाहनविषयमिति **स्मृतिरत्ने**ऽभिहितम्।

नन्वत्राग्निसंस्कारं निषेधति **पराशरः** ( ३।१६ )

" अजातदंता ये बाला ये च गर्भाद्विनिसृताः। न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया "॥ इति।

१० **मनुरपि** ( ५।६७–६९ )—

" ऊनद्विवार्षिकं प्रेतं निदध्युर्बांधवा बहिः। अलंकृत्य शुचौ भूमौ अस्थिसंचयनादृते॥

" नास्य कार्योऽग्निसंस्करो नापि कार्योदकक्रिया। अरण्ये काष्ठवत् त्यक्त्वा क्षपयेत्त्र्यहमेव तु॥

" नात्रिवर्षस्य कर्तव्या बांधवैरुदकक्रिया " इति। ऊनद्विवार्षिकं अप्राप्ततृतीयवयसं निदध्युः निखनेयुः। अलंकृत्य शवं प्रक्षाल्य वस्त्रादिभिरलंकृत्य बहिर्ग्रामादस्थिसंचयनादृते अस्थिसमूह-

१५ वर्जितायां भूमौ। न केवलमूनद्विवार्षिकस्य निखननमेव संस्कारः किंतु त्यागोऽपीत्याह—'अरण्ये काष्ठवत्' इति। त्यागपक्षे त्र्यहं क्षपयेत्। त्र्यहमाशौचवान्भवेदिति यावत्। त्यागे उदकक्रियाऽपि न कर्तव्येत्यर्थः। **याज्ञवल्क्योऽपि** ( प्रा. १–२ )—

" ऊनद्विवार्षिकं प्रेतं निखनेन्नोदकं ततः। आ श्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः॥

" यमसूक्तं तथा गाथां जपद्भिर्लौकिकाग्निना। स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् "॥ इति।

२० ऊने अपरिपूर्णे द्वे वर्षे यस्यासावूनद्विवार्षिकः। प्रेतं निखनेद्भूमाववटं खात्वा दक्षिणाशिरसं निक्षिप्य पांसुलोष्टादिभिः प्रच्छादयेत्। नोदक ततः। न दहेदित्यर्थः। अग्निसंस्कारोदकक्रिययोः समनियतत्वेन उदकनिषेधे दाहस्यापि निषेधः। स च प्रेतो घृतेनाभ्यज्य यमगाथां गायद्भिर्निधातव्यः।

" ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि। यमगाथां गायमानो यमसूक्तमनुस्मरन् "॥ इति

**यमस्मरणात्**। ऊनद्विवार्षिकादितरः पूर्णद्विवर्षे यो मृतः असौ श्मशानपर्यंतं ज्ञातिभिः सपिंडैः

२५ समनोदकैश्चानुव्रज्यः अनुगंतव्यः। अस्मादेव वचनादूनद्विवार्षिकस्यानुगमनमनियतमिति गम्यते। अनुगम्य च 'परेयुवांसम्' इत्यादि षड्ऋच यमसूक्तं यमगाथां 'योऽस्य कौष्ठ्य जगत' इति तिस्रः ऋचस्य जपद्भिर्लौकिकाग्निना संस्कृताग्निना दग्धव्यः। उपेतश्चेत्तस्याहिताग्नेरावृता दाहप्रक्रियया पात्रयोजनादिरहितया स्वगृह्यादिप्रसिद्धया लौकिकाग्निनैव दग्धव्य इत्यर्थः। **कर्मप्रदीपिकायाम्**—

" कन्याबालकयोरूर्ध्वं त्रयोविंशतिमासतः। उपोषणं तु कर्तव्यं तत्पूर्वं खननं तयोः "॥

३० उपोषणं दहनमित्यर्थः। एवं चाग्निसंस्कारस्योनद्विवर्षमरणे निषिद्धत्वात् कथं दहननिबन्धनमेकाहाद्याशौचमिति चेन्न। उक्तपराशरादिवचनानां नियताग्निसंस्कारनिषेधपरत्वात्। अतः अग्निसंस्कारोदकदाननिषेधो नामकरणात्प्रागेव नित्यः। नोर्ध्वम्। यतो निषेधानंतरमेव नामकरणादंतजननाद्वा ऊर्ध्वमग्निसंस्कारमुदकदानं चानुजानाति **मनुः** ( ५–६९ )—" जातदंतस्य वा कुर्यान्नाम्नि वाऽपि कृते सति " इति।

---

१ ख—नापिकार्योदकक्रिया।

लोकाक्षिरपीति—
" तूष्णीमेवोदक कुर्यात्तूष्णीं संस्कारमेव च । सर्वेषा कृतचोलानामन्यत्रापीच्छया द्वयम् " ॥ इति ।
"चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमाब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्"॥ (२।३५) इति मन्वादिविहितकाले कृतचोलस्य सर्वस्य मरणे नियमेनाग्न्युदकदान तूष्णी कार्यम् । अन्यत्रापि नामकरणादूर्ध्वमकृतचोलेपीच्छया प्रेताभ्युदयकामनया द्वयमग्न्युदकात्मकं तूष्णीं कार्यं न नियमेनेति चंद्रिकादौ व्याख्यातम् । अन्ये तु प्रथमेऽब्दे कृतचूडस्योनद्विवार्षिकस्य मृतस्याग्निदानमुदकदानं च तूष्णीममन्त्रक कुर्यात् । अन्यत्रापि तृतीयादिवर्षेऽप्यकृतचूडेच्छया द्वय तूष्णीं कुर्यादित्याचक्षते । एव च त्रिवर्षादिकृतचोलस्य एकर्चविधिना संस्कारः । स च वक्ष्यते । अजातदतस्यापि चूडाकरणे त्रिरात्राशौचमाह **पराशरः**—

"जातदतेऽनुजाते वा कृतचूडे च सस्थिते । अग्निसस्करणे तेषा त्रिरात्रमशुचिर्भवेत्"॥ इति १०
जाता दता यस्यासौ दतजातः । अनुजातः अनुत्पन्नदत इत्यर्थः । **षट्त्रिंशन्मते**—
" यद्यप्यजातदतः स्यात्कृतचूडस्तु सस्थितः । तथापि दाहयेदेनं त्र्यह चाशौचमिष्यते " ॥
प्रथमसवत्सरचूडाभिप्रायेण **काश्यपो**ऽपि—" बालानामदतजाताना त्रिरात्रम् " इति ।
**अंगिराः**—
"विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी । निर्वृत्तचूटके तस्मिन् त्रिरात्राच्छुद्धिरिष्यते"॥ इति । १५
**वसिष्ठः** ( ४।३४ ) " ऊनद्विवर्षे प्रेते गर्भपतने वा सपिडाना त्रिरात्रम् " इति । **षडशीतौ**—
" द्वितीये प्रथमे वाऽब्दे चौल यदि कृत तदा । चौलप्रभृति सर्वेषां गोत्रिणा त्रिदिनं मतम्"॥ इति ।
**माधवीये**—
" अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते । आशौचं ब्राह्मणाना तु त्रिरात्रं तत्र विद्यते " ॥
**चंद्रिकायाम्**—" अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते। अतिमोहाभिभूतैस्तु देशसाधनमाचरन्॥ २०
" आशौच ब्राह्मणाना तु त्रिरात्र तत्र विद्यते"॥ देशसाधनमाचरन् स्वदेशाचारमाचरद्भिरित्यर्थः । विभक्तिव्यत्ययः । मोहः स्नेहः । जातदतस्याकृतचूडस्य दाहपक्षे **अंगिरसा**ऽपि विशेषो दर्शितः—

" यद्यप्यकृतचूडो वै जातदंतस्तु सस्थितः । दाहयित्वा तथाप्येनमाशौच त्र्यहमाचरेत् " ॥
**वसिष्ठो**ऽपि ( ४।३४ )—" ऊनद्विवर्षगर्भपतने सपिडानां त्रिरात्रमाशौचं सद्यःशौचमिति **गौतमः** " इति । अग्निसंस्कारे सद्यःशौचमग्निहोत्रानुष्ठानविषयम् ॥ २५

**खननप्रभृत्याशौचम्** । मृतस्य शिशोः यदा दिनान्तरे खननं दाहः त्यागो वा क्रियते तदा मृताहाद्येव सद्योहस्त्र्यहकल्पना खननादिसस्कारोत्तरकालं वेति संदेहे निर्णय उक्तः **संग्रहे**—

" मृतस्य तु यदा दाहस्त्यागो वा खननं शिशोः । तदा तद्दिवसाद्येव सद्योहस्त्र्यहकल्पना " ॥ इति ।
एतच्च खनित्वा शनकैर्भूमौ अरण्ये काष्ठवत्त्यक्त्वा दाहयित्वा तथाप्येनमिति **लोकाक्षिमन्वंगिरसां** वचनैः त्वाप्रत्ययेन खननाद्यनतरमेव सद्यःशौचादिविधानादवगम्यते । ३०
इदं खननदिवसाद्याशौचं उपनयनपर्यंत बालमरणे वेदितव्यमित्येके । **अन्ये तु**—चौलात्पूर्व कालसंस्कारविषयं तत्रैव त्वाप्रत्ययश्रवणादित्याहुः ।

ननु दिनांतरे बालसंस्कारे पूर्वेद्युराशौचाभावे कर्मानुष्ठानप्रसंगः इति चेन्नैवम् । " सूतकं तु प्रवक्ष्यामि मृतिजन्मनिमित्तकम् " इति आशौचस्य मरणोत्पत्तिशिष्टत्वादेवं च मरणाद्याशौचस्य सत्त्वेऽपि खननाद्युत्तरकालमेव सद्यःशौचाद्यनुष्ठानमिति न विरोधः । 'स्नात्वा सद्यः शुचिर्भवेत्' इति ३५

समानकर्तृत्वस्मरणात्। खननसंस्कारकर्तुः पितृभ्रातृव्यतिरिक्तज्ञातेर्मातुलादेरपि सद्यःशौचमेव। अग्निसंस्कारे त्यागेऽपि कर्तुः पितृभ्रातृज्ञात्यादेस्तत्तदाशौचमेव। प्रेतक्रियाकरणे असपिंडस्य सद्यः-शुद्धिः। अत्र सर्वत्र सूतके दशाहात्पर बालमृतौ पित्रोर्भ्रातॄणां च सदा दशाहमघं भवति। "बाले मृते सपिंडानां सद्यःशौचं विधीयते। दशाहेनैव दंपत्योः सोदराणां तथैव च"॥ इति ५ व्याघ्रपादस्मरणात्। अत्र सोदरशब्दोऽसोदरस्याप्युपलक्षकः। तथा पैंगगृह्ये—"गर्भस्थे प्रेते मातुरेव स्यादाशौचं जात उभयो.। कृते नाम्नि सोदराणां भिन्नोदराणामप्येवम्" इति। अखंडादर्शे च—"ज्ञातीनां स्नानमेव बालमरणे मातापितृसोदराभिन्नोदराणामपि दशाहमघं भवति" इति। दशकेऽपि—"जातमरणे पित्रोर्दशाहं सदा भ्रातुर्दशाहं परन्"। इति तद्व्याख्याने विशेषः। भ्राताऽत्र सोदरः। स एव मुख्यः। तस्य नामकरणात्परं बालमृतौ दशाहमघं १० भवतीति। बृहस्पतिस्तु—

"जातमात्रे मृते चापि दशाहात्पितरौ शुची। कृते नाम्नि सनाभीनां दशरात्रमघं भवेत्॥

"भिन्नोदराणां भ्रातॄणां जातदते मृते त्वघम्। दशाहं कृतचौले तु दत्तादीनां विधीयते"॥ इति।

याज्ञवल्क्यः (प्रा. २८)—

"त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते। ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि"॥ इति। १५ ऊनद्विवर्षे संस्थिते उभयोरेव मातापित्रोर्दशाहमाशौचं न सर्वेषां सपिंडानाम्। तेषां तु "आ दंतजन्मनः सद्यः" इत्युक्ताशौचमित्यर्थः। स्मृत्यंतरे—

"कृतचौडस्य विप्रस्य आ त्रिवर्षोपनायनात्। आशौचं तु त्रिरात्रं स्यात्पित्रोश्चैव तु सर्वदा"॥ सर्वदेति यावद्दशाहमित्यर्थः। केचित्तु—

"बाले मृते सपिंडाना सद्यःशौच विधीयते। दशाहेनैव दंपत्योः सोदराणां तथैव च"॥ इति २० व्याघ्रवचनं नाभिच्छेदनादूर्ध्वं मृतबालविषयम्। सूतकानतरमृतस्य बालस्य मातृपितृसोदराणा त्रिरात्रमाशौचमिति वदन्ति। यथा विज्ञानेश्वरः—"यत्तु काश्यपवचनम्—"बालानाम-दंतजातानां त्रिरात्रेण शुद्धिः" इति तन्मातापितृविषयम्। "बैजिकादपि संबंधादनुरुंध्यादघं त्र्यहम्" इति जनकोपाधिकतया त्रिरात्रस्मरणात्" इति। आश्वलायनोऽपि—"आ दंतजाते च" इति। त्रिरात्रमित्यनुवर्तते चंद्रिकायाम्॥ यत्तु पैठिनसिनोक्तम् "अकृतचूडानां त्रिरात्रम्" इति २५ तन्मातापितृविषयम्। ",ऊनद्विवर्षे प्रेते मातापित्रोरेव नेतरेषाम्" इति स्मरणात्। अस्यायमर्थ. ऊनद्विवर्षे प्रेते निखनने च कृते मातापित्रोरेव त्रिरात्रमाशौचम्। नेतरेषां सपिंडानां तेषामेकरात्रा-भिधानादिति। स्मृतिरत्नेऽपि—"बालानामदंतजाताना त्रिरात्रेण शुद्धिः" इति कात्यायनवचनं मातापितृविषयम्। अत एव मनुः (५।६२)—

"बैजिकादभिसंबंधादनुरुन्ध्यादघं त्र्यहम्" इति॥ षडशीतौ—

३० "यत्रोपनयनात्पूर्वं पुत्र प्रेतत्वमृच्छति। आशौचं त्रिदिनं तत्र मातापित्रोः समं तदा"॥

स्मृत्यर्थसारेऽपि—

"अनुपनीतमरणे मातापित्रोर्दशाहमाशौचपक्षो न दृश्यते" इति। अत्र यथास्वदेशाचारं व्यवस्था।

**अनुपनीतमरणाशौचम्।** अनुपनीतमरणाशौचे त्रिभागादूर्ध्वं स्पर्शमाह देवलः—

"स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागशः। शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम्"॥ इति।

---

१ खग–माता। २ क्ष–अ। ३ क्ष–नादत।

एतच्चानुपनीतप्रयाणनिमित्तकाताशौचे वेदितव्यमिति विज्ञानेश्वरेणोक्तम् (पृ. १७३ प. २०)।
स्मृत्यर्थसारेऽपि—"अनुपनीतमरणाशौचे वर्णाः स्वाशौचकाले त्रिभागादूर्ध्वं स्पृश्याः। अनुपनीतमरणश्रुतावतीताशौचं नास्ति। स्नानमेव। अनुपनीतमरणे समानोदकानामाशौचं नास्ति। इदं वयःप्रयुक्ताशौचं सर्ववर्णसमम्" इति। तथा चांगिराः—
"अविशेषेण वर्णानामर्वाक् संसारकर्मणः। त्रिरात्रं तु भवेच्छुद्धिः कन्यास्वह्नो विधीयते"॥ ५
व्याघ्रोऽपि—"तुल्यं वयसि सर्वेषाम्" इति। वयसि षण्मासादिरूपे यत् सद्यःशौचादिविहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यमविशिष्टमित्यर्थः। अत्र विज्ञानेश्वरः (पृ १८२ प १२)—
"यथा पिंडोदकदानविधिः सर्ववर्णसाधारणः यथा बालसमानोदकशौचविधिः "अंतर्जन्ममरणे" इति सन्निपाताशौचविधिश्च यद्वच्च "गर्भस्रावे माससुल्या" इति स्रावाशौचविधिः "प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु" इति विदेशस्थाशौचविधिश्च सर्ववर्णसाधारणः १० तथा वयोवस्थानिमित्तमप्याशौचं साधारणमेव भवितुमर्हति। अत एव
"क्षत्रे षड्भिः कृते चौले वैश्ये नवभिरुच्यते। ऊर्ध्वं त्रिवर्षाच्छूद्रे तु द्वादशाहो विधीयते"॥ तथा
"यत्र त्रिरात्रं विप्राणामाशौचं सम्प्रदृश्यते। तत्र शूद्रे द्वादशाहः षण्णव क्षत्रवैश्ययोः"॥ इति ऋष्यशृंगादिवचनानि विगीतबुध्या अनाद्रियमाणैर्धारेश्वरविश्वरूपमेधातिथिप्रभृतिराचार्यैरयमेव साधारणपक्षोऽङ्गीकृत."। इति। १५

**नामकरणादिनिबन्धनाशौचक्रमः**। एतच्च बालमरणाशौचं नामकरणादिसंस्कारनिबंधनं कालनिबंधनं च संस्कारावलंबेन कालावलंबेन च सद्यःशौचादिस्मरणात्। उक्तं च संग्रहे—
"कृते नामादिसंस्कारे प्राप्तकालेऽपि चाकृते। स्वकाले संस्कृते प्रेते यथा तद्वदिहाप्यघम्"॥ इति।
"दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम दधाति। जन्मनोऽधि षष्ठे मासि जन्मनोऽधि तृतीये वर्षे चौलं गर्भाष्टमेषु ब्राह्मणमुपनयीत" इत्यादि स्वस्वगृह्योक्तकालेषु नामकरणान्नप्राशनचौलोपनयनेषु २० कृतेषु दशम्यां नामकरणं षष्ठेऽन्नप्राशनं जातेषु दंतेषु वा॥
"चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्"॥ पंचमे वा व्रतक्षमे इत्यादिवैकल्पिकवचनानुरोधेन स्वगृह्योक्तकालात्पूर्वमेव नामादिषु कृतेषु च स्वगृह्यप्राप्तकाले दैवान्नामादिसंस्कारे अकृते च सति स्वकाले स्वगृह्यविहितकाले एकादशाहादौ नामादिभिः संस्कृते बाले प्रेते यथा ज्ञातीनामघं भवति तथैव स्वकालात्पूर्वकालकृतसंस्कारे प्राप्तकाला- २५ कृतसंस्कारे च बाले मृतेऽपि ज्ञातीनामघमित्यर्थः।

**खननादिसंस्कारव्यवस्था**। अत्रेयं व्यवस्था—नामकरणात्पूर्वं शिशुमरणे निखननमेव नानुगमनाग्न्युदकदानादि। ज्ञातीनां सचैलस्नानाच्छुद्धिः। तत ऊर्ध्वं दंतजननात्पूर्वं मरणे निखननं तूष्णीं दहनं वा खननपक्षे सद्यःशुद्धिः। दहनपक्षे उदकदानादितूष्णीं पित्रा दर्भवर्जं कार्यम्। "अग्निना संस्कृतस्योक्ता पिंडदानोदकक्रिया" इति वचनात्। 'अकृतचौलस्य दर्भमंत्रवर्जम्' इत्यखंडादर्श- ३० वचनाच्च। अनुगमनं कृताकृतं सपिंडानामेकाहः दहनं च शवं संस्नाप्यालंकृत्य ज्येष्ठपूर्वं स्मशानं नीत्वा लौकिकाग्निना तूष्णीं कुर्यात्।

**लौकिकेष्वनादेयाग्नय.**। स च चंडालाद्यग्निव्यतिरिक्तो ग्राह्यः
"चंडालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित्। पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः"॥ इति देवलस्मरणात्। अजातदंतस्य चूडाकरणे दहनं त्रिरात्राशौचं च तूष्णीमुदकदानादि। ३५

१ ख–हः।

दंतजननात्प्रथमासाद्वा परं मृतस्य खननं दाहस्त्यागो वा संस्कारः। खननं तु शवं प्रक्षाल्य गोघृतेनाभ्यज्यालंकृत्य ग्रामाद्बहिः श्मशानादन्यत्र नीत्वा अस्थिरहितशुद्धभूम्यामवटं कृत्वा यमगाथां यमसूक्तं च जपद्भिः प्रणवेन कार्यम्

" शुचौ देशेऽवटं खात्वा दर्भैः प्रच्छाद्य सर्वशः। घृताभ्यक्तं मृतं तत्र प्रणवेन विनिक्षिपेत्॥

५ "मृतमात्रे तु निखनेद्भूमौ प्रणववर्जितम्" इति स्मरणात् । अत्रानुगमनं कृताकृतं नोदकदानादि । अवेक्षणत्रयमाशौचम् । दाहश्च लौकिकाग्निना तूष्णीं कार्यः । उदकं पिंडदानं च दिनत्रयं दर्भवर्ज्यं तूष्णीं कार्यम्। त्यागपक्षे पूर्ववदलंकृत्य ग्रामाद्बहिः शुद्धदेशे अरण्यादौ त्यक्त्वा स्नानव्यं नात्रोदकदानादि । " नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया " इति त्यागे खनने च तन्निषेधात् । अत्र दाहे त्यागे च दिनत्रयमाशौचम् । जातदंतस्याकृतचूडस्य मरणे तूष्णीं दाह एव संस्कारः।

१० तूष्णीमेव त्रिरात्रमुदकं पिंडदानम् । " पितुस्त्रिरात्रमाशौचं सपिंडाना आचौलान्खननसंस्कार एव शिष्टाचारानुगुणः। चौलात् त्रिवर्षाद्वा परं पंचमवर्षपर्यंतं कृतचौलस्याकृतचौलस्य वा मरणे यमगाथां यमसूक्तं च जपद्भिस्तूष्णीमग्निसंस्कारः कार्यः । लौकिक एव तुषाग्निर्वा ग्राह्यः । " ब्रह्मचारी कपालाग्निस्तुषाग्निर्बालकन्ययोः" इति स्मरणात् । ज्ञातिभिरनुगमनं कार्यम् । नात्र वृतप्राशनाग्निस्पर्शादीनरेषामपि ।

१५ " अनूचानं कृतश्रेष्ठमनुपेतमनायकम् । अनुगम्य विनाभ्यासी द्विजः स्नानेन शुध्यति "॥ इति स्मरणात्—कृतचूडस्याकृतचूडस्य वा तृतीयवर्षे ज्ञातिभिरप्युदकं दातव्यम्। "उदकदानं सपिण्डैः कृतजटस्य " इति ( १४।३१ ) गौतमस्मरणात्—चतुर्थवर्षमारभ्य कृतचौलस्याकृतचौलस्य वा ज्ञातिभिर्मंत्रवर्ज्यं त्र्यहमुदकं दातव्यं दर्भमंत्रवर्जनं पिंडं च दद्यात् ।

" उदकं पिंडदानं च त्र्यहं स्यात्तु त्रिवर्षतः । दशाहं पिंडदानं स्यादष्टमाब्दात्परं स्मृतम् ॥

२० " प्रेतपिंडं बहिर्दद्याद्दर्भमंत्रं विवर्जितम् "॥ इति स्मरणात्—" पंचमवर्षमारभ्यास्थिसंचयनं अमन्त्रकं कार्यम् । " दाहार्थेवोदकं पिण्डं पञ्चमादस्थिसंचयः " इति स्मृते. ।

" मृतं दग्ध्वा त्रिरात्रेण त्रिवर्षादुदकं वलिम । पञ्चमाद्यस्थिचयनं श्राद्धं कुर्याच्चतुर्दिनम "॥ इति कात्यायनस्मृतेश्च । गौतमस्य विशेषमाह—

" पंचमाद्वत्सरादर्वाक् मृतयोर्बालकन्ययोः। अस्थिसंचयनं तूष्णीं कुर्यादित्याह गौतमः "। इति ।

२५ पंचमवर्षपर्यंतममंत्रक एवाग्निसंस्कारः ।

" तूष्णीमथोदकं कुर्यात्तूष्णीं संस्कारमेव च। सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम "॥ इति लोकाक्षिस्मरणात् । षष्ठवर्षमारभ्य उपनयनपर्यंतमेकर्चविधिना संस्कृत्य तिलोदकपिंडदाननवश्राद्धषोडशश्राद्धानि मंत्रवर्ज्यं तंत्रेण एव कुर्यात । उपनयनात्पितृमेधविधिना संस्कृत्य मंत्रवत्कुर्यात । अष्टमान्तरं शांतिकर्म च कुर्यात ।

३० " अष्टमात्परमारभ्य वृषस्थापनपूर्वकम । उदकं पिंडदानं च कुर्यात्प्रेतस्य शान्तये ॥

' दर्भस्तत्रे तत. पूर्वं सर्वं कर्म समाचरेत । त्रिवर्षादुदकं पिंडं श्राद्धं तं पंचमात्परम ॥

' अष्टमात्सकलं कार्यं सपिंडीकरणं विना ॥

' ततस्तु द्वादशादूर्ध्वं गृहस्थब्रह्मचारिणोः । सपिंडीकरणं कुर्यान्न प्रागिति यमोदितम ॥

' त्रिवत्सरात्परं तत्स्यादेकश्राद्धमात्रेण । अष्टमाद्वत्सरादूर्ध्वं नवश्राद्धानि षोडश ॥

३५ ' मृतं दग्ध्वा त्रिरात्रेण त्रिवर्षादुदकं वलिम । अब्दाद्वाष्टमादूर्ध्वमेकोद्दिष्टानि षोडश ॥

" सप्तमाद्वत्सरादर्वाग्मृतयोर्बालकन्ययोः । पिडोदकं त्रिरात्रेण ह्येकरात्रेण संकटे ॥
" त्रीन् पिंडान्प्रथमे दद्यात् द्वितीये चतुरस्तथा । त्रींस्तु दद्यात्तृतीयेऽन्हि बालानां पिंडकल्पना ॥
" शिशोस्त्रिवत्सराद्रूर्ध्वमुदकं पंचसप्ततिः । त्रिवर्षादुदकं पिंडं सर्वेषां तर्पणं भवेत् ॥
" त्रिरात्रं पिंडदशकं त्रिंशद्द्यात्तिलोदकम् । आदितस्त्रिदिने कार्यं बालानां क्षुद्वरीयसी ॥
" द्वादशाद्वत्सरादर्वाक्पौगंडमरणे सति । सपिंडीकरणं न स्यादेकोद्दिष्टादि कारयेत् " ॥ ५
इत्यादीनि वचनानि द्रष्टव्यानि । पौगंडः पचमवर्षाधिको बालः । अत्र विशेषमाहापस्तंबः—
" अनुपेतान्कन्याश्च पुनर्दहनमंत्रेणैव दहेयुः " इति । पूर्णद्विवर्षमारभ्य उपनयनपर्यंतं बालमरणे एकर्चविधिना सस्कुर्युरित्यर्थः । संचयनेऽपि विशेषमाह **स एव**—
" तृतीयेऽन्हि नवं कुंभमादाय दहनं व्रजेत् । जलेन पयसा चैव संप्रोक्ष्यास्थीन्यमंत्रतः ॥
" तानि कुंभे समोऽप्याथ पयसा पूरयेद्घटम् । 'इद त' इति मंत्रेण घटं कुर्यात्सुरक्षितम्" ॥ इति । १०
'इदं त एकम्' इत्येकर्चा । **मंजर्यामपि**—
" त्रिवर्षादि दहेदेनमेकर्चाव्रतबंधनात् । 'अस्मात्त्वम्' इति मन्त्रेण स्नात्वा दद्याज्जलाञ्जलिम् " ॥
**शौनकोऽपि**—
" एकर्चविधिना कुर्याद्भगवांच्छौनकोऽब्रवीत् । अस्मात्त्वमिति मंत्रेण सर्वमंत्रो न विद्यते "॥
**स्मृत्यंतरेऽपि**— १५
" त्रयोविंशतिमासात्तु मृतयोर्बालकन्ययोः । एकर्चा दहनं त्वस्थिपंचमात्परमव्रतात् ॥
" तुषाग्निना दहेत्प्रेतमस्मात्त्वमितिमंत्रतः । कुर्यात्संचयनं त्वस्थि चैकर्चाव्रतबन्धनात् " ॥
**अन्यत्रापि**—
" पुंसां व्रतविधेः पूर्वं दानात्पूर्वं स्त्रिया अपि । अज्ञातगोत्रनाम्नां च पौगंडानां व्रतात्परम् ॥
" राष्ट्रक्षोभे च सर्वेषां पुनर्दाहनिवृत्तये । एकर्चविधिसंस्कारं भगवांच्छौनकोऽब्रवीत् " ॥ इति । २०
**बोधायनोऽपि**—" बालान् मृतान्द्वित्रिवर्षाद्यतीतान्यज्ञोपवीतस्य विधेः पुरस्तात् ॥
" अमंत्रकं चौलविधि विधाय मन्त्रेण संस्कारविधिं प्रदद्यात् " ॥ इति ।
चौलप्रभृत्युपनयनपर्यंतं सपिंडानामाशौचं त्रिरात्रम् ।
" द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः । आशौचं त्र्यहमेव स्यात्स्वजात्युक्तमतः परम्" ॥ इति **स्मरणात्** । नामकरणप्रभृत्युपनयनपर्यंत बालमरणे मातापित्रोर्भ्रातॄणां च दशाहमाशौचम् । २५
त्रिरात्रं वा देशाचारानुसारेण द्रष्टव्यम् । दशाहाशौचपक्षे अष्टमादिदिनत्रये पिंडोदकसमापनम् ।
" कन्याबालकुमारेभ्यस्त्र्यहं पिंडोदकक्रियाः । कुर्याद्दशाहमाशौचं वर्तते नात्र संशयः ॥
" कन्याबालकुमाराणामष्टमादिदिनत्रये । पिंडोदके च निर्वर्त्य द्वादशे बलिमाचरेत् " ॥ इति **स्मरणात्** । बलि नारायणं बलिम् ।
"तथा बालस्य कन्यायाः षढस्य पतितस्य च । नारायणबलिः कार्यो ह्यन्येषां मोक्षकांक्षिणाम् " ॥ इति ३०
**व्यासस्मृतेः** । अयं च नारायणबलिश्चतुर्थवर्षमारभ्य कर्तव्यः । यदाह **बोधायनः**—"त्रिवर्षाद्युदकं पिंडं चतुर्थाद्युदकं बलिम् " इति ।
यत्तु **गौतमवचनं**—" मृत दग्ध्वा त्रिरात्रेण त्रिवर्षाद्युदक बलिम् " इति अत्र बलिशब्देन पिंडबलिरुच्यते । अन्ये तु बालमरणे सर्वत्र नारायणबलिमाचरंति । 'मृतं दग्ध्वा त्रिरात्रेण' इति

दुर्जनस्य विशिष्टत्वं परोपद्रवकारिणाम् ॥
व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ २५ ॥

किंशुके[1] शुकमातिष्ठ चिरकालफलेच्छया ॥
बाह्यरङ्गप्रसङ्गेन के के नाऽनेन वञ्चिताः ॥ २६ ॥

सुमुखोऽपि सुवृत्तोपि सन्मार्गे पतितोऽपि च ॥
महतां पादलग्नोपि व्यथयत्येव कण्टकः ॥ २७ ॥

रविरपि न दहति तादृग्यादृग्दहति वालुकानिकरः[2] ॥
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ २८ ॥

त्यक्त्वापि निजप्राणान्परहितविघ्नं खलः करोत्येव ॥
कवले पतिता सद्यो वमयति[3] मक्षिका ऽन्नभोक्तारम् ॥ २९ ॥

संत्यज्य शूर्पवद्दोषान्गुणान्गृह्णाति पण्डितः ॥
दोषग्राही गुणत्यागी प[4]छोलीव हि दुर्जनः ॥ ३० ॥

नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् ॥
तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ३१ ॥

भिक्षो कंथा श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यां-
स्ते वै मद्योपदंशाः पिबसि मधुसमं वेश्यया यासि वेश्याम् ॥
दत्वाऽङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्ताऽस्मि येषां
चोरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नाऽस्ति नष्टे विचारः ॥ ३२ ॥

विद्या विवादाय धनं मदाय शक्तिः परेषां परपीडनाय ॥
खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ ३३ ॥

सद्वंश[5]जातं गुणकोटि[6]युक्तं धनुः कथं पार्थिववामहस्ते ॥
शरः परप्राणविहारदक्षः सपक्षपातोऽप्यधमो गरीयान् ॥ ३४ ॥

अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ॥
शीलमेतदसाधूनामभ्रं[7] पारि[8]प्लवं यथा ॥ ३५ ॥

---

१ पलाशवृक्षे. २ वालुकासमूहः ३ वान्ति करोति. ४ 'चालनी' इति लोके. ५ वेणुः कुलं च ६ मौर्वी विद्याविनयादिश्च. ७ अभ्रम् संख्याविशेषश्च ८ चञ्चलम्

संवर्धितोपि भुजगः पयसा न वश्य-
स्तत्पालकानपि निहन्ति बलेन सिंहः ॥
दुष्टः परैरुपकृतस्तदनिष्टकारी
विश्वासलेश इह नैव बुधैर्विधेयः ॥ ३६ ॥

अशक्ताः शक्तिमात्मीयां श्लाघयन्ते[1] च दुर्जनाः ॥
ते भवन्त्युपहासाय महतामेव संनिधौ ॥ ३७ ॥

एते स्निग्धतमा इति मामा क्षुद्रेषु यात विश्वासम् ॥
सिद्धार्थानामेषां[2] स्नेहो[3]ऽप्यश्रूणि[4] पातयाति ॥ ३८ ॥

गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते ॥
पुष्पे फले विरागी क्रमेलकः[5] कण्टकौघमिव ॥ ३९ ॥

सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति ॥
पवनः परागवाही रथ्यासु[6] वहन्रजस्वलो[7] भवति ॥ ४० ॥

विद्यया विमलयाऽप्यलंकृतो दुर्जनः सदसि[8] माऽस्तु कश्चन ॥
साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ॥४१

अहो दुर्जनसंसर्गान्मानहानिः पदेपदे ॥
पावको लोहसंगेन मुद्गरैरभिहन्यते ॥ ४२ ॥

परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ॥
अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥ ४३ ॥

सर्वलोकपरितोषकारिणि स्वर्धुनीविमलवारिणि स्थिते ॥
पूतिगन्धवति[9] पल्वलोदके[10] सूकरः सुखमतीव मन्यते ॥ ४४ ॥

उपकारिणि विश्रब्धे शुद्धमतौ यः समाचराति पापम् ॥
तं जनमसत्यसन्धं[11] भगवति वसुधे कथं वहसि ॥ ४५ ॥

दुर्जनेन समं सख्यं प्रीतिं चाऽपि न कारयेत् ॥

---

१ श्लाघा कुर्वन्ति. २ शिरीषाणा पक्षे सिद्धः अर्थः कार्यं येषाम्. ३ तैलं स्नेहभावश्च. ४ नेत्रोदकम् ५ उष्ट्र ६ वीथीषु ७ रजोयुक्तः ८ सभायाम् ९ दुर्गन्धवति. १० अल्पजलाशयोदके. ११ असत्यप्रतिज्ञम्.

उष्णो दहति चाऽङ्गारः शीतः कृष्णायते करम् ॥ ४६ ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ॥
मधु तिष्ठति जिव्हाऽग्रे हृदि हालाहलं विषम् ॥ ४७ ॥

प्राक्पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति[1] शनैर्विचित्रम् ॥
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः[2] करोति ॥ ४८ ॥

मृद्घटवत्सुखभेद्यो दुःसन्धानश्च[3] दुर्जनो भवति ॥
सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु सन्धेयः ॥ ४९ ॥

मनस्यन्यद्वचस्यन्यत्कार्ये चाऽन्यद्दुरात्मनाम् ॥
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ५० ॥

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारिताऽर्धासनो
गाढाऽऽलिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्ताऽऽदरः ॥
अन्तर्भूतविषो बहिर्मधुमयश्चाऽतीव मायापटुः[4]
को नामाऽयमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥५१॥

अकरुणत्वमकारणविग्रहः[5] परधने परयोषिति च स्पृहा[6] ॥
सुजनबन्धुजनेष्वसहिष्णुता[7] प्रकृतिसिद्धमिदं[8] हि दुरात्मनाम् ॥५२॥

जाड्यं ह्रीमति[9] गण्यते व्रतरुचौ[10] दम्भः शुचौ कैतवं[11]
शूरे निर्घृणता[12] मुनौ[13] विमतिता दैन्यं[14] प्रियालापिनि ॥
तेजस्विन्यवलिप्तता[15] मुखरता[16] वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत्सुगुणिनां यो दुर्जनैर्नाऽङ्कितः ॥५३॥

---

१ शब्दं करोति. २ मत्तरशतिलोके. ३ दुःखेन सधातुमशक्यः ४ कपटपटुः ५ निरर्थकविरोधः ६ इच्छा. ७ असहनशीलता. ८ स्वभावसिद्धम् ९ लज्जावति. १० व्रतेषुरुचिः प्रीतिर्यस्य तस्मिन् ११ शाठ्यम्. १२ निर्दयता. १३ मननशीले. १४ दीनत्वम् १५ सगर्वता. १६ वाचालत्वं गर्ह्यवाक्त्वमितियावत्.

उद्भासिताखिलखलस्य[1] विशृङ्खलस्य[2]
प्राग्जातविस्मृतनिजाऽधमकर्मवृत्तेः ॥
दैवादवाप्तविभवस्य गुणद्विपोऽस्य
नीचस्य गोचरगतैः सुखमाप्यते कैः ॥ ५४ ॥

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ॥
लुब्धक[3]धीवरपिशुना निष्कारणवैरिणो[4] जगति ॥ ५५ ॥

अतिमलिने[5] कर्तव्ये भवति खलानामतीव निपुणा[6] धीः ॥
तिमिरे[7] हि कौशिकानां[8] रूपं प्रतिपद्यते दृष्टिः ॥ ५६ ॥

परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः ॥
सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनो नीचः ॥ ५७ ॥

विशिखव्यालयोरन्त्यवर्णाभ्यां[9][10][11] यो विनिर्मितः ॥
परस्य हरति प्राणान्नैतच्चित्रं कुलोचितम् ॥ ५८ ॥

विषमा[12] मलिनात्मानो[13] द्विजिह्वा जिह्मगा[14] इव ॥
जगत्प्राणहरा नित्यं कस्य नोद्वेजकाः खलाः ॥ ५९ ॥

परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते[15] ॥
पवनाशिनोपि[16] भुजगाः परपरितापं न मुञ्चन्ति ॥ ६० ॥

जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः ॥
किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ॥ ६१ ॥

अपूर्वः कोपि कोपाऽग्निः सज्जनस्य खलस्य च ॥
एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः ॥ ६२ ॥

पादाऽऽहतोऽपि दृढदन्डसमाऽऽहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ॥

---

१ आविष्कृतसकलदुष्टस्य. २ अमर्यादस्य. ३ 'पारधी'तिलोके. ४ निष्कारणशत्रवः ५ अत्यन्तमलदूषिते. ६ पूर्णा. ७ तमसि. ८ घूकाना. 'घुवड' इतिलो० ९ वाणः १० सर्पः ११ अंत्यवर्णौ खलइति. १२वक्राः १३ दुष्टस्वभावाः १४ सर्पाइव. १५व्यथांकरोति. १६ [illegible] पि [illegible]

हर्षादिवैष पिशुनो ऽत्र मनुष्यधर्मा
कर्णे परं स्पृशति हन्त्यपरस्य मूलम् ॥ ६३ ॥

यस्मिन् वंशे[1] समुत्पन्नस्तमेव निजचेष्टितैः[2] ॥
दूषयत्यचिरेणैव घुणकीट[3] इवाऽधमः ॥ ६४ ॥

प्रेरयति परमनार्यः शक्तिविहीनोऽपि जगदभिद्रोहे ॥
तेजयति शस्त्रधारां स्वयमसमर्थः शिलां छेत्तुम् ॥ ६५ ॥

स्वभावकठिनस्याऽस्य कृत्रिमां[4] विभ्रतो नतिम्[5] ॥
गुणोऽपि[6] परहिंसायै चापस्य[7] च खलस्य च ॥ ६६ ॥

अयःपिन्ड इवोत्तप्ते खलानां हृदये क्षणात् ॥
पतिता एव नश्यन्ति गुणास्तोयकणा इव ॥ ६७ ॥

वक्रतां बिभ्रतो यस्य गुह्यमेव प्रकाशते ॥
कथं च न समानः स्यात्पुच्छेन पिशुनः शुनः ॥ ६८ ॥

शिरसि विधृतोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः[8] ॥
तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥ ६९ ॥

यथायथैव स्नेहेन भूयिष्ठमुपचर्यते[9][10] ॥
धत्ते तथातथा तापं महावैश्वानरः खलः ॥ ७० ॥

स्तोकेनोन्नतिमायाति स्तोकेनाऽऽयात्यधोगतिम् ॥
अहो नु सदृशी वृत्तिस्तुलायष्टेः[11] खलस्य च ॥ ७१ ॥

दुर्जनः कृतशिक्षोऽपि सज्जनो नैव जायते ॥
अपि गङ्गाजलस्नानादधःकेशः कुशायते ॥ ७२ ॥

खलः सत्क्रियमाणोऽपि ददाति कलहं[12] सताम्[13] ॥

---

१ वेणौ कुले च २ स्वकर्मभिः ३ 'वाळवी' इति लोके ४ क्रियया निर्वृत्ता कपटयुक्ता च. ५ नम्रत्वम् ६ मौर्वी विनयादिश्च. ७ धनुष. ८ बहुप्रकारै स्नेहैः सुगन्धतैलादिभि. ९ बाहुल्येन. १० पूज्यते ११ तुलायष्टेः 'दांडी' इतिप्रसिद्धायाः १२ कालिम् १३ साधूनाम् ।

दुग्धधौतोऽपि किं याति वायसः[1] कलहंसताम्[2] ॥ ७३ ॥

बिभ्राणा गरलं कन्ठे भुजग[3]परिवेष्टिता ॥
शांभवीव तनुः कस्य न वन्द्या दौर्जनी[4] सभा ॥ ७४ ॥

अक्षमाला[5]पवृत्तिज्ञा कुशासन[6]परिग्रहा ॥
ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला[7] ॥ ७५ ॥

पात्रमपात्री[8]कुरुते दहति गुणं[9] स्नेहं[10]माशु नाशयति ॥
अमले मलं[11] नियच्छति दीपज्वालेव खलमैत्री ॥ ७६ ॥

दुर्वृत्तसंगतिरनर्थपरम्पराया
हेतुः सतां भवति किं वचनीयमेतत् ॥
लङ्केश्वरो हरति दाशरथेः कलत्रं
प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ॥ ७७ ॥

खलः करोति दुर्वृत्तं नूनं फलति साधुषु ॥
दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥ ७८ ॥

करोति स्वमुखेनैव बहुधान्य[12]स्य खण्डनम् ॥
नमः पतनशीलाय मुसलाय खलाय च ॥ ७९ ॥

न देवाय न धर्माय न बन्धुभ्यो न चार्थिने ॥
दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥ ८० ॥

मुखं पद्मदलाकारं वाचा चन्दनशीतला ॥
हृदयं क्रोधसंयुक्तं त्रिविधं धूर्तलक्षणम् ॥ ८१ ॥

---

१ काक. २ राजहंसत्वम्. ३ सर्पैः परिवेष्टिता पक्षे जारैः परिवेष्टिता. ४ दुर्जनसम्बन्धिनी. ५ अक्षमा. न आयासक्षमा वृत्तिर्यस्याः पक्षे अक्षमाला जपमाला तस्या अपवृत्तिं भ्रमणं जानातीति. ६ कुत्सितं यत् शासनं शिक्षा तस्य परिग्रहोऽवलम्बो यस्याः सा पक्षे कुशासनं दर्भासनं तत्परिग्रहः स्वीकारो यस्याः ७ समे तादृशी खला पक्षे मेखलया सहिता ८ अयोग्यम् ९ सूत्रं विनयादिश्च. १० तैलं प्रीतिश्च ११ मषी दोषश्च. १२ बहुधा अन्यस्य परस्य पक्षे पुष्कलधान्यस्य खण्डनं चूर्णम् ।

कृतमपि महोपकारं पय इव पीत्वा निरातङ्कः[1] ॥
प्रत्युत[2] हन्तुं यतते काकोदरसोदरः[3] खलो जयति ॥८२॥

वहति विषधरान्[4]पटीरजन्मा[5] शिरसि मषीपटलं दधाति दीपः ॥
विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः॥८३

रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि ॥
अथवाऽलं पापात्मन्कृतया कथयाऽपि ते हतया ॥ ८४ ॥

आनन्द[6]मृगदावाऽग्निः शीलशाखि[7]मदद्विपः ॥
ज्ञान[8]दीपमहावायुरयं खलसमागमः ॥ ८५ ॥

निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः ॥
चिरमग्नो जलनिधौ मैनाक इव मार्दवम् ॥ ८६ ॥

खलः सज्जनकार्पासधक्षणै[9]कहुताशनः ॥
परदुःखाऽग्निधमनमारुतः केन वर्ण्यताम् ॥ ८७ ॥

यशः[10]सौरभ्यलशुनः शान्ति[11]शैत्यहुताशनः ॥
कारुण्य[12]कुसुमाऽऽकाशः खलः सज्जनदुःखदः ॥ ८८ ॥

खलास्तु कुशलाः साधुहितप्रत्यूह[13]कर्मणि ॥
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम्[14] ॥ ८९ ॥

वदने विनिवेशिता भुजंगी पिशुनानां रसना[15]मिषेण धात्रा ॥
अनया कथमन्यथाऽवलीढा नहि जीवन्ति जना मनागमन्त्राः॥९०

उन्नतं पदमवाप्य यो लघुर्हेलयैव सपतेदिति ब्रुवन् ॥

---

१ निःशङ्कः २ वैपरीत्ये. ३ सर्पबन्धुः ४ सर्पान् ५ चन्दन. ६ आनन्द एव मृगस्तस्य दावाग्निरिव दाहकत्वात्. ७ शीलमेव शाखी वृक्षस्तस्य मदद्विप इव उन्मूलकत्वात्. ८ ज्ञानमेव दीपस्तस्य महावातः निर्वाणकरणत्वात्. ९ धक्षणं दहनम्. १० कीर्तिरेव सौगन्ध्य तन्नाशकत्वाल्लशुन इव लशुनो हि कस्तूर्यादे सौगन्ध्यं नाशयतीति प्रसिद्धिः ११ शान्तिरेव शैत्य तन्नाशकत्वादग्निरिव. १२ कारुण्यमेव कुसुम तस्याकाश. आकाशस्य यथा पुष्पं कदापि नोपलभ्यते तद्वत्खले कारुण्य कदापि नोपलभ्यत इत्यर्थः १३ विघ्नः १४ निरपराधानाम् १५ जिह्वाछलेन.

शैलशेखरगतः पृषद्गणश्चारुमारुतधुतैः पततयधः ॥ ९१ ॥

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ॥
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ९२ ॥

अन्तर्मलिनदेहेन वहिराह्लादकारिणा ॥
महाकालफलेनेव के खलेन न वञ्चिताः ॥ ९३ ॥

अन्तर्वाणिं मन्यमानः खलोऽयं पौरोभाग्यं सूक्तिमुक्तासु धत्ते ॥
सर्वाऽऽनन्दिन्यङ्कके कामिनीनां मीमें मार्गत्येप वै वम्भरालिः ॥९४॥

अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छति ॥
वसनाऽशनमात्रमस्ति चेद्धनदादप्यतिरिच्यते खलः ॥ ९५ ॥

अर्थग्रहणे न तथा दुनोति कटुकूजितैर्यथा पिशुनः ॥
रुधिराऽऽदानादधिकं दुनोति कर्णे क्वणन्मशकः ॥ ९६ ॥

विध्वंस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ॥
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाऽभ्यधिकः ॥९७॥

परगुह्यगुप्तिनिपुणं गुणमयमखिलैः समीहितं नितराम् ॥
ललिताऽम्बरमिव सज्जनमाखव इव दूषयन्ति खलाः ॥ ९८ ॥

त्यजति च गुणान् सुदूरं तनुमपि दोषं निरीक्ष्य गृह्णाति ॥
मुक्ताऽलंकृतकेशान् यूकामिव वानरः पिशुनः ॥ ९९ ॥

---

१ अम्बुकणसमुदाय २ कम्पितः ३ आश्रयो निवासस्तत्र स्थितिः ४ सदाशिवस्य. ५ तालफलेन. ६ अन्तर्वाणिस्तु शास्त्रवित्. ७ दोषैकदक्त्वम्. ८ सूक्तय एव मुक्ता मुक्ताफलानि तासु. ९ सर्वेषामाल्हादके १० व्रणम् ११ शोधयति १२ मक्षिका. १३ शिवम्. १४ कुबेरात्. १५ संतापयति १६ 'गुणगुण' इतिशब्द कुर्वन् १७ नाशिताः १८ मेघानाम् १९ मालिन्यम् २० गुह्यगोपने निपुणम् २१ तन्तुप्रचुर पक्षे दयादाक्षिण्यादिप्रचुरम् २२ सूक्ष्मम् २३ 'ऊ' इतिलोके ।

कस्त्वं भद्र खलेश्वरोहमिह किं घोरे वने स्थीयते
शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योहमित्याशया ॥
कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः
प्रत्युत्पन्ननृमांसभक्षणाधियस्ते घ्नन्तु सर्वान्नरान् ॥ १००॥

अहो प्रकृतिसादृश्यं श्लेष्मणो दुर्जनस्यच ॥
मधुरैः कोपमायाति कटुकेनैव शाम्यति ॥ १०१ ॥

ईषल्लब्धप्रवेशोऽपि स्नेहविच्छेदकारकः ॥
कृतक्षोभो नरीनर्ति खलोमन्थनदण्डवत् ॥ १०२ ॥

विवृण्वती पुरस्तैक्ष्ण्यं पृष्ठतः कुर्वती गुणम् ॥
कर्णान्विध्यति लोकस्य सूचीवत्सूचकस्य वाक् ॥ १०३॥

दोषाऽऽलोकननिपुणाः परुषगिरो दुर्जनाश्च काकाश्च ॥
दर्शनमपि भयजननं येषामनिमित्तपिशुनानाम् ॥ १०४ ॥

पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् ॥
परदुःखमेव सौख्यं शिवशिव ते केन वेधसा सृष्टाः १०५ ॥

कवि गुरुं वा बुधमात्मजं वा योस्तं स्वतेजः प्रकटं निनाय ॥
दिनेदिने ऽसो ऽस्तमुपैति सूर्यः क्व स्वस्ति सर्वास्तमयोत्सुकाय १०६

मानमुपैति महानपि कलावतो मन्दिरे न मन्दस्य ॥
उच्चः कर्कगतः स्यादमरगुरुर्मकरगो नीचः ॥ १०७ ॥

दुर्जनवदनविनिर्गतवचनभुजङ्गेन सज्जनो दष्टः ॥
तद्विषघातनिमित्तं विद्वज्जनमौनमौषधं पिबति ॥ १०८ ॥

पूतना हरिवधार्थमाययौ प्राप सैव वधमात्मनस्ततः ॥
यः परस्य विषमं विचिन्तयेत्प्राप्नुयात्स कुमतिः स्वयं हि तत्॥१०९

न यत्नकोटिशतकैरपि दुष्टः सुधीर्भवेत् ॥

---

१ खलराजः २ व्याघ्रादिभिः ३ घातकपशुभिः ४ भक्षणीयः ५ स्वभावसाम्यम् ६ कफस्य. ७ स्वादुद्रव्यैः वचनैश्च. ८ अतिशयेन पुनः-पुनर्वा नृत्यति. ९ धूकपक्षे दोषा रात्रि. ।

किं मर्दितोपि कस्तूर्या लशुनो याति सौरभम् ११० ॥
अलं दुर्जनचित्तस्य सौजन्याऽऽप्तिप्रयत्नतः
नहि संतर्पितो दुग्धैरपि सर्पस्त्यजेद्विपम् ॥ १११ ॥
हा हन्त हन्त पिशुनाऽऽराधानापेक्षया वरम् ॥
दावानले ऽप्यवस्थानं मरणं वा ऽशनं विना ॥ ११२ ॥
कोनु कुर्यात्कदा ऽप्यत्र खलं निजवशं बुधः ॥
किमु कल्पान्तरेपि स्याज्जीवद्बकनिबन्धनम् ॥ ११३ ॥
क्वचित्सर्पोपि मित्रत्वमियान्मूर्खस्तु न क्वचित् ॥
न शेषशायिनो ऽप्यासीद्वशो दुर्योधनो हरेः ॥ ११४ ॥
खलास्तु दूरतस्त्याज्याः कण्टका इव सर्वथा ॥
येषां क्षणिकयोगेन सन्मार्गोऽप्यतिदुःखदः ॥ ११५ ॥
कल्याणेच्छुस्तु कः कुर्यात्कुवृत्तस्य कथामपि ॥
किं कोकिलोपि कलयेदाम्रेच्छुः पञ्चमं विना ॥ ११६ ॥
स्वप्नेपि मास्तु कस्यापि दुर्जनस्य समागमः ॥
यस्मात्कुजस्य संसर्गाद्वैरं बुधसुधाभृतोः ॥ ११७ ॥
गुणैरनेकैर्युक्तोपि दुष्टस्यैकस्य योगतः ॥
वर्ज्यएव पुमान्भूयाद्भुजंगस्येव चन्दनः ॥ ११८ ॥
असतां मास्तु कुत्रापि विलोकनमपि क्वचित् ॥
चतुर्थीन्दुं समीक्ष्यैव कृष्णोऽपि ह्यभिशापवान् ११९ ॥
त्यजति च गुणान्सुदूरं तनुमपि दोषं निरीक्ष्य गृह्णाति ॥
मुक्तालंकृतकेशान् यूकामिव वानरः पिशुनः ॥ १२० ॥

## विद्वत्प्रशंसा।

श्रीः ॥ रोहणं सूक्तिरत्नानां वन्दे वृन्दं विपश्चिताम् ॥
यन्मध्यपतितो नीचः काचोप्युच्चैर्महीयते[1] ॥ १ ॥

---

१ पूज्यते.' मणीयत ' इति पाठे मणिरिव गण्यत इत्यर्थः

[1]शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयाऽऽगमा
विख्याताः [2]कवयो वसन्ति [3]विषये यस्य प्रभोर्निर्धनाः ॥
तज्जा[4]ड्यं वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः
कुत्साः स्युः कुपरीक्षका न मणयो यै[5]रर्घतः पातिताः ॥ २ ॥

विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ॥
नहि वन्ध्या विजानाति [6]गुर्वीं [7]प्रसववेदनाम् ॥ ३ ॥

हर्तुर्याति न गोचरं [8]किमपि [9]शं पुष्णाति यत्सर्वदा
ह्यर्थिभ्यः प्रति[10]पाद्यमानमनिशं[11] प्राप्नोति वृद्धिं पराम् ॥
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमु[12]ज्झत नृपाः कस्तैः सह [13]स्पर्धते ॥ ४ ॥

अधिगतपरमार्थान्पण्डितान्माऽ[14]वमंस्था-
स्तृणमिव लघुलक्ष्मीर्नैव तान्सं[15]रुणद्धि ॥
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं [16]वारणानाम् ॥ ५ ॥

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ॥
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ६ ॥

इभतुरगशतैः प्रयान्ति मूर्खा धनरहिताश्च बुधाः प्रयान्ति पद्भ्याम् ॥
गिरिशिखरगताऽपि काकपङ्क्तिः [17]पुलिनगतैर्न समत्वमेति हंसैः॥७

अलंकरोति यः श्लोकं शुक एव न मध्यमः ॥
[18]अलं करोति यः श्लोकं शु[19]के एव नमध्यमः ॥ ८ ॥

---

१ शास्त्रसंस्कारेण शुद्धा ये शब्दास्तैः सुन्दरा गिरो येषां ते २ पण्डिताः ३ देशे ४ मौर्ख्यम् ५ मूल्यत. ६ महतीम् ७ प्रसवकाले या वेदना ताम् ८ अचिन्त्यम् ९ सुखम् १० दीयमानम् ११ निरन्तरम् १२ त्यजत १३ स्पर्धां करोति १४ अवमानं मा कुरु. १५रोधं न कुरुते. १६ गजानाम् १७ सैकतगतैः १८ पर्याप्तं करोति. निषेधति तिरस्करोतीति यावदिति वा. १९ नमध्यमः शुकः नकारो मध्ये यस्य एवं विधः शुनकः श्वा इत्यर्थः

उ[१]दीरितोऽर्थः पशुनाऽपि गृह्यते हयाश्च नागाश्च वहन्ति नोदिताः[२]॥
अनुक्तमप्यू[३]हति पण्डितो जनः परेङ्गि[४]तज्ञानफला हि बुद्धयः ॥ ९ ॥

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः ॥
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको न लभ्यते ॥ १० ॥

स[५]दोषमपि निर्दोषं भवत्यग्रे विपश्चितः ॥
रा[६]मस्येवा[७]र्जुनवपुः कवेश्च सरसं वचः ॥ ११ ॥

अन्या जग[८]द्धितमयी मनसः प्रवृत्ति-
रन्यैव काऽपि रचना वचनाऽऽवलीनाम् ॥
लोकोत्तरा च कृतिराकृतिरङ्ग हृद्या
विद्यावतां सकलमेव गिरां दवी[९]यः ॥ १२ ॥

गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वे[१०]डाविवेश्वरः ॥
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ १३ ॥

स्थिरा शै[११]ली गुणवतां खलबुद्ध्या न बाधते ॥
रत्नदीपस्य हि शिखा वा[१२]त्यया ऽपि न नाश्यते ॥ १४ ॥

यदि सन्ति गुणाः पुंसां विकसन्त्येव केवलम् ॥
नहि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते ॥ १५ ॥

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ॥
पङ्कच्छिदः फल[१३]स्येव निकषेणाऽऽविलं[१४] पयः[१५] ॥ १६ ॥

अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् ॥
अ[१६]व्ययेभ्योऽपि ये चाऽर्थान् निष्कर्षन्ति सहस्रशः ॥ १७ ॥

---

१ उच्चारितः २ प्रेरिताः ३ तर्कयति ४ अभिप्रायः ५ दोषसहित पक्षे दोषोहस्तास्तत्सहितम् ६ परशुरामस्य ७ सहस्रार्जुनशरीरम् ८ लोकहितप्रचुरा. ९ अतिदूरम् १० गरलम् ११ रीति १२ 'वावटल' इति लोके १३ कतक फलस्येव. १४ कलुषम् 'गढूळ, इतिलो० १५ उदकम् १६ अव्ययेभ्यः अ-व्ययानामनेकार्थत्वात्. पक्षे व्ययरहितेभ्यः कृपणेभ्य. इति यावत्.

कलावतः[1] सैव कला ययाऽधः[2] क्रियते भवः[3] ॥
बह्वीभिश्च कलाभिः किं याभिरङ्कः[4] स्फुटीकृतः[5] ॥ १८ ॥
ॐकारावर्तरम्या यजुरमलजला सामगम्भीरघोषा
ऋग्वेदाथर्वकूला क्रमपदपुलिना न्यायशास्त्रोत्तरङ्गा ॥
अङ्गग्राहावनद्धा शतपथगमना ब्रह्मविद्यार्णवान्ता
विद्वद्वाग् जान्हवीयं क्षपयति दुरितं सर्वदा शर्मदा नः ॥ १९

## मूर्खवर्णनम् ।

श्रीः ॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ॥
ज्ञानलवदुर्विदग्धं[6] ब्रह्माऽपि तं नरं न रञ्जयति[7] ॥ १ ॥
प्रसह्य[8] मणिमुद्धरेन्मकरवक्त्रदंष्ट्राऽङ्कुरा-
त्समुद्रमपि संतरेत्प्रचलदूर्मिमालाऽऽकुलम् ॥
भुजंगमपि कोपितं शिरसि पुष्पवद्धारये-
न्नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत्[9] ॥ २ ॥
लभेत सिकतासु[11] तैलमपि यत्नतः पीडयन्
पिवेच्च मृगतृष्णिकासु[10] सलिलं पिपासार्दितः ॥
कदाचिदपि पर्यटञ्छशविषाणमासादये-
न्नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ३ ॥
व्यालं[13] बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
छेत्तुं वज्रमणीञ्[15] शिरीषकुसुमप्रान्तेन[16] सन्नह्यते[17] ॥
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते[18]
नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः[19] ॥ ४ ॥

---

१ चन्द्रस्य पक्षे विदुषः २ अधोभागे क्रियते पक्षे तिरस्क्रियते. ३ शिवः संसारश्च. ४ कलङ्कः दोषश्च. ५ स्पष्टीकृतः ६ विकृतिभाव गतम् ७ रञ्जयितुमसमर्थो भवति ८ बलात्कारं कृत्वा ९ ज्ञानलेशशून्यत्वेन विपरीतार्थग्राही. १० मरीचिकासु ११ वालुकासु. १२ शशशृङ्गम् १३ सर्पम् १४ बिसम् १५ हरिकादीन्. १६ सर्षपपुष्पम् १७ सन्नद्धो भवति. १८ इच्छति. १९ अमृतस्राविभिः

यदा किंचिज्ज्ञोऽहं द्विप[1] इव मदाऽन्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं[2] मम मनः ॥
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर[3] इव मदो मे व्यपगतः ॥ ५ ॥
कृमि[4]कुलचितं लाला[5]क्लिन्नं विगन्धि[6] जुगुप्सितं[7]
निरुपमरसं प्रीत्या खादन्नराऽस्थि निरामिषम्[8] ॥
सुर[9]पतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम्[10] ॥ ६ ॥
शिरः शार्वं[11] स्वर्गात्पशुपतिशिरस्तः[12]क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चाऽपि जलधिम् ॥
अधोऽधो गङ्गेयं पदमुपगता स्तोकमधुना
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ७ ॥
शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्याऽऽतपो
नागेन्द्रो निशि[13]ताङ्कुशेन समदो दण्डेन गोगर्दभौ ॥
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ८ ॥
सा[14]हित्यसंगीत[15]कलाविहीनः साक्षात्पशुः पुच्छविषा[16]णहीनः ॥
तृणं न खादन्नपि जीवमानस्तद्भाग[17]धेयं परमं पशूनाम् ॥ ९ ॥
येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः ॥
ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥१०॥

---

१ गज इव. २ सगर्वम् ३ सन्तापः यद्वा ज्वरे इवेतिच्छेदः ज्वरे यथा मदो गच्छति तथेत्यर्थः ४ कीटकसमूहैर्व्याप्तम् ५ लालयाक्लिन्नमार्द्रम् ६ आमगन्धि ७ गर्हितम् ८ निर्मांसम् ९ इन्द्रम्. १० क्षुद्रकत्वम् ११ शार्वसंबन्धि. १२ मस्तकात्. १३ तीक्ष्णः १४ साहित्यशास्त्रम् १५ गायनम् १६ शृङ्गम् १७ दैवम् ।

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ॥
न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि[1] ॥ ११ ॥

यस्य नाऽस्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ॥
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १२ ॥

मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादतिशीतलः ॥
यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ १३ ॥

गुणिगणगणनाऽऽरम्भे न पतति कठिनी[2] सुसंभ्रमाद्यस्य ॥
तेनाऽम्बा यदि सुतिनी[3] वद वन्ध्या कीदृशी भवति ॥१४॥

अन्तःसार[4]विहीनस्य सहायः किं करिष्यति ॥
मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ १५ ॥

मुक्ताफलैः किं मृगपक्षिणां च मिष्टान्नपानं किमु गर्दभानाम् ॥
अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥१६॥

व्यासादीन्कविपुङ्गवान्[5]नुचितैर्[6]वाक्यैः सलीलं हस-
न्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान् सगर्वं पठन् ॥
काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥१७॥

ये संसत्सु विवादिनः परयशःशल्येन शूलाऽऽकुलाः
कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद्गुणाच्छादनम् ॥
तेषां रोषकषायितोदरदृशां[7] कोपोष्णनिश्वासिनां
दीप्ता रत्नशिखेव कृष्णफणिनां[8] विद्या जनोद्वेगिनी[9]॥१८॥

ग्रीवास्तम्भभृतः[10] परोन्नति[11]कथामात्रे शिरःशूलिनः
सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः ॥

---

१ सुरेन्द्रणा भवनेषु स्वर्गादिलोकेष्वपीत्यर्थः २ लेखनी तत्स्थानीया कनिष्ठिकाङ्गुलिर्वा, ३ पुत्रिणी, ४ मज्जा स्थिरांशो बल वा. ५ कविश्रेष्ठान्. ६ अयोग्यै ७ रोषेण कषायितं ताम्रं उदर गर्भो यस्या एव विधा दृक् येषाम्. ८ कृष्णसर्पाणाम् ९ त्रासदात्री. १० ग्रीवास्तम्भ धारयत ११ परोत्कर्षः

अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिश्वासिनः
कष्टा नूनम[1]पण्डितस्य विकृ[2]तिर्भीमज्वरा[3]रम्भभूः ॥ १९ ॥

वि[4]तरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे[5]
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यप[6]हन्ति वा ॥
भवति च पुनर्भूया[7]न् भेदः फलं प्रति तद्यथा
प्रभवति तथा बिम्ब[8]ग्राहे मणिर्न मृदां[9] चयः ॥ २० ॥

मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाऽष्टौ गुणा
निश्चिन्तो बहुभोजको ऽतिमुखरो रात्रिंदिवं स्वप्नभाक् ॥
कार्याकार्यविचारणान्धबधिरो मानापमाने समः
प्रायेणाम[10]यवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥२१॥

मूर्खचिह्नानि षडिति गर्वो दुर्वचनं मुखे ॥
विरोधी विषवादी च कृत्याऽकृत्यं न मन्यते ॥ २२ ॥

मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाऽशुभाः ॥
अशुभं वाक्यमादत्ते पुरीष[11]मिव सूकरः ॥ २३ ॥

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ २४ ॥

अरण्यरुदितं कृतं शव[12]शरीरमुद्वर्तितं[13]
स्थलेऽब्जमवरोपितं सुचिरमूषरे[14] वर्षितम् ॥
श्वपुच्छमवनामितं बधिरकर्ण[15]जापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ २५ ॥

न मौर्ख्यसदृशं क्वापि विषं क्वाप्यवलोक्यते ॥
यदन्यान्स्वाश्रयं चापि भूयो मारयति स्फुटम् ॥ २६ ॥

---

१ मूर्खस्य. २ विकारः ३ दारुणज्वरारम्भकभूमिः ४ ददाति. ५ मूर्खे ६ नाशयति. ७ महान्. ८ बिम्बग्रहणे. ९ मृत्पिण्डः १० रोगवर्जितः ११ शकृत् १२ प्रेतशरीरम् १३ उद्वर्तनेन सुगन्धितम् १४ पाषाणादिप्रचुरप्रदेशे. १५ कर्णमन्त्रः

किं नानानरकैः किं वा यमयातनयापि च ॥
यन्मौढ्यमेव सर्वाणि दुःखान्यासादयिष्यति ॥ २७ ॥
अज्ञानतिमिरस्यैव प्रसादेनायमात्मनः ॥
मुक्ताहारोपि बहुधा भोगीन्द्रत्वं गतः किल ॥ २८ ॥
न मद्यं मादकं तादृक्कान्ता नापि च काञ्चनम् ॥
यथेदमविवेकित्वं प्रत्यक्षेणानुभूयते ॥ २९ ॥
मूर्खताख्या पिशाचीयं यस्य चेतसि संविशेत् ॥
तमेव भ्रामयत्याशापंचके ऽप्यनिशं वृथा ॥३०

## सदुपदेशः

श्रीः ॥ तृष्णां छिन्धि[1] भज क्षमां जहि[2] मदं पापे रतिं[3] मा कृथाः
सत्यं ब्रूह्यनुपाहि साधुपदवीं[4] सेवस्व विद्वज्जनान् ॥
मान्यान्मानय विद्विषोऽप्यनुनय[5] ह्याच्छादय स्वान्गुणा-
न्कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ १ ॥
यावत्स्वस्थमिदं शरीरमरुजं[6] यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ॥
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने तु कूपखनने प्रत्युद्यमः[7] कीदृशः ॥ २ ॥
मूढ जहीहि[8] धनागमतृष्णां कुरु तनुबुद्धे[9] मनसि वितृष्णाम् ॥
यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥ ३ ॥
अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् ॥
पुत्रादपि धनभाजां[10] भीतिः सर्वत्रैषा विहिता रीतिः ॥ ४ ॥
का तव कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः[11] ॥
कस्य त्वं वा कुत आयतस्तत्त्वं[12] चिन्तय[13] तदिदं भ्रातः ॥ ५ ॥

---

१ नाशय २ घातय ३ प्रीतिम् ४ साधुमार्गम् ५ विद्विषा क्रोधापनयन कुर्वित्यर्थः ६ रुजारहितम् ७ प्रतीकारार्थमुद्योग ८ त्यज ९ अल्पबुद्धे. १० धनवताम् ११ विलक्षण. १२ वास्तवम् १३ विचारं कुरु.

मा कुरु धनजनयौवनगर्वं हरति निमेषात्[1] कालः सर्वम् ॥
मायामयम्[2] इदम्[3] अखिलं हित्वा[4] ब्रह्मपदं प्रविशाऽऽशु[5] विदित्वा[6] ॥६॥
नलिनीदलगतजलवत्तरलं तद्वज्जीवनमतिशयचपलम् ॥
क्षणमपि सज्जनसंगतिरेका भवति भवार्णवतरणे नौका ॥ ७ ॥

यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः[7] ॥
तदनु च जरया जर्जरदेहे वार्तां कोऽपि न पृच्छति गेहे ॥ ८
कामं क्रोधं लोभं मोहं त्यक्त्वाऽऽत्मानं[8] पश्य हि कोऽहम् ॥
आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः ॥ ९ ॥

बालस्तावत्क्रीडाऽऽसक्तस्तरुणस्तावत्तरुणीरक्तः ॥
वृद्धस्तावच्चिन्तामग्नः परे ब्रह्मणि कोऽपि न लग्नः ॥ १० ॥
शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रह[9]संधौ[10] ॥
भव समचित्तः[11] सर्वत्र त्वं वाञ्छस्यचिराद्[12]यदि सत्[13]त्वम् ॥११॥
महता पुण्यपण्येन[14] क्रीतेयं कायनौस्[15]त्वया ॥
पारं दुःखोदधेर्[16]गन्तुं तर[17] यावन्न भिद्यते ॥ १२ ॥

दधाति तावदमी विषयाः सुखं स्फुरति तावदियं हृदि मूढता[18] ॥
मनसि तत्त्वविदां च विवेचके क्व विषयाः क्व सुखं क्व परिग्रहः ॥ १२

मन्निन्दया यदि जनः परितोषम्[19] एति
नन्वप्रयत्नसुलभोऽयमनुग्रहो[20] मे ॥
श्रेयोऽर्थिनोऽपि[21] पुरुषाः परतुष्टिहेतो[22]-
र्दुःखाऽर्जितान्यपि धनानि परित्यजन्ति ॥ १३ ॥

---

१ निमेषमात्रेण २ अविद्यारूपम् ३ पुरोवर्तिजगत् ४ त्यक्त्वा ५ शीघ्रम्. ६ ज्ञात्वा. ७ अनुरक्तः ८ आत्मस्वरूपम् ९ विरोध १० सख्यम्. ११ सर्वभूतेषु समानबुद्धिः १२ शीघ्रम् १३ सद्रस्तु. १४ पुण्यमेव पण्य द्रव्यम् १५ काय एव नौः नौका १६ दुःखसमुद्रस्य १७ 'तरून जा, इति लोके. १८ अज्ञानम् १९ संतोषम् २० प्रसादः २१ कल्याणेच्छवः २२ अन्यसन्तोषः

धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी[1]
सत्यं सूनुरयं[2] दया च भगिनी भ्राता मनःसंयमः[3] ॥
शय्या भूमितलं दिशोऽपि वसनं[4] ज्ञानामृतं भोजन-
मेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः॥१४॥
क्लेशत्यागकृते[5]ऽर्पितेन करणव्यूहेन[6] देहेन च
स्वाँऽनर्थं[7] बत[8] जन्तुरार्जयति चेन्मन्तुं[9]र्नियन्तुः कुतः ॥
शस्त्रे शत्रुजयाय नैजगुरुणा[11] दत्तेऽथ तेनैव चे-
त्पुत्रो हन्ति निजं वपुः कथय रे तत्राऽपराधी तु कः ॥ १५ ॥

## सत्कविः ।

श्रीः ॥ जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ॥
नास्ति येषां यशःकाये[12] जरामरणजं भयम् ॥ १ ॥
काव्यप्रपञ्चचञ्चू[13] रचयति काव्यं न सारविद्भवति ॥
तरवः फलानि सुवते विन्दति सारं मतङ्गसमुदायः ॥२॥
अनन्तपद[14]विन्यासरचना सरसा कवेः[15] ॥
बुधो[16] यदि समीपस्थो न कुजन्मा[17] पुरो यदि ॥ ३ ॥
कविरहिताः[18] कविलापा जायन्ते कण्ठशोषणायैव ॥
संमुखगतः कविश्चेद्भवति कुलपिता[19]ऽपि कविकुलपितैव ॥ ४ ॥

---

१ गृहस्था पत्नी. २ पुत्रः ३ मनोनिग्रह ४ वस्त्रम् ५ क्लेशनाशाय. ६ इन्द्रियसमूहेन. ७ स्वकीयानिष्टम् ८ बत इति खेदे. ९ सपादयति १० अपराध. ११ स्वगुरुणा. १२ कीर्तिशरीरे १३ वित्त. १४ अनेकपदानि. पक्षे अनन्तपदं विष्णुपदम् आकाशमित्यर्थ १५ कवयितु पक्षे शुक्रस्य. १६ पण्डित. पक्षे बुधग्रहः १७ नीच पक्षे कुः पृथ्वी तस्याः जन्म यस्य मङ्गलस्येत्यर्थः १८ कविना रहिताः कवेर्लापा उक्तयः पक्षे ककारेण रहिता कविलापा विलापा इत्यर्थः १९ कुत्सित लपिता वक्तापि कविशब्दः पृष्ठतो युक्तश्चेत्कुलपितापि कविकुलपितैव भवति इति कविहृदयम्.

नूनं निसर्गतः कविरूढमलप्रशमने हि सरसानां ॥
प्रतिकूलतापि न भवेदनर्थकृत्कतकवत्कदाचिदपि ॥ ५ ॥
विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः ॥
कुलजा या सा जाया केवलजाया तु केवलं माया ॥ ६ ॥
कविः करोति पद्यानि लालयत्युत्तमो जनः ॥
तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम्[1] ॥ ७ ॥
कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति ॥
कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः[2] ॥ ८ ॥
कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ॥
नह्यकूपारवत्[3] कूपा वर्धन्ते विधुकान्तिभिः ॥ ९ ॥
किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ॥
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥१० ॥
उत्फुल्लगल्लैरापालाः क्रियन्ते दुर्मुखैः सुखम् ॥
जानाति हि पुनः सम्यक् कविरेव कवेः श्रमम् ॥ ११ ॥
अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते
वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् ॥
अर्थाऽलङ्कृतिसद्रसद्रवमुचां[4] वाचां प्रशस्तिस्पृशां
कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥ १२ ॥
मद्वुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादलसपुरुषाऽनादरभरैः ॥
यथा यूनस्तद्वत्परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ॥ १३ ॥
लौकिकानां हि साधूनामर्थं वागनुवर्तते ॥
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १४ ॥

---

१ सौगन्ध्यम् २ कीर्तिप्रकाशः ३ समुद्रवत्. ४ ---मीक्ष्यादीनाम्.

माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः
श्रीहर्षः कालिदासः कविरथभवभूत्याह्वयो भोजराजः ॥
श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः
ख्याताश्चाऽन्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाल्हादयन्ति १५॥

काव्यं करोति सुकविः सहृदय[1] एव व्यनक्ति[2] तत्तत्त्वम् ॥
रत्नं खनिः प्रसूते रचयति शिल्पी तु तत्सुषमाम्[3] ॥ १६ ॥

मन्दं निक्षिपते पदानि[4] परितः शब्दं[5] समुद्वीक्षते
नानार्थाहरणं[6] च काङ्क्षति मुदाऽलंकारमाकर्षति[7] ॥
आदत्ते सकलं सुवर्णनिचयं[8] धत्ते रसोऽन्तर्गतं[9]
दोषांऽन्वेषणतत्परो[10] विजयते चोरोपमः सत्कविः ॥ २७ ॥

## कुकविनिन्दा ।

श्रीः ॥ गणयन्ति नाऽपशब्दं[11] न वृत्तभङ्गं[12] क्षयं न चार्थस्य[13] ॥
रसिकत्वेनाऽऽकुलिता वेश्यापतयः[14] कुकवयश्च ॥ १ ॥

अप्रगल्भाः पदन्यासे[15] जननीरागहेतवः[16] ॥
सन्त्येके बहुलालापाः[17] कवयो बालका इव ॥ २ ॥

द्राघीयसा[18] धार्ष्ट्यगुणेन युक्ताः कैःकैरपूर्वैः परकाव्यखण्डैः ॥
औडम्बरं[19] ये वचसां वहन्ति ते केचिदार्याः कवयो जयन्ति॥३

१ सरसहृदय. २ प्रकाशयति. ३ शोभाम् ४ सुप्तिङन्तादीनि अन्यत्र पादविक्षेपे चरणान् ५ शब्दः शुद्धो वापशब्दो वेति सम्यग्विचारयति. पक्षे ध्वनिम् ६ श्लेषेण ध्वनिना वा अनेकार्थाना संपादनम् पक्षे सुवर्णरूप्यादीना हरणमिच्छति. ७ उपमाद्यलङ्कारम् पक्षे कङ्कणादिभूषणम् ८ सुष्टु वर्णाना सञ्चय. पक्षे हेमसंचयम् ९ शृङ्गारादिरसमिश्रम् पक्षे रसा पृथ्वी तदन्तर्गतम् १० दोषाः काव्यदोषास्तेषामन्वेषणं गवेषण तस्मिंस्तत्पर आसक्त. पक्षे दोषा रात्रिस्तस्यामन्वेषणम्. ११ दुःशब्दं १२ वृत्तानिप्रहर्षिणीमालिनीवंशस्थादीनि तेषाभङ्ग पक्षे शीलभङ्गम् १३ वाच्यस्य पक्षे द्रव्यस्य. १४ जाराः १५ पदनवेशने पदंसुप्तिङन्त.पक्षेअङ्घ्रि १६ जनानां नीरागो विरसता तस्य हेतवः पक्षे जनन्याः मातु रागहेतव. प्रीतिहेतुभूताः १७ बहुला आलापाः येषा.पक्षे बह्वी या लाला ता पिबन्ति ते. १८ अतिदीर्घेण. १९ प्रागल्भ्यम्.

कविभिर्नृपसेवासु वित्ताऽलंकारहारिणी ॥
वाणी वेश्येव लोभेन परोपकरणी कृता ॥ ४ ॥
अन्[1]यवर्णपरावृत्त्या बन्धचिह्न[2]निगूहनैः ॥
अनाख्यातः सतां मध्ये कविश्चोरो विभाव्यते ॥ ५ ॥

## कविता ।

श्रीः॥ सम[3]लंकरोति काव्यं सुकविः कुकविश्च तदुभयं काव्यम् ॥
[4]अनलंकरोति चित्ते सद्यः स्वश्रवणमात्रेण ॥ १ ॥

अविदितगुणापि सुकवेर्भणि[5]तिः कर्णेषु कि[6]रति मधुधाराम् ॥
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला ॥ २ ॥
कान्दृच्छामः सुधा स्वर्गे निवसामो वयं भुवि ॥
किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ ३ ॥
सद्भिर्भाव्ये हिते काव्ये वृथा दुर्जनगर्जनम् ॥
चण्डीशाङ्कीकृते चन्द्रे ऽरुं[7]तुदः किं विधुंतुदः ॥ ४ ॥
कविः पिता पोषयति पालको रसिकः पतिः ॥
कविता युवतेर्नूनं सोदरास्तु विवेकिनः ॥ ५ ॥
त एव पदविन्यासास्ता एवाऽर्थविभूतयः ॥
तथाऽपि नव्य भवति काव्यं ग्रथनकौशलात् ॥ ६ ॥
सरसाऽपि कवेर्वाणी हरिनामाङ्किता यदि ॥
साऽऽदरं गृह्यते तज्ज्ञैः शुक्तिर्मुक्ताऽन्विता यथा ॥ ७ ॥
कृतमन्दपद[8]न्यासा विकच[9]श्रीश्चारुशब्द[10]भङ्गवती ॥
कस्य न कम्पयते कं[11] जरेव जीर्णस्य सत्कवेर्वाणी ॥ ८ ॥

---

१ वर्णान्तरपरिवर्तनेन २ गोपनैः ३ सम्यगलंकरोति पक्षे सदोषम् ४ अलंभावाभावम्. पक्षेअनलवद्दाहम्. ५ उक्तिः ६ वर्षति. ७ मर्मस्पृक्- ८ सुप्तिङन्तम्. पक्षे चरणः ९ प्रफुल्लाशोभा. पक्षे विगता कचश्रीः केशशोभा यस्याः १० चारवः ये शब्दभङ्गा. रचनाविशेषास्तद्वती पक्षे स्खलितशब्दवती ११ शिरः

सरसा साऽलंकारा सुपदन्यासा सुवर्णमयमूर्तिः ॥
आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥ ९ ॥
अतिरमणीये काव्ये पिशुनोऽन्वेषयति दूषणान्येव ॥
अतिरमणीये वपुषि व्रणमिव हि मक्षिकानिकरः ॥ १० ॥
कर्णाऽमृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान्खलस्य ॥
अवेक्षते केलिवनं प्रविष्टः क्रमेलकः[1] कण्टकजालमेव[2] ॥ ११ ॥

## विद्याप्रशंसा ।

श्रीः ॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं[3] धनं
विद्या भोगकरी यशःसुखकरी विद्यागुरूणां गुरुः ॥
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥ १ ॥
सद्विद्या यदि का चिन्ता वैराकोदरपूरणे[4] ॥
शुकोऽप्यशनमाप्नोति हरेराम इति ब्रुवन् ॥ २ ॥
मातेव रक्षति पितेव हिते नियुङ्क्ते[5]
कान्तेव चाऽपि रमयत्यपनीय खेदम् ॥
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किंकिं न साधयति कल्पलतेव विद्या ॥ ३ ॥
न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि ॥
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ ४ ॥
विद्यया विनयाऽवाप्तिः सा चेदविनयावहा ॥
किं कुर्मः कं प्रति ब्रूमो गरदायां[6] स्वमातरि ॥ ५ ॥
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्[7] ॥
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ ६ ॥
किं कुलेन विशालेन[8] विद्याहीनस्य देहिनः ॥
अकुलीनोऽपि विद्यावान्देवैरपि स पूज्यते ॥ ७ ॥

---

१ उष्ट्र २ ब्रह्मदण्डीकण्टकारिकादिकण्टकसमूहम् ३ अन्तर्हितम् ४ क्षुल्लकम् ५ नियोजयति. ६ विषदायिन्याम्. ७ नास्त्युत्तमं यस्मात् ८ विस्तीर्णेन.

वीणेव श्रोत्रहीनस्य लोला[1]ऽक्षीव वि[2]चक्षुषः ॥
व्य[3]सोः कुसुममालेव विद्या स्तब्धस्य निष्फला ॥ ८ ॥
ग[4]तेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः ॥
यद्यपि स्यान्न फलदा सुलभा साऽन्यजन्मानि ॥ ९ ॥
शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना ॥
न गुह्यगोपने शक्तं न च दं[5]शनिवारणे ॥ १० ॥
अपूर्वो भाति भारत्याः काव्यामृतफले रसः ॥
चर्वणे सर्वसामान्ये स्वादुवित्केवलं कविः ॥ ११ ॥

## धनिधनयोर्निन्दा।

श्रीः ॥ व[6]रं हालाहलं पीतं सद्यः प्राणहरं विषम् ॥
न द्रष्टव्यं धनाढ्यस्य भ्रू[7]भङ्गकुटिलं मुखम् ॥ १ ॥
लिङ्गिताश्च परै[8]र्यान्ति प्रस्खलन्ति समे पथि ॥
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ २ ॥
भ[9]क्तद्वेषो ज[10]डप्रीतिः सुरुचिर्गु[11]रुलङ्घने ॥
मुखे क[12]टुकता नित्यं धनिनां ज्वरिणामिव ॥ ३ ॥
वाक्चक्षुःश्रोत्रलयं लक्ष्मीः कुरुते नरस्य को दोषः ॥
गरलसहोदरजाता न मारयति यच्च तच्चित्रम् ॥ ४ ॥
लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ॥
शेषे धराभरक्लान्ते शेते नारायणः सुखम् ॥ ५ ॥
यस्याऽस्ति वित्तं स नरः कुलीनः स पण्डितः स श्रु[13]तवान्गुणज्ञः ॥
स एव वक्ता स च द[14]र्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥६॥

---

१ चञ्चलाक्षी मृगनयनेतियावत्. २ अन्धस्य. ३ प्राणरहितस्य प्रेतस्येतियावत्. ४ वृद्धत्वेपि. ५ वनमक्षिका. ६ मनाक्प्रियम् ७भ्रुकुटिमोटनेन वक्रम्. ८ अविषमे. ९ भक्ता. सेवकास्तेषा द्वेषः पक्षे भक्तमन्न तद्द्वेषः १० जडेषु मूर्खेषु प्रीतिः पक्षे डलयोः सावर्ण्यात् जले रुचि· ११गुरूणा पित्रादीनामुल्लङ्घने पक्षे गुरुलङ्घनमुपवासस्तस्मिन् अतिप्रीतिः १२ कटुभाषित्व पक्षे कटुत्वम्. १३ शास्त्रज्ञः १४ प्रेक्षणीयः

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ॥
यस्याऽर्थः स पुमाँल्लोके यस्याऽर्थः स च पण्डितः ॥ ७ ॥

वयोवृद्धास्तपोवृद्धा ज्ञानवृद्धास्तथा परे ॥
ते सर्वे धनवृद्धस्य द्वारि तिष्ठन्ति किङ्कराः ॥ ८ ॥

जातिर्यातु रसातलं गुणगणस्तस्याऽप्यधो गच्छतु
शीलं शैलतटात्पतत्वभिजनः संदह्यतां वन्हिना ॥
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ९ ॥

धिगस्त्वेतां विद्यां धिगपि कवितां धिक्सुजनतां
वयोरूपं धिक्धिक् धिगपि च यशो निर्धनवतः ॥
असौ [1]जीयादेकः सकलगुणहीनोऽपि धनवान्
बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ॥ १० ॥

धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ॥
अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ११ ॥

ब्रह्मघ्नोऽपि नरः पूज्यो यस्याऽस्ति विपुलं धनम् ॥
शशिना तुल्यवंशोऽपि निर्धनः [2]परिहीयते ॥ १२ ॥

विभवो हि यथा लोके न शरीराणि देहिनाम् ॥
चाण्डालोऽपि नरः पूज्यो यस्याऽस्ति विपुलं धनम् ॥ १३ ॥

न विद्यया नैव कुलेन गौरवं
जनाऽनुरागो धनिकेषु सर्वदा ॥
[3]कपालिना [4]मौलिधृताऽपि जान्हवी
प्रयाति रत्नाऽऽकरमेव सत्वरम् ॥ १४ ॥

त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च ॥
तमर्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥१५॥

---

१ प्राणान् धारयतु. २ परिभवं प्राप्नोति ३ शंकरेण ४ मस्तकः

प्रायेण धनिनामेव धनलोभो निरन्तरम्[1] ॥
यच्च कोटिद्वयोपेतं लक्षं प्रार्थयते धनुः ॥ १६ ॥
कुत आगत्य घटते विघट्य क्व नु याति च ॥
न लक्ष्यते गतिः सम्यग्घनस्य च धनस्य च ॥ १७ ॥
वित्तार्थं यतसे[5] भृशं[6] यदनिशं शंसार्थमप्यात्मनो[2]
व्यर्थं तन्मम मित्र तत्र भवतो नाऽऽत्यान्तिकं स्यात्सुखम्॥
गुर्वाराधनतत्परेण मनसा कुर्वात्म[3]शंसो[4]धनं
किं तस्मिन्नुपलभ्यते नहि धनं नो वाऽऽत्मनः शंसनम्॥१८॥
कुतः श्रियै त्वं यतसे निष्कामं श्रीरामदासो भव मानव त्वम् ॥
श्रीरामदासस्य[7] पराङ्मुखस्य सदानपायिन्युपतिष्ठते श्रीः ॥१९॥
गङ्गां च धारयति मूर्ध्नि सदा कपाली
सा तस्य चुम्बति मुखं न कदाचिदेव ॥
रत्नाकरं प्रति चुचुम्ब सहस्रवक्त्रै-
र्गङ्गादयो युवतयः सधनानुकूलाः ॥ २० ॥
तानीन्द्रियाण्य[8]विकलानि मनस्तदेव
सा बुद्धिरप्रतिहता[9] वचनं तदेव ॥
अर्थोष्मणा[10] विरहितः पुरुषः स एव
ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥ २१ ॥
अहो कनकमाहात्म्यं वक्तुं केनाऽपि शक्यते ॥
नामसाम्यादहो चित्रं धत्तूरोऽपि मदप्रदः ॥ २३ ॥
वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च ॥
तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥२४ ॥
दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति[11] भूमीभुजो

---

१ निरतरम् २ स्तुतिः ३ आत्मसुखम् ४ उपाय. पक्षे आत्मशंसा, धनं, इत्युपलभ्यते ५ यत्न करोषि. ६ अत्यन्तम्. ७ श्रीरामदासशब्दो विलोम.कृतश्चेत् सदाअमराअनपायिनीश्रीरितिभवति. ८ वैकल्यरहितानि. ९ अखण्डिता. १० द्रव्यरूपोष्णतया ११ हरन्ति

दूरेण च्छलमाकलय्य हुतभुग्भस्मीकरोति क्षणात् ॥
अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ति ध्रुवं
दुर्वृत्तास्तनया नयन्ति निधनं धिग्धिग्धनं तद्बहु॥२५॥

वाणी दरिद्रस्य शुभा हिताऽपि ह्यर्थेन शब्देन च संप्रयुक्ता॥
न शोभते वित्तवतः समीपे भेरीनिनादोपहतेव वीणा ॥२६॥

हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य ॥
अप्यतिपरुषमसत्यं पूज्यं वाक्यं समृद्धस्य ॥ २७ ॥

न वित्तं दर्शयेत्प्राज्ञः कस्य चित्स्वल्पमप्यहो ॥
मुनेरपि वनस्थस्य मनश्चलति दर्शनात् ॥ २८ ॥

लक्ष्म्या परिपूर्णोऽहं न भयं मेऽस्तीति मोहनिद्रैषा ॥
परिपूर्णस्यैवेन्दोर्भवति भयं सिंहिकासूनोः ॥ २९ ॥

पतन्ति खड्गधारासु विशन्ति मकरालयम् ॥
किं न कुर्वन्ति सुभगे कष्टमर्थोऽर्थिनो जनाः ॥३० ॥

न सा विद्या न तच्छीलं न तद्दानं न सा कला ॥
अर्थार्थिभिर्न तच्छौर्यं धनिनां यन्न कीर्त्यते ॥ ३१ ॥

बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति ॥
विकृतयति गात्रयष्टिं संपद्रोगोऽयमद्भुतो राजन् ॥३२॥

दैववशादुत्पन्ने सति विभवे यस्य नाऽस्ति भोगेच्छा ॥
नच परलोकसमीहा स भवति धनपालको मूर्खः ॥३३॥

दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनंधनंधनम् ॥
इत्थमेव निनदः प्रवर्तते किं पुनर्यदि जनः सचेतनः॥३४॥

अर्जुनीयति यदर्जने जनो वर्जनीयजनतर्जनादिभिः ॥
मङ्क्षु नश्यति चिराय सञ्चिता वञ्चिता जगति केन संपदा ॥३५॥

---

१ कपटम्. २ अग्निः ३ दुराचरणा. ४ नाशम् ५ कल्याणी. ६ दुन्दुभिध्वनिलुप्तेव. ७ अतिकठोरम् ८ राहोः ९ समुद्रम्. १० त्रिलक्षणः ११ इच्छा. १२ धनधनंधनमित्यनुकरणशब्दः १३ धवलो भवति. १४ भयत्रासादिभि· १५ झटिति.

आपद्गतं[1] हससि किं द्रविणान्धमूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ॥
एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे[2]
रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ ३६ ॥

लभेद्यदयुतं[3] धनं तदधनं धनं यद्यपि
लभेत नियुतं[4] धनं निधनमेव तज्जायते ॥
तथा धनैपरार्धकं[5] तदपि भावहीनात्मकं
यदक्षर[6]पदद्वयान्तरगतं धनं तद्धनम् ॥ ३७ ॥

अनुभवत ददत वित्तं मान्यान्मानयत सज्जनान्भजत ॥
अतिपरुषपवनविलुलितदीपशिखाचञ्चला लक्ष्मीः ॥ ३८ ॥

धिग्धिग्धनं महानर्थनिधानं मोहसाधनम् ॥
स्त्रीसूनाद्यूतमद्यानां हेतुस्थानं यतः कलेः ॥ ३९ ॥

पण्डितोऽपि सुशीलोऽपि धनार्थी तृणतामियात् ॥
यथा बिसार्थी हंसोपि मधुपैरपि वञ्च्यते ॥ ४० ॥

द्रव्यज्वरातुराणां तु शान्तये नौषधाद्यपि ॥
नहि वृष्टिशतेनापि पाषाणादङ्कुरोदयः ॥ ३ ॥

वित्तमत्तो हि नापीशं मनुते क्वेतरे तदा ॥
श्रीराममप्यनादृत्याऽगर्जद्रत्नाकरः किल ॥ ४२ ॥

यत्कुवर्णैकहेतुस्तत्सुवर्णं कथमुच्यताम् ॥
नोचेत्कुमार्यपि जनैः सुमारीत्येव भाष्यताम् ॥ ४३ ॥

---

१ विपद्ग्रस्तम् २ 'राहाट'इतिलोके. ३ दशसहस्र अथ च अकारेणयुतं धनमधनमित्यर्थः ४ लक्षसंख्याकं अथ च निशब्देन युत धनं निधनमित्यर्थः ५ धनस्य परार्धं संख्याविशेषः अथ च धनशब्दसबन्धिपरमर्धं न तच्च भावहीनात्मकमभावबोधकमित्यर्थः ६ अक्षरःपरमात्मा तच्चरणद्वयान्तरेगत प्राप्त यद्धनं मोक्षरूप धन तदेव धन अथ च अक्षराणा मध्ये पकारदकारात्मकद्वयमध्यवर्तिधनइत्येतदक्षरद्वयरूपं धनमित्यर्थः

## मनस्विप्रशंसा ।

श्रीः ॥ कामं[1] प्रियानपि प्राणान् विमुञ्चन्ति मनस्विनः ॥
इच्छन्ति नत्वामित्रेभ्यो महतीमपि सत्क्रियाम् ॥ १ ॥

पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं[2] कपौली-[3]
मादाय न्यायगर्भद्विजवरहुतभुग्धूमधूम्रोपकण्ठम् ॥
द्वारंद्वारं प्रवृत्तो वरमुदरदरीपूरणाय प्रवृत्तो
मानी प्राणी स्वदेशे न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥२॥

वरमहिमुखे[4] क्रोधाऽऽध्माते[5] करो विनिवेशितो
विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने[6] ॥
गिरिवरतटीमुक्तश्चाऽऽत्मा वरं शतधा कृतो
न तु खलजनाऽवाप्तैरर्थैः कृतं हितमात्मनः ॥ ३ ॥

ब्रह्माण्डं कियदस्तु तत्र वसुधापिण्डं किमाचक्ष्महे
तत्राऽप्येकतरं तु खण्डममितास्तस्मिन्नृपाः केचन ॥
तेभ्यो दैन्यशतोपनीतविभवा दृष्टाऽनुकम्पास्तु ते
धिङ्मूढाः स्पृहयन्ति हन्त किमपि स्वाऽर्थो न तेभ्योऽपि ये ॥४॥

एकः स एव जीवति हृदयाविहीनोऽपि सहृदयो राहुः ॥
यः सकललघिमकारणमुदरं[7] न बिभर्ति[8] दुष्पूरम्[9] ॥ ५ ॥

प्रत्युपकुर्वन्[10] बह्वपि न भवति पूर्वोपकारिणा तुल्यः ॥
एकोऽनुकरोति[11] कृतं निष्कारणमेव यत्परः कुरुते ॥६॥

प्रतिदिनमयत्नसुलभे भिक्षुकजननि साधुजनकल्पलते ॥
नृपनमननरकतारिणि भगवति भिक्षे नमस्तुभ्यम् ॥ ७ ॥

ब्रह्माण्डमण्डलीपात्रं किं लोभाय मनस्विनः ॥
शफरीस्फुरितेनाब्धेः[12] क्षुब्धता जातु[13] जायते ॥ ८ ॥

---

१ यथेच्छम्. २ शुभ्रवस्त्रेणपिहितापालीयस्याः ३ भिक्षापात्रम् ४ सर्पमुखे ५ क्रोधपूर्णे. ६ कालगृहे. ७ लघुत्वकारणम् ८ नधारयति. ९ दुःखेनपूरयितुमशक्य. १० प्रत्युपकारंकुर्वन्. ११ अनुकरणंकरोति. १२ मत्स्यीस्फुरणेन. १३ कदाचित्.

कुसुमस्तबकस्येव द्वे वृत्ती तु मनस्विनः ॥
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्येदथवा वने ॥ ९ ॥
पादाहतं समुत्थाय मूर्धानमधिरोहति ॥
स्वस्था देवावमानेऽपि देहिनस्तद्वरं रजः ॥ १० ॥
माजीवन् यः परैरवज्ञादुःखदग्धोऽपि जीवति ॥
तस्याऽर्जननिरेवाऽस्तु जननीक्लेशकारिणः ॥ ११ ॥
समूलघातमघ्नन्तः परान्नो हन्ति मानिनः ॥
विध्वंसिताऽन्धतमसस्तत्रोदाहरणं रविः ॥ १२ ॥

## दातृप्रशंसा.

त्वयि सति शिवदातर्यस्मदभ्यर्थिताना-
मितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम् ॥
चरमचरणपातैर्दुर्ग्रहं दोग्धुकामाः
करभमनुसरामः कामधेनौ स्थितायाम् ॥ १ ॥

## तेजस्विप्रशंसा।

श्रीः ॥ बालस्याऽपि रवेः पादाः पतन्त्युपरि भूभृताम् ॥
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ १ ॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ॥
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ २ ॥
एकः स एव तेजस्वी सैंहिकेयः सुरद्विपाम् ॥
शिरोमात्राऽवशेषेण जीयन्ते येन शत्रवः ॥ ३ ॥
तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ॥
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ४ ॥

---

१ गुच्छ २गार्हितजीवतीतिमाजीवन्. ३ परैःकृतायाऽवज्ञातदेवदुःखं तेन दग्धः खिन्नः ४ अनुत्पत्तिः ५ याचितानाम् ६ पाश्चात्यचरणपातैः ७ उष्ट्र ८ किरणा. चरणाश्च९ पर्वताना पक्षे राज्ञाम् १० प्रशस्तकपोलेषु. ११ बलवताम् १२ विधुतुदः १३ राहुः १४ चन्द्रम् १५ मार्दवस्य.

तेजस्विनि क्षमासारे नाऽतिकार्कश्यमाचरेत् ॥
निःशङ्को हि जनो धत्ते पदं भस्मन्यनूष्माणि[1] ॥ ५ ॥
यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरविकान्तः[2] ॥
तत्तेजस्वी पुरुषः परकृतविकृतिं[3] कथं सहते ॥ ६ ॥

हस्ती स्थूलतनुः सचाऽङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो
वज्रेणाऽभिहताः पतन्ति गिरयः किं शैलमात्रः पविः[4] ॥
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तम-
स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः[5] ॥ ७ ॥

न तेजस्तेजस्वी प्रसृतमपरेषां[6] प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः[7][8] ॥
मयूखैरश्रान्तं[9][10] तपति यदि देवो दिनकरः
किमाग्नेयग्रावा[11] निकृत[12] इव तेजांसि वमति ॥ ८ ॥

एकचक्रो रथो यन्ता[13] विकलो[14] विषमा हयाः[15] ॥
आक्रमत्येव तेजस्वी तथाप्यर्को नभस्थलम् ॥ ९ ॥

## उदारप्रशंसा ।

श्रीः ॥ अयं निजः[16] परो वेति गणना लघुचेतसाम् ॥
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ १

युध्यते पाक्षिपशवः पठन्ति शुकसारिकाः ॥
दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥ २ ॥

एकेन तिष्ठताऽधस्तादन्येनोपरितिष्ठता ॥
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ ३ ॥

---

१ ऊष्मरहिते. २ अविक्रान्तः सूर्यकान्तमणिः ३ विकारम्. ४ वज्रम् ५ विश्वासः ६ विस्तृतम् ७ स्वभावाधीनत्वात्. ८ अकृत्रिम' ९ किरणैः १० सततम् ११ सूर्यकान्तः १२ धिकृत इव. १३ सारथिः १४ अनूरुः १५ तुरगः १६ स्वकीयः

सैव परं न विनश्यति तनुरपि या श्रीर्निवेशिता सत्सु ॥
अवशिष्यते हिमांशोः सैव कला या स्थिरा शंभौ ॥४॥
यद्ददासि विशिष्टेभ्यो यच्चाऽश्नासि दिनेदिने ॥
तत्ते वित्तमहं मन्ये शेषं कस्याऽपि रक्षसि ॥ ५ ॥
किं तया क्रियते लक्ष्म्या या वधूरिव केवला ॥
या न वेश्येव सामान्या पथिकैरपि भुज्यते ॥ ६ ॥
दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि ॥
जलाऽर्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ ७ ॥
कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः ॥
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ ८ ॥

## धीरप्रशंसा।

श्रीः ॥ सह परिजनेन विलसति धीरो गहनानि तरति पुनरेकः ॥
विषमेकेन निपीतं त्रिपुरजिता सह सुरैरमृतम् ॥ १ ॥
निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ॥
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ २ ॥
श्लाघ्या महतामुन्नतिरद्भुतमध्यवसितं च धीराणाम् ॥
कनकगिरिरनभिलङ्घ्यो रविरनिशमनुष्ठिताऽऽरम्भः ॥ ३॥
कदर्थितस्याऽपि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ॥
अधोमुखस्याऽपि तनूनपातो नाऽधः शिखा याति कदाचिदेव॥४
अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवाऽस्तु तथाऽपि धीराः ॥
निजप्रतिज्ञामधिरूढमाना महोद्यमाः कर्म समारभन्ते ॥ ५ ॥

---

१ अल्पा. २ अनेकोपभोग्या ३ समुद्रः ४ दुस्तराणि. ५ शंकरेण ६ न्याया-दनपेतात् ७ मार्गात् ८ व्यापारः ९ दरिद्रस्य. १० शोधयितुम् ११ अग्नेः

अङ्गनवेदी[1] वसुधा कुल्या[2] जलधिः स्थली च पातालम् ॥
वल्मीकश्च[3] सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥ ६ ॥

## वीरः ।

श्रीः ॥ को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्[4]तथा
यं देशं श्रयते तमेव कुरुते बाहुप्रतापाऽर्जितम् ॥
यद्दंष्ट्रानखलाङ्गुलप्रहरणः[5] सिंहो वनं गाहते[6]
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १ ॥

विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं
समायुक्तोप्यर्थैः परिभवपदं[7] याति कृपणः ॥
स्वभावादुद्भूतां गुणसमुदयाऽवाप्तिविषयां
द्युतिं[8] सैंहीं[9] किं श्वा धृतकनकमालोऽ[10]पि लभते ॥ २ ॥

एकेनाऽपि हि शूरेण पदाऽऽक्रान्तं महीतलम् ॥
क्रियते भास्करस्येव स्फारस्फुरिततेजसा ॥ ३ ॥

पल्लवतः[11] कल्पतरोरेष विशेषः करस्य ते वीर ॥
भूषयति कर्णमेकः[12] परस्तु कर्णं[13] तिरस्कुरुते ॥ ४ ॥

## गुणप्रशंसा ।

श्रीः ॥ गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् ॥
केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः[14] ॥ १ ॥

गुणवज्जनसंसर्गाद्याति सर्वोऽपि गौरवम् ॥
पुष्पमालाप्रसंगेन सूत्रं शिरसि धार्यते ॥ २ ॥

---

१ अजिरम् २ कृत्रिमसरित्. ३ 'वारुळ' इति लोके. ४ प्रदेशः ५ दंष्ट्रा 'दाढा' इतिलो० नखः पुनर्भव. लाङ्गूलं पुच्छ तान्येव प्रहरणानि आयुधानि यस्य सः. ६ प्रविशति ७ पराजयस्थानम् ८ कान्तिम् ९ सिंहसंबन्धिनीम् १० धृता कनकस्य सुवर्णस्य माला येन ११ किसलयात् १२ श्रोत्रम् १३ अङ्गराजम्. १४ भ्रमराः

गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ॥
वसुदेवं परित्यज्य वासुदेवं नमेज्जनः ॥ ३ ॥
यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ॥
नहि कस्तूरिकाऽऽमोदः शपथेन निवार्यते ॥ ४ ॥
गुणिनि गुणज्ञो रमते नाऽगुणशीलस्य गुणिनि परितोषः ॥
अलि[1]रेति वनात्पद्मं न दर्दुर[2]स्त्वेकवासोऽपि ॥ ५ ॥
गुणैः सर्वज्ञकल्पो[3]ऽपि सीदत्[4]येको निराश्रयः ॥
अनर्घ्य[5]मपि माणिक्यं हेमाऽऽश्रयमपेक्षते ॥ ६ ॥
गुणैर्गौरवमायाति न महत्याऽपि संपदा ॥
पूर्णेन्दुर्न तथा वन्द्यो निष्कलङ्को यथा कृशः ॥ ७ ॥
गुणवन्तः क्लिश्यन्ते[6] प्रायेण भवन्ति निर्गुणाः सुखिनः ॥
बन्धनमायान्ति शुका यथेष्टसंचारिणः काकाः ॥ ८ ॥
गुणयुक्तो[7]ऽप्यधो याति रिक्तः[8] कूपे यथा घटः ॥
निर्गुणोऽपि भृतः पश्य जनैः शिरासि धार्यते ॥ ९ ॥
कौशेयं[9] कृमिजं सुवर्णमुपला[10]दिन्दीवरं[11] गोमया-
त्पङ्का[12]त्तामरसं[13] शशाङ्क उदधेर्गोपित्ततो रोचनम्[14] ॥
काष्ठादग्निरहेः फणादपि मणिर्दूर्वोऽपि गोरोमतः
प्राकाश्यं स्वगुणोदयेन गुणिनो यास्यन्ति किं जन्मना ॥ १०
गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः ॥
प्रासाद[15]शिखरारूढः काकः किं गरुडायते ॥ ११ ॥
गुणेषु क्रियतां यत्नः किमाटोपैः[16] प्रयोजनम् ॥
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ १२ ॥

---

१ भ्रमरः २ भेकः ३ शिवतुल्यः ४ दुःख प्राप्नोति. ५ अमूल्यम्. ६ क्लेशं प्राप्नुवन्ति. ७ रज्जुयुक्तः अन्यत्र विनयादिगुणसंपन्न. ८ 'रिता' इतिलो० पक्षे निर्द्रव्यः ९ 'पाटाम्ब' 'पीताम्बर' इति लो० १० पाषाणात्. ११ कमलम् १२ कर्दमात्. १३ रक्तकमलम् १४ गोरोचनम् १५ राजभवनं देवालयं वा. १६ आडम्बरैः

जात्युत्कृष्टस्य हि मणेर्नोचितं शाणघर्षणम् ॥
आदर्शे चित्रकारैः किं लिख्यते प्रतिबिम्बितम् ॥ १३ ॥
अनवसरे गुणवानपि हृदयादवतार्यते हारः ॥
पश्य शलाकाऽवसरे तृणाय भूपैः प्रसार्यते स्वकरः ।१४।
गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह ॥
सगुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥ १५ ॥

## संतोषप्रशंसा ।

श्रीः ॥ अकृत्वा परसन्तापमगत्वा खलनम्रताम् ॥
अनुत्सृज्य सतां वर्त्म[2] यत्स्वल्पमपि तद्बहु ॥ १ ॥
वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः ॥
स हि भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ २ ॥
दरिद्रस्य परा मूर्तिस्तृष्णा न द्रविणाल्पता ॥
जरद्गवधनः[3] शंभुस्तथाऽपि परमेश्वरः ॥ ३ ॥
संतोषाऽमृततृप्तानां यत्सुखं शान्तचेतसाम् ॥
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ४ ॥
यो मे गर्भगतस्याऽपि वृत्तिं[4] कल्पितवान्विभुः ॥
शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः ॥ ५ ॥
पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे ॥
अनृणी चाऽप्रवासी च स वारिचर मोदते ॥ ६ ॥
अप्रार्थितानि दुःखानि यथैवाऽऽयान्ति देहिनाम् ॥
सुखान्यपि तथाऽऽयान्ति दैन्यमत्राऽतिरिच्यते[5] ॥ ७ ॥
आत्माऽऽधीनशरीराणा स्वपतां निद्रया स्वया ॥
कदन्नमपि[6] मर्त्यानाममृतत्वाय कल्पते ॥ ८ ॥

---

१ 'साहाण' इति लोके. २ मार्गम् ३ वृद्धवृषभः स एव धनं यस्य सः
४ जीवनोपायम् ५ विशिष्यते. ६ कुत्सितमन्नम्

सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम् ॥
उपानद्गूढपादस्य ननु चर्माऽऽवृतैव भूः ॥ ९ ॥
आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म ॥
स्वाऽऽधीनता च पुंसां महदैश्वर्यं विनाऽप्यर्थम् ॥ १० ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ॥
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
संतोष एव पुरुषस्य परं निधानम् ॥ ११ ॥

अर्थी करोति दैन्यं लब्धाऽर्थी गर्वपरितोषम् ॥
नष्टधनश्च सशोकः सुखमास्ते निस्पृहः पुरुषः ॥ ११ ॥
तन्मूलं गुरुतायास्तत्सौख्यं तद्यशस्तदौर्जित्यम् ॥
तत्सौभाग्यं पुंसां यदेतदप्रार्थनं नाम ॥ १२ ॥

## मित्रम् ।

यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः ॥
मित्रेण सह यो भुङ्क्ते ततो नास्तीह पुण्यवान् ॥ १ ॥
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ॥
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ २ ॥
शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः ॥
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ३ ॥
रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता ॥
क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥ ४ ॥
अन्यथैव हि सौहार्दं भवेत्स्वच्छाऽन्तरात्मनः ॥
प्रवर्ततेऽन्यथा वाणी शाठ्योपहतचेतसः ॥ ५ ॥

---

१ उपानद्भ्यां गूढौ पिहितौ पादौ यस्य २ गौरवस्य. ३ उत्साहशीलत्वम् ४ अयाचनम् ५ मिथोभाषणम् ६ तस्मात् पुरुषात्. ७ निर्मलचित्तत्वम् ८ दानशीलत्वम् ९ समानस्य भावः सामान्य समत्वमित्यर्थः १० सरलत्वं ११ प्रीतिः १२ गुप्तप्रकाशनम् १३ प्रार्थनम्

तत्र मित्र न वस्तव्यं यत्र नाऽस्ति चतुष्टयम् ॥
ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी ॥ ६ ॥
स्वामिनि गुणान्तरज्ञे गुणवति भृत्येनुकूलिनि कलत्रे ॥
मित्रे सदोपकारिणि निवेद्य दुःखं सुखी भवति ॥ ७ ॥
स्वाभाविकं तु यन्मित्रं भाग्येनैवाऽभिजायते ॥
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ ८ ॥
न मातरि न दारेषु न सोदर्ये नचाऽऽत्मनि ॥
विश्वासस्तादृशः पुंसां यावान्मित्रे स्वभावजे ॥ ९ ॥
शोकाऽरातिभयत्राणं प्रीतिविश्रम्भभाजनम् ॥
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १० ॥
मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् ॥
ये चाऽन्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाऽऽकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥ ११ ॥

क्षीरेणाऽऽत्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ॥
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्राऽऽपदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ १२

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ॥
विभावयन्समृद्धीनां फलं सुहृदनुग्रहम् ॥ १३ ॥
नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ॥
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाऽप्युपलभ्यते ॥ १४ ॥
विवादो धनसंबन्धो याचनं स्त्रीषु संगतिः
आदानमग्रस्थायित्वं मैत्रीभगङ्गस्य हेतवः ॥ १५ ॥

---

१ अकपटमित्रता. २ शत्रुः ३ विश्वासः ४ प्रीतेः रसायनमिव रसायनं प्रीतिवर्धकमित्यर्थः ५ 'कसोटी' ति लो० ६ अग्नौ ७ मित्रविपत्तिम् ८ सुहृत्सु अनुग्रह. प्रसादस्तम् ॥

## दारिद्र्यवर्णनम् ।

श्रीः ॥ हे दारिद्र्य नमस्तेऽस्तु धन्योऽहं त्वत्प्रसादतः ॥
लोकान्पश्याम्यहं सर्वान्न मां पश्यति कश्चन ॥ १ ॥
दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्यु[1]षित्वा ॥
वि[2]पन्नदेहे मयि मन्द[3]भाग्ये ममेति चिन्ता क्क गमिष्यसि त्वम् ॥२॥
दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं
दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः ॥
दग्धः पं[4]चशरः पिनाकपतिना तेनाऽप्ययुक्तं कृतं
दारिद्र्यं जनतापकारकमिदं केनाऽपि दग्धं नहि ॥३॥
द्वाविमावम्भसि क्षेप्यौ गाढं बद्ध्वा गले शिलाम् ॥
धनिनं चाऽप्रदातारं दरिद्रं चाऽतपस्विनम् ॥ ४ ॥
अर्था न सन्ति न च मुञ्चति मां दुराशा
दाता न संकुचितदुर्ललितं मनो मे ॥
याञ्चा हि लाघवकरी[5] स्ववधे च पापं
प्राणः स्वयं व्रजतु किं प्रवि[6]लम्बितेन ॥ ५ ॥
उत्तिष्ठ क्षणमेकमु[7]द्वह सखे दारिद्र्यभारं गुरुं
श्रान्तस्तावदहं चिरं मरण भोः सेवे त्वदीयं सुखम् ॥
इत्युक्त्वा धनवर्जितेन सहसा गत्वा श्मशाने शवं
दारिद्र्यान्मरणं वरंवरमिति ज्ञात्वैव तूष्णीं स्थितम् ॥६॥
पृ[8]थुकार्तस्वरपात्रं भू[9]षितानिःशेषपरिजनं देव ॥
वि[10]लसत्करेणुगहनं संप्रति समभावयोः स[11]दनम् ॥ ७ ॥

---

१ स्थित्वा. २ विनष्टशरीरे ३ हृतभाग्ये. ४ मदनः ५ लघुत्वकारिणी. ६ प्रविलम्बितेन कालदैर्घ्येणेति यावत् ७ धारय. ८ पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि यस्मिंस्तत्. पक्षे पृथुकाना बालानामार्तस्वरा रुदितशब्दास्तेषा पात्रं भाजनम् ९ भूषिता अलङ्कृता निःशेषा परिजना यस्मिन् पक्षे भुवि उषिता नःशेषपरिजना यस्मिन् १० विलसन्त्यः शोभमानाः करेणवो हस्तिन्यस्ताभिर्गहन निबिडं पक्षे बवयोः सावर्ण्यात् बिले सन्त एव सत्का बिलवर्तिनो ये रेणवो धूलयस्तैर्गहनं व्याप्तम् ११ गृहम्

यो गङ्गामतरत्तथैव यमुनां यो नर्मदां शर्मदां[1]
का वार्ता सरिदम्बुलङ्घनविधौ यश्चार्णवांस्तीर्णवान् ॥
सोऽस्माकं चिरमास्थितोऽपि सहसा दारिद्र्यनामा सखा
त्वद्दानाम्बुसरित्प्रवाहलहरीमग्नो न संभाव्यते[2] ॥ ८ ॥

> दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् ॥
> अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ९ ॥
>
> अत्यन्तविमुखे[3] दैवे व्यर्थे यत्ने च पौरुषे ॥
> मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥ १० ॥

दारिद्र्याद्ध्रियमेति[4] ह्रीपरिगतः सत्त्वात्परिभ्रश्यते
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते[5] ॥
निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम्[6] ॥ ११ ॥

इह लोकेऽपि धनिनां परोऽपि स्वजनायते ॥
स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ॥ १२ ॥

परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् ॥
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ १३ ॥

मा रोदीश्चिरमेहि[7] वत्स रुदतो दृष्ट्वाऽद्य बालानिमा-
नायातस्तव वत्स दास्यति पिता ग्रैवेयकं[8] वाससी[9] ॥
श्रुत्वैवं गृहिणीवचांसि निकटे कुड्यस्य[10] निष्किंचनो[11]
निःश्वस्याऽश्रुजलप्लवप्लुततनुः पान्थः पुनः प्रस्थितः ॥ १४ ॥

अये लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी
शिशोः कर्णौ यत्नात्सुपिहितवती[12] दीनवदना ॥
मयि क्षीणोपाये यदकृत दृशावश्रुशबले
तदन्तःशल्यं मे त्वमिव पुनरुद्धर्तुमुचितः ॥ १५ ॥

---

१ सुखदात्रीम् २ न दृश्यते ३ पराङ्मुखे ४ लज्जा प्राप्नोति ५ खेदम्. ६ स्थानम्. ७ रोदनं मा कुरु ८ कण्ठभूषणं. ९ वस्त्रे. १० भित्तेः ११ दरिद्रः १२ छादितवती

कन्था[1]खण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणाऽर्भकं
रिक्तं भूतमत्र नाथ भवतः पृष्ठे पलालोच्चयः[2] ॥
दम्पत्योरिति जल्पतोर्निशि यदा चोरः प्रविष्टस्तदा
लब्धं कर्पट[3]मन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥१६॥
वृद्धो नः पतिरेष मञ्चक[4]गतः स्थूणा[5]ऽवशेषं गृहं
कालोऽभ्यर्ण[6]जलागमः कुशलिनी वत्सस्य वार्ताऽपि नो ॥
यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला[7]
दृष्ट्वा गर्भभराऽऽकुलां निजवधूं[8] श्वश्रूश्चिरं रोदिति १७
अम्बा तुष्यति न मया न स्नुषया साऽपि नाम्बया न मया ॥
अहमपि नतया न तया वद राजन् कस्य दोषोयम् ॥१८॥
चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह ॥
चाण्डालोऽपि दरिद्रोऽपि सर्वकर्मसु निन्दितः ॥१९॥
नो सेवा विहिता गुरोरपि च नो नो वा कृतं पूजनं
देवानां विधिवन्न वा शिवशिव स्निग्धादयः सेविताः ॥
किंतु त्वच्चरणौ सरस्वति रसादाजन्मनः सेवितौ
तस्मान्मां विजहाति सा भगवती शङ्के सपत्नी[9] तव॥२०॥
दूये[10] कान्ताकरं वीक्ष्य मणिकङ्कण[11]वर्जितम् ॥
अतःपरं परं[12] दूये मणिकं[13] कर्ण[14]वार्जितम् ॥ २१ ॥
एको हि दोषो गुण[15]सन्निपाते निमज्जतीन्दोरिति यो बभाषे ॥
न तेन दृष्टं कविना समस्तं दारिद्र्यमेकं गुणकोटि[16]हारि २२
रात्रौ जानुर्दिवा भानुः कृशानुः[17] सन्ध्ययोर्द्वयोः ॥
पश्य शीतं मयानीतं जानुभानुकृशानुभिः ॥ २३ ॥

---

१ 'गोधडीति' लो० २ तुषसचयः ३ जोर्णवस्त्रखण्ड ४ शय्या 'खाट' इतिलो० ५ 'मेढी ' इति लोके ६ समीपः ७ व्याकुला ८ स्नुषाम्. ९ 'सवत' इति लो० १० खेद प्राप्नोमि ११ मणियुक्त यत्कङ्कणं तेन वर्जितम् १२ अत्यन्तम् १३ मृन्मयभाजनं 'मडके' ति लो० १४ धान्यकणरहितम् १५ गुणसमुदाय १६ कोटिगुणनाक्रमिति भावः १७ अग्निः

क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाऽऽशया बान्धवा
लिप्ता जर्जर[1]कर्करी[2]र्जतुलवैर्नो मां तथा बाधते ॥
गेहिन्या त्रुटितांऽशुकं घटयितुं कृत्वा सकौं[3]कुस्मितं
कुप्यन्ती प्रतिवेशिलोकगृहिणी सूचीं यथा याचिता ॥ २४ ॥

दारिद्र्य भो त्वं परमं [4]विवेकि गुणाऽधिके पुंसि सदानुरक्तम् ॥
विद्याविहीने गुणवर्जिते च मुहूर्तमात्रं न [5]रतिं करोषि ॥ २५ ॥

भद्रे वाणि ममाऽऽनने कुरु दयां वर्णाऽनुपूर्व्या चिरं
चेतः स्वास्थ्यमुपैहि याहि करुणे प्रज्ञे स्थिरत्वं व्रज ॥
लज्जे तिष्ठ पराङ्मुखी क्षणमहो तृष्णे पुरः स्थीयतां
पापो यावदहं ब्रवीमि धनिनां देहीति दीनं वचः ॥२६॥

अयं पटो मे पितुरङ्गभूषणं पितामहाद्यैरुपभुक्तयौवनः ॥
अलंकरिष्यत्यथ पुत्रपौत्रकान्मयाऽधुना पुष्पवदेव धार्यते ॥ २७ ॥

## याचकनिन्दा ।

श्रीः ॥ तृणादपि लघुस्तू[6]लस्तूलादपि च याचकः ॥
वायुना किं न नीतोऽसौ मामयं याचयेदिति ॥ १ ॥

वे[7]पथुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः ॥
मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ २ ॥

तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः
शूरः सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः ॥
दक्षो धर्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठाऽन्वितो
यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ ३ ॥

[8]दक्षिणाशाप्रवृत्तस्य [9]प्रसारितकरस्य च ॥
तेजस्तेजस्विनोऽर्कस्य [10]ह्रियतेऽन्यस्य का कथा ॥ ४ ॥

---

१ चालनीसदृशः सच्छिद्रः कुम्भः २ लाक्षाखण्डैः ३ स्वनसहित स्मितम् ४ विचारशीलम् ५ प्रीतिम् ६ कार्पास ७ कम्प. ८ दक्षिणदिशाया प्रवर्तमानस्य पक्षे दक्षिणाया आशा तया प्रवृत्तस्य. ९ प्रसारिताः विस्तारिताः कराः किरणाः येन पक्षे प्रसारितः करो हस्तो येन. १० ह्रास प्राप्नोति.

काक आह्वयते काकान् याचको न तु याचकान् ॥
काकयाचकयोर्मध्ये वरं काको न याचकः ॥ ५ ॥

याचनायां प्रवृत्तस्य काकानाम न दुर्दशा ॥
चेत्तश्चेत्क्रियते तस्यां यातनैवोपतिष्ठते ॥ ६ ॥

तावन्महतां महती यावत्किमपि हि न याच्यते लोकम् ॥
वलिमनुयाचनसमये श्रीपतिरपि वामनो जातः ॥ ७ ॥

सन्तापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् ॥
आशावतां श्रद्दधतां च लोके किमर्थिना वञ्चयितव्यमस्ति ॥ ८ ॥

सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम् ॥
हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति ॥ ९ ॥

भ्रातर्धातरशेषयाचकजनैर्वैरायसे सर्वथा
यस्माद्विक्रमशालिवाहनमहीभृन्मुञ्जभोजादयः ॥
अत्यन्तं चिरजीविनो न विहितास्ते विश्वजीवातवो
मार्कण्डध्रुवलोमशप्रभृतयः सृष्टाः प्रभूताऽऽयुषः ॥ १० ॥

विद्यावतः कुलीनस्य धनं याचितुमिच्छतः ॥
कण्ठे पारावतस्येव वाक्करोति गताऽगतम् ॥ ११ ॥

उड्डीना गुणपत्रिणः सुखफलान्याराद्विकीर्णान्यधः
पर्यस्ताः परितो यशःस्तवकिताः संपल्लतापल्लवाः ॥
प्रागेवाऽपसृतप्रमोदहरिणच्छायाकथाऽन्तं गता
दैन्याऽरण्यमतङ्गजेन सहसा भग्नेऽभिमानद्रुमे ॥ १२ ॥

गुरुतामुपयाति यन्मृतः पुरुषस्तद्विदितं मयाऽधुना ॥
ननु लाघवहेतुरर्थिता न मृते तिष्ठति सा मनागपि ॥ १३ ॥

साधुरेवाऽर्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा ॥
शुष्काऽपि हि नदी मार्गे खन्यते सलिलाऽर्थिभिः ॥ १४ ॥

---

१ अन्तःकरण पक्षे याचनाशब्दस्थचकारे तकारः क्रियते चेद्यातनैव जायते. २ लक्ष्मीपतिरपि. ३ ह्रस्वः पक्षे लघु. ४ चन्द्रकान्ति ५ याचकत्वम्. ६ गुणा एव पक्षिणः ७ समीपे, ८ दैन्यमेव अरण्यगजः ९ किंचिदपि

देहीति वचनं श्रुत्वा हृदिस्थाः पञ्च देवताः॥
मुखान्निर्गत्य गच्छन्ति श्रीर्ह्रीधीधृतिकीर्तयः ॥ १५ ॥
नवीनदीनभावस्य याचकस्याऽतिमानिनः ॥
वचोजीवितयोरासीत्[१]पुरोनिःसरणे रणः ॥ १६ ॥
वदनाच्च बहिर्यान्ति प्राणा याञ्चाक्षरैः सह ॥
ददामीत्यक्षरैर्दातुः पुनः कर्णाद्विशन्ति हि ॥ १७ ॥
द्वारेद्वारे परेषामविरलमटति द्वारपालैः कराल[२]-
र्दष्टोयोऽप्याहतः सन् रणति गणयति स्वाऽपमानं तु नैव ॥
क्षन्तुं शक्नोति नाऽन्यं स्वसदृशमितराऽगारमप्याश्रयन्तं
श्राम्यत्यात्मोदरार्थे कथमहह शुना नो समो याचकः स्यात्॥१८

[३]जनस्थाने भ्रान्तं वि[४]षयमृगतृष्णाऽऽकुलतया
व[५]चो वै देहीति प्रतिपदमुदश्रु प्रलपितम् ॥
कृत[६]लङ्काभर्तुर्वदनपरिपाटीषु रचना
मयाऽऽप्तं रामत्वं [७]कुशलवसुता न त्वधिगता ॥ १९ ॥
तीक्ष्णधारेण खड्गेन वरं जिह्वा द्विधा कृता ॥
नतु मानं परित्यज्य देहिदेहीति भाषितम् ॥ २० ॥
याचकवीरो धन्यः [८]करदानग्राहकः स्वदातृभ्यः ॥
कुरुते पराङ्मुखं वा ह्यतिनम्रं वा हरत्यसौ पुण्यम् ॥ २१ ॥
पुरतः प्रेरयत्याशा लज्जापृष्ठाऽवलम्बिनी ॥
ततो लज्जाऽऽशयोर्मध्ये दोलायत्यार्थिनां मनः ॥ २२ ॥

---

१ अहमहमिकया अग्रतो नि सरणे २ विकटै. ३ जनाना स्थानानि नगरपत्तनादीनि तेषुभ्रमणं कृतं रामपक्षे जनस्थाने नासिके परिभ्रमणं कृतम्. ४ विषया एव मृगास्तेषां तृष्णा तया व्याप्तत्वेन. ५ वै इति पदच्छेदः देहीति प्रलपित. पक्षे वैदेही जानकीतिप्रलपितम्. ६ काभर्तुः कुत्सितस्वामिनः वदनपरिपाटीपु रचना अलं अलर्थं कृता. पक्षे लङ्काभर्तु रावणस्य वदनपरिपाट्या इषुरचना बाणरचना कृता. ७ कुशल यद्वसु द्रव्यं तद्भावो न संपादित. पक्षे कुशलवौ सुतौ यस्या. सा वैदेही. ८ करात् हस्तात् दानस्य ग्राहक. पक्षे कर. 'खण्डणी,ति लोके दान समर्पण तद्ग्राहकः

शूराः केऽपि पुरःस्थितां रिपुनरश्रेणिं सहन्ते सुखं
धीराः केचन पञ्चबाणसदृशं[1] कान्ताद्दगन्ताऽऽहतिम् ॥
केचित्क्रूररवांश्च पञ्चवदनान्दन्तीचपेटान्भटा[2]
नैवाऽर्थिप्रकरं प्रसारितकरं कश्चिद्विसोढुं क्षमः ॥ २३ ॥
याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमेव तथा हि ॥
सद्य एव भगवानपि विष्णुर्वामनो भवति याचितुमिच्छन् ॥ २४
द्वारंद्वारमटन्भिक्षुः शिक्षत्येवं न याचते ॥
अदत्त्वा मादृशो मा भूर्दत्त्वा त्वं तादृशो भव ॥ २५ ॥

## कृपणनिन्दा ।

श्रीः ॥ कृपणेन समो दाता न भूतो न भविष्यति ॥
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १ ॥
कृपणो धनलोभेन स्वां भार्यां नाभिगच्छति ॥
अस्यां यो जायते पुत्रः स मे वित्तं हरेदिति ॥ २ ॥
प्राप्तानपि नो लभते भोगान्भोक्तुं स्वकर्मभिः कृपणः ॥
द्राक्षाप्रपाकसमये मुखपाको[3] भवति काकानाम् ॥ ३ ॥
यदधोऽधःक्षितौ वित्तं निचखान[4] मितंपचः ॥
तदधोनिलयं[5] गन्तुं चक्रे पन्थानमग्रतः ॥ ४ ॥
निजसौख्यं निरुन्धानो यो धनाऽर्जनमिच्छति ॥
परार्थं भारवाहीव क्लेशस्यैव हि भाजनम् ॥ ५ ॥
दानोपभोगहीनेन धनेन धनिनो यदि ॥
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ६ ॥
असंभोगेन सामान्यं कृपणस्य धनं परैः ॥
अस्येदमिति सम्बन्धो हानौ दुःखेन गम्यते ॥ ७ ॥
यद्ददाति यदश्नाति तदेव धनिनो धनम् ॥
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ ८ ॥

---

१ कान्ताकटाक्षवेधम्. २ सिंहान्. ३ मुखरोगः ४ आरोपयामास ५ पातालम्.

फलं स्वेच्छालभ्यं प्रतिवनमखेदं[1] क्षितिरुहां[2]
पयः स्थानेस्थाने शिशिरमधुरं पुण्यसरिताम् ॥
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ ९ ॥

यदर्ज्यते[3] परिक्लेशैरर्जितं यन्न भुज्यते ॥
विभज्यते यदन्ते[4]ऽन्यैः कस्य चिन्माऽस्तु तद्धनम् ॥ १० ॥

यत्करोत्यर्ति[5] क्लेशं तृष्णां मोहं[6] प्रजागरम् ॥
न तद्धनं कदर्याणां[7] हृदये व्याधि[8]रेव सः ॥ ११ ॥

मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा ॥
दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ १२ ॥

दृढतर[9]निबद्धमुष्टेः कोश[10]निषण्णस्य सहज[11]मलिनस्य ॥
कृपणस्य कृपाणस्य च केवलमाकार[12]तो भेदः ॥ १३ ॥

कृपणस्य समृद्धीनां भोक्तारः सन्ति केचिदतिनिपुणाः ॥
जलसंपदोऽम्बुराशे[13]र्यान्ति वशं शश्वदौर्वाग्नेः[14] १४ ॥

यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् ॥
तृण[15]मयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥ १५ ॥

यदि भवति धनेन धनी क्षितितल[16]निहितेन भोग[17]रहितेन ॥
तस्माद्वयमपि धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ १६ ॥

---

१ क्लेशरहितम् २ वृक्षाणाम् ३ सपाद्यते. ४ अवसाने. ५ अस्वस्थत्वम् ६ विचाराशक्ति. ७ कृपणानाम् ८ पीडैव ९ दृढतरं अतिनिविड निबद्धा मुष्टिर्येन. पक्षे दृढतर निबद्धा मुष्टि त्सरुर्यस्य. १० कोशागारे निषण्णस्य स्थितस्य. पक्षे कोशे खड्गपिधाने स्थितस्य. ११ सहजमलिनस्येति उभयत्रापि समम् १२ आकारतः आकृत्या भेद कृपणशब्दे अकारोवर्तते कृपाणशब्दे आकारोवर्तते एतावतैव भेदः भिन्नत्वम् कृपाणः खड्गः 'तरवार' इतिलोके १३ समुद्रस्य. १४ वाडवाग्नेः १५ तृणकृतकपटपुरुषः सस्यरक्षणार्थं उच्चप्रदेशेश्वापदभयहेतुस्तृणादिभिः पुरुष. क्रियते इति प्रसिद्धम् १६ भूम्यन्तर्गतेन. १७ उपभोगहीनेन

कृपणेन शवेनैव मृतेनापि न दीयते ॥
मांसं वर्धयता तेन काकस्योपकृतिः कृता ॥ १७ ॥
उदारचरितस्त्यागी याचितः कृपणोऽधिकः ॥
एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥ १८ ॥
देहीति वक्तुकामस्य यद्दुःखमुपजायते ॥
दाता चेत्तद्विजानीयाद्दद्यात्स्वपि[3]शितान्यपि ॥ १९ ॥
जहाति सहसाऽऽसनं झटिति पृच्छति स्वागतं
नमस्यति मुहुर्मुहुः श्रुतिमनोहरं भाषते ॥
ददाति कुसुमं फलं शिथिलयत्यभीष्टां क्रिया-
महो न परिचीयते कृपणवञ्चना चातुरी ॥ २० ॥
अर्थिनि कवयति कवयति पठति च पठति स्तवोद्यतं स्तौति ॥
पश्चाद्यामीत्युक्ते कृपणः प्रणतोऽञ्जलिं कुरुते ॥ २१ ॥
निरौचित्यान्नरात्तस्माद्वरं कूपोप्यचेतनः ॥
आगतं गुणवत्पात्रमाशु पूर्णं करोति यत् ॥ २२ ॥
रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः ॥
तदेव सन्तः सततमुत्सृजन्ति यथा मलम् ॥ २३ ॥
अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा ॥
तदेव देहि देहीति विपरीतमुपस्थितम् ॥ २४ ॥

## दानप्रशंसा ।

श्रीः ॥ अनुकूले विधौ देयं यतः पूरयिता हरिः ॥
प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥ १ ॥
दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः ॥
पश्यामि मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ २ ॥

१ कस्य का उपकृतिरुपकारः कृता अपि तु न कस्यापि कापीत्यर्थः. अथ च काकस्य पक्षिणः २ सृजतीति शेष. ३ मांसानि. ४ सत्वरम् ५ कर्णमधुरम्. ६ याचके ७ कविता करोति. ८ नम्रः ९ दैवे १० पूरणकर्ता ११ ऐश्वर्ये १२ भ्रमरीणाम्.

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ॥
यो न ददाति न भुङ्क्ते तस्य तृतीया गति[1]र्भवति ॥ ४ ॥

## कलिमहिमा।

श्रीः ॥ न देवे देवत्वं कपटपटवस्तापसजना
जनो मिथ्यावादी विरलतनु[2]वृष्टिर्जलधरः ॥
प्रसङ्गो नीचानामव[3]निपतयो दुष्टमनसो
जना भ्रष्टा नष्टा अहह कलिकालः प्रभवति ॥ १ ॥
श्रुतिर्भ्रष्टा नष्टा स्मृतिरपि पुराणं विगलितं
गता लोपं सर्वे प्रचुरतरवेदान्तनिवहाः ॥
इदानीं नामैका कबिरवचनान्मोक्षपदवी
न जाने को हेतुः शिवशिव कलेरेष महिमा ॥ २ ॥
निर्वीर्या पृथिवी निरोषधिरसा नीचा महत्त्वं गता
भूपाला निजकर्मधर्मरहिता विप्राः कुमार्गे रताः ॥
भार्या भर्तृविरोधिनी पररता पुत्राः पितुर्द्वेषिणो
हा कष्टं खलु वर्तते कलियुगे धन्या नराः सज्जनाः ॥३॥
सीदन्ति सन्तो विलसन्त्यसन्तः पुत्रा म्रियन्ते जनकश्चिरायुः॥
परेषु मैत्री स्वजनेषु वैरं पश्यन्तु लोकाः कलिकौतुकानि ॥ ४ ॥
दूरादर्थिनमाकलय्य भजते सद्यो वि[4]रूपाक्षतां
सङ्गे किं च वि[5]रोचनत्वमथ संस्थाने नृ[6]सिंहाकृतिम् ॥
पाण्डित्योक्तिषु व[7]क्रतुण्डरचनां दाने [8]त्वपर्णात्मता-

---

१ नाश इत्यर्थ· २ विरला काचित्की तथापि अल्पा वृष्टिर्यस्य स. विरलतर-वृष्टिरिति वा पाठः ३ राजान. ४ विकृतनेत्रत्व पक्षे शिवताम् ५ रुचिराहित्यम् पक्षे बलिपितृत्वम् ६ नृसिंह इव क्रूरामाकृतिं पक्षे नृसिंहस्याकृतिम् ७ वक्रा या तुण्डस्य रचना ता मुखवक्रत्वमित्यर्थः पक्षे वक्रतुण्डस्य गणपतेरिव या रचना ता गणेशरूपत्वमित्यर्थः ८ नविद्यन्ते पर्णान्यपि यस्यास्तामकिंचनत्वमित्यर्थ पक्षे अपर्णा पार्वती तद्रूपताम्

मेकः पञ्चसुरात्मकः प्रभुरहो भाग्यैः कलौ लभ्यते ॥ ५ ॥
कुशलाः शब्दवार्तायां वृत्तिहीनास्तु रागिणः ॥
कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ६ ॥
धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरे गतं
पृथ्वी मन्दफला नृपाश्च कुटिला लौल्यं[1] गता ब्राह्मणाः॥
लोकाः स्त्रीषु रताः स्त्रियश्च चपलाः पुत्राः पितुर्द्वेषिणः
साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ॥ ७ ॥
सन्तः क्वाऽपि न सन्ति सन्ति यदि वा दुःखेन जीवन्ति ते
विद्वांसोऽपि न सन्ति सन्ति यदि वा मात्सर्ययुक्ताश्च ते ॥
राजानोऽपि न सन्ति सन्ति यदि वा तृष्णाधनग्राहिणो
दातारोऽपि न सन्ति सन्ति यदि वा सेवाऽनुकूलाः कलौ॥८॥
हर्म्यस्थानमधर्मकर्मविततेर्दुर्मानभर्माऽऽसनं
शास्त्रस्तोमललाटभूलिपिलयः शान्तिः सवा[2]नामपि ॥
सर्वाम्नाय[3]वचः समापनदिनं संस्थासदर्चा[4]विधे-
रर्थाऽऽशाजनिभूरभूदिह महाऽनर्थावहोऽयं कलिः ॥ ९ ॥
सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति ॥
कुमार्यश्च प्रसूयन्ते प्राप्ते कलियुगे सदा ॥ १० ॥
परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात् ॥
परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे ॥ ११ ॥
राक्षसाः कलिमाश्रित्य जायन्ते ब्रह्मयोनिषु ॥
ब्राह्मणानेव बाधन्ते तत्राऽपि श्रोत्रियान्कृशान् ॥ १२ ॥
प्रातर्हन्त कृताऽऽर्द्रवोऽपि रजकस्पृष्टाङ्गडो रासभै[5]
रूढान्धारयते पटाननुदिनं धृत्वा बहिर्गच्छति ॥

१ लोलुपत्वम् २ यज्ञानाम् ३ वेदवचसाम् ४ स्नानम् ५ गर्दभैः

गत्वा म्लेच्छमुखाऽशुचीन्स्पृशति च स्पृष्ट्वाऽपि न स्नात्यहो
न स्नातोऽप्यथभुङ्क्त एव चपलो भुक्त्वाऽपि न व्रीडति[1]॥१३॥
शस्त्रैर्जीवति शास्त्रमुज्झति परं शूद्राऽऽहृतैरम्बुभिः
स्नात्वाऽऽचामति देवताः स्नपयति स्वैरं पचत्योदनम्[2] ॥
उच्छिष्टान्न बिभेति याति यवनैरुच्चावचैः[3] संगतिं
मातङ्गैर्निकटं गतानगणयन्मार्गान्मुहुर्गाहते[4] ॥ १४ ॥
नीचैर्दुर्यवनैः[6] शुनीभिरपि[7] वा निःशङ्कमालोकितं
भुङ्क्ते पङ्क्तिविदूषकैः[8] सह नरैरज्ञातवेदाऽक्षरैः ॥
मद्याऽऽस्वादनमत्तचित्तजनतामोहाय भीहानितः
कर्माण्यारभते श्रुतिस्मृतिवचो दूराण्यसाराण्यहो[9] ॥ १५ ॥
कन्यां काममप्युदूह्य प्रविजहद्दुर्दैवयौवनामज्ञ[10] एनां
द्रव्याऽऽशापाशाकृष्टो भ्रमति चिरतरं हन्त देशान्तरेषु ॥
अन्योन्याऽऽश्लेषवाञ्छा विगलितवयसोरात्तमालिन्यमत्यो-
र्दम्पत्योर्व्याकृतैवं हतविधिरुभयोर्लोकयोः शोकयोगम् ॥ १६ ॥
नाधीतेऽत्र[11] जनो यदि कश्चिदधीते शते सहस्रे वा ॥
दुस्तर्केषु श्राम्यति दूरीकुरुते श्रुतिस्मृतिसुतर्कान् ॥ १७ ॥
एतादृशे कलियुगेऽपि शतेषु कश्चि-
ज्जाताऽऽदरो जगति यः श्रुतिमार्ग एव ॥
यत्किंचिदाचरति पात्रमसौ स्तुतीनां
श्लाघ्यं मितोऽपमपि[12] किं न मरौ[13] सरश्चेत् ॥ १८ ॥
विद्वत्ता वसुधातले विगलिता पाण्डित्यधर्मो गतः
श्रोतॄणां हृदयेष्ववुद्धिराधिका ज्ञानं गतं चौरणे[14] ॥

---

१ न लज्जते. २ अन्नम् ३ उच्चनीचैः अनेकभेदाभिन्नैः ४ 'मांग' इतिलोके. ५ प्रविशति. ६ दुष्टयवनैः ७ 'कुत्री' इति लो० ८ पङ्क्तिबाह्यैः. ९ निष्फलानि १० संजातयौवनाम्. ११ अध्ययनं न करोति. १२ स्वल्पजलम् १३ मरुदेशे १४ नटादौ

गाथागीतविनोदवाक्यरचनायुक्त्या जगद्रञ्जितं
ज्योतिर्वैद्यकशास्त्रसारमखिलं क्षुद्रेषु[1] जातं कलौ ॥ १९ ॥

## तृष्णानिन्दा ।

श्रीः ॥ तृष्णे देवि नमस्तुभ्यं धैर्यविप्लवकारिणि[2] ॥
विष्णुस्त्रैलोक्यपूज्योऽपि यस्त्वया वामनीकृतः[3] ॥ १ ॥
आशाया ये दासास्ते दासाः सर्वलोकस्य ॥
आशा येषां दासी तेषां दासायते विश्वम् ॥ २ ॥
भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं
त्यक्त्वा जातिकुलाऽभिमानमुचितं सेवाकृता निष्फला ॥
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्
तृष्णे जृम्भसि पापकर्मनिरते नाऽद्याऽपि संतुष्यसि ॥३॥
यत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ॥
मन्त्राऽऽराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम्॥४॥
अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् ॥
तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ ५ ॥
वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ॥
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ६ ॥
निवृत्ता भोगेच्छा बहुपुरुषमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ॥
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो दुष्टः कायस्तदपि मरणाऽपायचकितः ॥ ७ ॥
आशा नाम नदी मनोरथजला तृष्णातरङ्गाऽऽकुला

---

१ नीचेषु २ विलयम् ३ ह्रस्वीकृतः ४ निक्षेपः ५ सच्छिद्रकपर्दिका 'फुटकीकवडी' ति लोके. ६ मेरुसदृशम् ७ तृणवल्लघूकरोति. ८ प्राकृते 'वळ्या' इति

रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ॥
मोहाऽऽवर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः॥ ८ ॥

खलोल्लापाः सोढाः कथमपि तदाराधनपरै-
र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ॥
कृताश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाऽऽशे किमु परमितो नर्तयसि माम् ॥ ९ ॥

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नाऽस्माभिर्विगलितविवेकैर्व्यवसितम् ॥
यदाढ्यानामग्रे द्रविणमदनिस्संज्ञमनसां
कृतं म्लानव्रीडैर्निजगुणकथापातकमपि ॥ १० ॥

अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् ॥
वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ॥ ११ ॥

तेनाऽधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥
येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ १२ ॥

निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशतां वाञ्छति
चक्रेशः सुरराजतां सुरपतिर्ब्रह्माऽऽस्पदं वाञ्छति
ब्रह्मा शैवपदं शिवो हरिपदं तृष्णाऽवधिं को गतः ॥ १३ ॥

आशा बलवती राजन्विपरीता हि शृङ्खला ॥
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ १४ ॥

नास्त्यन्या तृष्णया तुल्या कश्चिदस्ति नितम्बिनी ॥
या प्राणानपि मुष्णन्ती भवत्येवाऽधिकं प्रिया ॥ १५ ॥

च्युता दन्ताः सिताः केशा दृङ्निरोधः पदेपदे ॥
पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥ १६ ॥

---

१ नक्रः २ 'भोंवरे' इति लोके. ३ धनिकानाम् ४ शून्यमनसाम् ५ शिरः ६ मुखम्. ७ 'वेडी, इति लोके ८ स्त्री ९ हरन्ती.

तृष्णे त्वमपि तृष्णाऽन्धा त्रिपु स्थानेषु पूज्यसे ॥
व्याधितेष्वनपत्येषु जरापरिणतेषु[1] च ॥ १७ ॥
तृष्णे देवि नमस्तुभ्यं या त्वं सर्वस्य सर्वदा ॥
उत्पादयस्ययत्नेन गोष्पदे सागरभ्रमम् ॥ १८ ॥
गिरिर्महान्[2] गिरेरब्धिर्महानब्धेर्नभो महत् ॥
नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ १९ ॥
मानेनेच्छति वारयत्युपशमे क्ष्मां[3]मालिखन्त्या ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ॥
तृष्णे त्वामनुबध्नता[4] फलमियत्प्राप्तं जनेनाऽमुना
यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ २० ॥
दन्तैरुच्चलितं धिया तरलितं पाण्यङ्घ्रिणा कम्पितं
दृग्भ्यां कुण्डलितं[5] बलेन गलितं रूपश्रिया प्रोषितम् ॥
प्राप्तायां यमभूपतेरिह महाधाव्यां धरायामियं
तृष्णा केवलमेकिकैव सुभटी धीरा पुरो नृत्यति ॥ २१ ॥
धनेषु जीवितव्येषु स्त्रीषु चाऽऽहारकर्मसु ॥
अतृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च ॥ २२ ॥
आशैव राक्षसी पुंसामाशैव विषमञ्जरी ॥
आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥ २३ ॥
ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः ॥
जगत्संमोहजननी यैराशाऽऽशी[6]विषी जिता ॥ २४ ॥
शान्तेर्मातुर्विवेकापितुरपि कृपणं मङ्क्षु[7] कृत्वा पृथङ्मा-
माशा योषा स्वतन्त्रा व्रजति परगृहान्सर्वदा वीतलज्जा[8] ॥
संधत्ते मत्कृशत्वं मम यमनियमौ भ्रातरौ भर्त्सयन्ती
पुष्ट्वा[9] चैवात्मबन्धूंस्तदपि पुनरंहो[10] हन्त वन्ध्यां श्रयामः २५

१ वार्धक्यम् २ पर्वतः अस्मिन् श्लोके सारालङ्कारः ३ पृथ्वी ४ तव अनुबन्धं कुर्वतेत्यर्थः ५ मुकुलितम् ६ सर्पिणी. ७ शीघ्रम् ८ गतलज्जा निर्लज्जेत्यर्थः ९ 'पुष्ट्वा दम्भ स्वबन्धुं तदपीति वा पाठः १० अहो इत्याश्चर्ये.

आशाऽवलम्बो[1]पचितानकस्य तृष्णालताऽनर्थफलं प्रसूते ॥
दिनेदिने लब्धरुचिर्विवस्वान्[2]मीनं[3] च मेषं[4] च वृषं[5] च भुङ्क्ते ॥ २६ ॥

क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः ॥
तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥ २७ ॥

तृष्णा हि चेत्परित्यक्ता को दरिद्रः क ईश्वरः ॥
तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ २८ ॥

यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् ॥
जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ २९ ॥

त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् ॥
हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥ ३० ॥

आशानिष्ठाप्रतिष्ठाःकिल मम महिर्लो[8]स्तासु मौख्यं कदाचि-
द्धा प्रान्त्[7]या सा प्रदद्यादिह[8] किमपि तथा मध्[9]यमा सा परत्र[10]॥
आद्या[11] सा नो[12]भयत्राऽप्यहह तदपि किं सक्ततां यामि तस्य
या प्रौढ्या[14]दप्रगल्भे प्रतिदिवस[13]मुभे ते कदर्थीकरोति ॥३१॥

कलावन्तमपि स्वच्छं स्ववृत्तमपि शीतलम् ॥
लोभः क्षयं नयत्येव पूर्णचन्द्रं यथा मदः ॥ ३२ ॥

तृष्णाभुजङ्गदंशेन भूरिविभ्रान्तचेतसाम् ॥
नौषध्यो न च मन्त्राः स्युः शमाय मणयोऽपि न॥३३॥

आशानां पूरणं कर्तुं ये यतन्ते मनस्विनः ॥
आकाशं कवलीकर्तुमुद्युक्तास्ते कुतो न वा ॥ ३४ ॥

चतुर्मुखसमस्यापि यदा पुंसः स्पृहा भवेत् ॥
तदैव स चतुष्पादाधमतोऽप्यधमायते ॥ ३५ ॥

तृष्णयैवाखिला दोषास्तच्छित्त्यैवाखिला गुणाः ॥
मोदाः सर्वे विद्ययैव शोकाः सर्वेऽप्यविद्यया ॥ ३६ ॥

---

१ अवलम्बः आश्रयः २ सूर्यः ३ मत्स्यम् ४ 'मेढा' इति लोके. ५ वृषभ पक्षे मीनादयो राशिविशेषाः ६ स्त्रियः ७ प्रतिष्ठा. ८ अस्मिन्लोके ९ निष्ठा १० परलोके ११ आशा १२ इहलोके परलोके च १३ अनिष्ठाप्रतिष्ठे १४ पङ्गयति.

## लोभनिन्दा ।

श्रीः ॥ लोभः सदा विचिन्त्यो लब्धेभ्यः सर्वतो भयं दृष्टम् ॥
कार्योऽकार्यविचारो लोभविमूढस्य नाऽस्त्येव ॥ १ ॥
अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् ॥
योऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ २ ॥
केचित्स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते ॥
नतु संत्यजन्ति वित्तं मात्सर्यमिवाऽधमाः सततम् ॥ ३ ॥
नाऽस्त्यर्थमर्थोऽर्थितया लुब्धमुद्वेजयेज्जनम् ॥
अब्धिर्दत्त्वाऽश्वरत्नस्त्रीर्मथ्यमानोऽसृजद्विपम् ॥ ४ ॥
प्रायेण धनिनामेव धनलोभो निरन्तरम् ॥
पञ्चकोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ५ ॥
यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं
गाहन्ते गहनं समुद्रमटनं क्लेशं कृपिं कुर्वते ॥
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं
सर्पन्ति प्रधनं घनाऽन्वितधियस्तल्लोभविस्फूर्जितम् ॥ ६ ॥

## दैवम् ।

श्रीः ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम् ॥
समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥ १ ॥
प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः ॥
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं नहि तत्परेषाम् ॥ २ ॥
माधावमाधाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः ॥
चेद्धावनं साधनमस्ति लक्ष्म्याः श्वा धावमानो न लभेत लक्ष्मीम् ॥ ३ ॥
दैवे विमुखतां याते न कोऽप्यस्ति सहायवान् ॥
पिता माता तथा भार्या भ्राता वाऽथ सहोदरः ॥ ४ ॥

---

१ गहनाम् २ अरण्यम् ३ युद्धम् ४ विलासः ५ पराक्रमः ६ भषकः ७ 'नकुतोधनाढ्य' इति वा पाठः

भूयिष्ठं द्रविणात्मजं[1] जनयितुं लिप्सावता चेतसा
नार्यः पञ्च मया क्रमेण कुलजाः काले समुद्वाहिता[2]ः ॥
सद्विद्या कविता विदेशवसतिः सेवा तथाऽभ्यर्थना
दैवेन प्रतिबन्धकेन युगपद्वन्ध्या[3]ः समस्ताः कृताः ॥ ५ ॥

सच्छिद्रो मध्यकुटिलः कर्णः स्वर्णस्य भाजनम् ॥
धिग्दैवनिहतं नेत्रं पात्रं कज्जलभस्मनः ॥ ६ ॥

ईशः करस्थीकृतकाञ्चनाद्रिः कुबेरमित्रो रजताऽचलस्थः ॥
तथाऽपि भिक्षाऽटनमस्य जातं विधौ[4] शिरस्थे कुटिले[5] कुतः श्रीः॥७॥

क्वचित्पाणिप्राप्तं घटितमपि कार्यं विघटय-
त्यशक्यं केनाऽपि क्वचिदघटमानं घटयति ॥
तदेवं सर्वेषामुपरि परितो जाग्रति विधा-
वुपालम्भः कोऽयं जनतनुधनोपार्जनविधौ ॥ ८ ॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाऽधिकम् ॥
तद्धीरो भव चित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥९॥

नेता यस्य बृहस्पतिः प्रहरणं[6] वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः ॥
इत्याश्चर्यबलाऽन्वितोऽपि बलिभिर्भग्नः परैः संगरे
तद्युक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥ १० ॥

नमस्यामो देवान्ननु हतविधयस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ॥
फलं कर्माऽऽयत्तं यदि किममरैः किंच विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति[7] ॥ ११ ॥

---

१ द्रविण द्रव्यं तदेव आत्मजः पुत्रस्तम् २ विवाहिताः ३ निष्फलाः ४ दैवे पक्षे चन्द्रे. ५ वक्रे. पक्षे विपरीते. ६ आयुधम् ७ समर्थो भवति.

भग्नाऽऽशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाऽऽखुर्विवर स्वयं निपतितो नक्तं मुखे भोगिनः ॥
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः पश्यत दैवमेव हि नृणा वृद्धौ क्षये कारणम् ॥ १२॥
खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ॥
तत्रोच्चैर्महता फलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्राऽऽपदां भाजनम् १३

गजभुजङ्गमयोरपि बन्धनं शशिदिवाकरयोर्ग्रहपीडनम् ॥
मतिमतां च विलोक्य दरिद्रता विधिरहो बलवानिति मे मतिः ॥ १४ ॥
सृजति तावदशेषगुणाऽऽकरं पुरुषरत्नमलंकरणं भुवः ॥
तदपि तत्क्षणभाङ्गि करोति चेदहह कष्टमपण्डितता विधेः॥ १५ ॥
स्वयं महेशः श्वशुरो नगेशः सखा धनेशस्तनयो गणेशः ॥
तथाऽपि भिक्षाऽटनमेव शम्भोर्बलीयसी केवलमीश्वरेच्छा॥ १६ ॥

यद्यपि दैवाल्लब्धा कस्तूरीभूमिरत्र भूरितरम् ॥
नेया किमसौ तदपि हि शौचार्थं जानता पुंसा ॥ १७ ॥
स्ववशः करोति कर्म प्रमादतस्तु परवशो भवति ॥
स्ववशो रोहाति वृक्षं निपतत्यवशास्ततः पुरुषः ॥ १८ ॥
किं त्वं न वेत्सि जगति प्रख्यातं लाभकारणे मूलम् ॥
विधिलिखिताऽक्षरमालं फलति कपालं न भूपालः ॥१९॥
मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु ॥
आकाशं सकलं प्रयातु खगवत्कृत्वाप्रयत्नं परं ॥
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥२०

१ दैवम् २ मूर्खता ३ हिमालय. ४ हस्तपादादिक्षालनार्थम् ५ युद्धे ६ 'व्यापार' इति लोके.

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोप्यन्तात् ॥
आनीय झटिति घटयाति विधिरभिमतमभिमुखीभूतः ॥२१
दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत् ॥
सरोऽम्भश्चातकेनाऽऽत्तं गलरन्ध्रेण गच्छति ॥ २२ ॥
भाग्यवन्त प्रसूयेथा मा शूरं मा च पण्डितम् ॥
शूराश्च कृतविद्याश्च वने सीदन्ति पाण्डवाः ॥ २३ ॥
न केवलं मनुष्येषु दैवं देवेष्वपि प्रभुः ॥
सति मित्रे धनाऽध्यक्षे चर्मप्रावरणो हरः ॥ २४ ॥
अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् ॥
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया
लीलादुर्ललिताऽद्भुतव्यसनिने दैवाय तस्मै नमः ॥ २५ ॥
अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ॥
जीवत्यनाथोऽपि वनेऽपि रक्षितः कृतप्रयत्नोऽपि गृहे विनश्यति॥२६
दाता बलिः प्रार्थयिता च विष्णुर्दानं भुवो वाजिमखस्य कालः ॥
नमोस्तु तस्यै भवितव्यतायै यस्याः फलं बन्धनमेव जातम् ॥२७
भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ॥
पश्य गच्छत एवाऽस्तं निर्यतिः केन लङ्घ्यते॥ २८ ॥
प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ॥
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ २९ ॥
किं करोति नरः प्राज्ञः शूरो वाऽप्यथ पण्डितः
दैवं यस्य च्छलान्वेषि करोति विफलाः क्रियाः ॥ ३० ॥
यन्मनोरथशतैरगोचरं न स्पृशन्ति कवयोऽपि गिरा यत् ॥
स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः ॥ ३१ ॥
माता यस्य धराधरेन्द्रदुहिता तातो महेशस्तथा

---

१ वज्रताम् २ अश्वमेधस्य ३ दैवाय. ४ दैवम्.५ पर्वतराजपुत्री पार्वती

भ्राता विघ्नकुलान्तकः पितृसखो देवो धनानां पतिः ॥
ख्यातः क्रौञ्चविदारणे सुरपतेः सेनाग्रगः षण्मुख-
स्तद्दुर्दैवबलेन कुत्र घटते नाऽद्यापि पाणिग्रहः ॥ ३२ ॥
अनुकूले सति धातरि भवत्यनिष्टादपीष्टमचिरेण ॥
पीत्वा विषमपि शम्भुर्मृत्युंजयतामवाप तत्कालम् ॥ ३३ ॥
अनुचितमेवाऽऽचरितं पशुपतिना यद्विधेः शिरश्छिन्नम् ॥
छिन्नो न चाऽस्य हस्तो येनाऽयं दुर्लिपिं लिखति ॥ ३४ ॥
कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ॥
अन्योन्यं प्रति पक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥ ३५ ॥
संदसि विदुरभीष्मद्रोणशारद्वतानां
पतिभिरमरकल्पैः पञ्चभिः पालिताऽपि ॥
अहह परिभवस्य द्रौपदी पात्रमासी-
द्बलवति सति दैवे बन्धुभिः किं विधेयम् ॥ ३६ ॥
पिबन्ति मधुपद्मेषु भृङ्गाः केसरधूसराः ॥
हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम् ॥ ३७ ॥

## उद्योगप्रशंसा।

श्रीः ॥ उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् ॥
जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ १ ॥
उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः ॥
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ २ ॥
उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ॥
षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥ ३ ॥

---

१ गजाननः २ कुबेरः ३ विवाहः ४ दैवे. ५ दुर्लेखम् ६ 'रहाटगाडगें' इति लोके ७ सभायाम् ८ देवतुल्यैः ९ अहह इति खेदे. १० पराभवस्य. ११ उद्योगेन

उद्योगिनं पुरुष[1]सिंहमुपैति लक्ष्मी-
र्दैवं प्रधानमिति का[2]पुरुषा वदन्ति ॥
दैवं विहाय कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ ४ ॥

उद्योगिनः कराऽऽलम्बं करोति क[3]मलाऽऽलया ॥
अनुद्योगिकराऽऽलम्बं करोति क[4]मलाऽग्रजा ॥ ५ ॥

का[5]कतालीयवत्प्राप्तं दृष्ट्वाऽपि निधि[6]मग्रतः ॥
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ ६ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ॥
नास्त्युद्यमसमो बन्धुः कृत्वाऽयं नाऽव[7]सीदति ॥ ७ ॥

न दैवमिति संचित्य त्यजेदुद्योगमात्मनः ॥
अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमिच्छति ॥ ८ ॥

विहाय पौरुष यो हि दैवमेवाऽव[8]लम्बते ॥
प्रासाद[9]सिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ९ ॥

पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते ॥
उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥ १० ॥

दैवं पुरुषकारेण सा[10]ध्यासिद्धिनिबन्धनम् ॥
योऽतिक्र[11]मितुमिच्छेत्स न लोकेष्ववसीदति ॥ ११ ॥

संपदा[12]सु स्थितंमन्यो भवति स्वल्पयाऽपि यः ॥
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ १२ ॥

असंपादयतः कंचिदर्थं जातिक्रियागुणैः ॥
यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ १३ ॥

---

१ पुरुषश्रेष्ठम् २ कुत्सितपुरुषा. ३ लक्ष्मीः ४ अलक्ष्मी 'अवदसे' ति लोके. ५ काकागमनमिव तालपतनमिव काकतालीयं तद्वत् अवितर्कितं अकस्मादिति यावत् ६ निक्षेपं, 'ठेवा' इति लोके. ७ नावसीदति खिन्नो न भवति. ८ आश्रयति. ९ प्रासादे देवालयशिखरे य. सिंहस्तद्वत् १० साध्यसिद्ध्याधीनं तदायत्तमित्यर्थ. ११ उलङ्घयितुम् १२ आत्मान सुस्थितं मन्यतेसौ सुस्थितमन्यः

कामपि श्रियमासाद्य यस्तद्वृधौ न चेष्टते ॥
तस्याऽयेतिषु न श्रेयो बीजभोजिकुटुम्बवत् ॥ १४ ॥

## परगृहवासः ।

श्रीः ॥ उडुगणपरिवारो नायकोऽप्योषधीना-
ममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ॥
भवति विगतरश्मिर्मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वं न याति ॥ १ ॥
कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् ॥
कष्टादपि कष्टतरं परगृहवासः परान्नं च ॥ २ ॥

## ऋणम् ।

श्रीः ॥ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रिकम् ॥ १ ॥
पापं कर्तुमृणं कर्तुं मन्यन्ते मानवाः सुखम् ॥
परिणामोऽतिगहनो महतामपि नाशकृत् ॥ २ ॥
लोकद्वयप्रतिभयैकनिदानमेत-
द्धिक् प्राणिनामृणमहो परिणामघोरम् ॥
एकः स एव हि पुमान्परमस्त्रिलोके
क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ ३ ॥

## कर्म ।

श्रीः ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशाऽवतारगहने क्षिप्तः सदा संकटे ॥
रुद्रो येन कपालपाणिपुटके भिक्षाऽटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ १ ॥

---

१ व्यापारं न करोति २ उत्तरकालेषु ३ कल्याणम् ४ नक्षत्रसमूहः परिवारो यस्य. ५ वनस्पतीनाम् ६ निस्तेजा. ७ सूर्यस्य. ८ परगृहम् ९ नीचताम् १० ऋणम् ११ कारणम् १२ परिणामे भयकरम् १३ कुम्भकारः 'कुंभार' इति लोके.

धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने ॥
देहश्चितायां परलोकमार्गे कर्माऽनुगो गच्छति जीव एकः ॥ २ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ ३ ॥

यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाऽशुभमात्मकर्म ॥
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ॥ ४ ॥

रोगशोकपरीतापबन्धनव्यसनानि च ॥
आत्माऽपराधवृक्षाणां फलान्येतानि देहिनाम् ॥ ५ ॥

नैवाऽकृतिः फलति नैव कुलं न शीलं
विद्याऽपि नैव न च यत्नकृताऽपि सेवा ॥
भाग्यानि पूर्वतपसा किल संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ६ ॥

वने जने शत्रुजलाऽग्निमध्ये महार्णवे पर्वतमस्तके वा ॥
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ७

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ॥
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः॥८॥

गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नतः पण्डितेन ॥
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ९ ॥

स्थाल्यां वैदूर्यमय्यां पचति तिलकणांश्चन्दनैरिन्धनाद्यैः

१ प्राप्नोति २ दैववशात् ३ परिणामः ४ निश्चेतव्या. ५ अतित्वरया ६ रत्नविशेषः

सौवर्णैर्लाङ्गलाद्यैर्निखनति वसुधामर्कमूलस्य हेतोः ॥
छित्त्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्ता-
त्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः॥१०॥
अचोद्यमानानि यथा पुष्पाणि च फलानि च ॥
स्वं कालं नाऽतिवर्तन्ते तथा कर्म पुराकृतम् ॥ ११ ॥
आकाशमुत्पततु गच्छतु वा दिगन्त-
मम्भोनिधिं विशतु तिष्ठतु वा यथेच्छम् ॥
जन्मान्तराऽर्जितशुभाऽशुभकृन्नराणां
छायेव न त्यजति कर्मफलाऽनुबन्धः ॥ १२ ॥
सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा ॥
अहं करोमीति वृथाऽभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥१३॥
विपत्तौ किं विषादेन संपत्तौ हर्षणेन किम् ॥
भवितव्यं भवत्येव कर्मणामीदृशी गतिः ॥ १४ ॥

## उदरपूरणदूषणम् ।

श्रीः ॥ दीना दीनमुखैस्तथैव शिशुकैराकृष्टजीर्णाऽम्बरा
क्रोशद्भिः क्षुधितैर्निरन्नविधुरा दृश्येत चेद्गेहिनी ॥
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाऽक्षरं
को देहीति वदेत्स्वदग्धजठरस्याऽर्थे मनस्वी जनः ॥ १ ॥
अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाऽम्भोजस्फुटोज्ज्वलचन्द्रिका ॥
विपुलविलसल्लज्जावल्लीवितानकुठारिका
जठरपिठरीदुष्पूरेयं करोति विडम्बनम् ॥ २ ॥
गङ्गातरङ्गकणशीकरशीतलानि

---

१ 'नागर' इति लोके. २ प्राचीर 'कुपण' इतिलोके. ३ अप्रेर्यमाणानि ४ खेदेन. ५ कृपणा ६ रोदन कुर्वद्भिः ७ भार्या ८ समर्था. ९ 'कुह्राड' इति लोके १० जठरभाण्डम् ११ उपहासम् १२ अम्बुकणः

विद्याधराऽध्युषितचारुशिलातलानि ॥
स्थानानि किं हिमवतः प्रलयंगतानि
यत्साऽवमानपरपिण्डरतो मनुष्यः ॥ ३ ॥
किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः ॥
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्तालपवित्तस्मयपवनवशान्नर्तितभ्रूलतानि ॥ ४ ॥
पुण्यैर्मूलफलैः प्रियप्रणयिनी वृत्तिं कुरुष्वाऽधुना
भूशय्यां नवपल्लवैः कुरु तृणैरुत्तिष्ठ यामो वने ॥
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
वित्तव्याध्यविवेकसंकुलगिरां नामाऽपि न श्रूयते ॥ ५ ॥
ये वर्धन्ते धनपतिपुरः प्रार्थनादुःखभाजो
ये चाऽल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ॥
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ ६ ॥
भिक्षाऽऽहारमदैन्यमप्रतिहतं भीतिच्छिदं सर्वदा
दुर्मात्सर्यमदाऽभिमानमथनं दुःखौघविध्वंसनम् ॥
सर्वत्राऽन्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शंभोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ ७ ॥

लाङ्गूलचालनमधश्चरणाऽवपातं
भूमौ निपत्य वदनोदरदर्शनं च ॥
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु ॥
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ८ ॥

---

१ दरीभ्यः २ अविनीतानाम् ३ गर्वः ४ उपजीवनम् ५ विषयाक्षेपेण पर्यस्ता भ्रष्टा बुद्धिर्यस्य. ६ शिखरीपर्वतस्तस्य कुहरं बिल तत्संबन्धी यो ग्रावा पाषाणः स एव शय्या तस्या निषण्ण उपविष्ट ७ पुच्छविक्षेपणम् ८ गजश्रेष्ठः

यज्जीवति क्षणमपि प्रथितं[1] मनुष्यै-
र्विज्ञानविक्रमयशोभिरभज्यमानम्
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ९ ॥
यो नाऽऽत्मजे न च गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च बन्धुवर्गे ॥
किं तस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ १० ॥
अहितहितविचारशून्यबुद्धेः श्रुतिसमयै[2]र्बहुभिस्तिरस्कृतस्य ॥
उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः॥ ११ ॥
अस्य दग्धोदरस्याऽर्थे किं न कुर्वन्ति पण्डिताः ॥
वानरीमिव वाग्देवीं नर्तयन्ति गृहेगृहे ॥ १२ ॥

## मौनगुणाः।

आत्मनो मुखदोषेण बद्ध्यन्ते शुकसारिकाः ॥
बकास्तत्र न बद्ध्यन्ते मौनं सर्वाऽर्थसाधनम् ॥ १ ॥
स्वाऽऽयत्त[3]मेकान्तगुणं विधात्रा विनिर्मितं छादन[4]मज्ञताया[5]ः ॥
विशेषतः सर्वविदां समाजे[6] विभूषणं मौनमपण्डितानाम् ॥ २ ॥
भद्रंभद्रं कृतं मौनं कोकिलैर्जलदागमे[7] ॥
वक्तारो दर्दुरा[8] यत्र तत्र मौनं समाचरेत् ॥ ३ ॥

## वैयाकरणानां

### स्तुतिर्निन्दा च।

श्रीः ॥ वैयाकरणकिराता[9]दपशब्दमृगाः क्व यान्ति संत्रस्ताः[10] ॥

---

१ प्रख्यातम् २ सिद्धान्तैः ३ स्वस्याधीनम् ४ पिधानम् ५ मूर्खतायाः ६ सभायाम् ७ वर्षाकाले. ८ भेकाः ९ वैयाकरण एव किरातो भिल्लस्तस्मात् १० भीताः

ज्योतिर्नटविटगायकभिषगाननगह्वराणि यदि न स्युः ॥ १ ॥
कुप्वो ᳲक ᳲपौ च शेषोऽप्यसखि ससजुषोरुर्विरामोऽवसानं
शश्छोटीत्यादिशब्दैः सदसि यदि शठाः शाब्दिकाः पण्डिताः स्युः
तेषां को वाऽपराधः कथयत सततं ये पठन्तीह थोड्डत-
त्ताथय्याथय्यथय्याधिगधिगधिगधिकूथय्यथय्येति शब्दान् ॥ २ ॥
टिड्ढाणञ्द्वयसज्दुटूङसिङसोस्तिप्तसझिसिप्थस्थमि-
व्वस्मस्ता हशि च ष्टुनाष्टुरतइञ्शश्छोऽच्यचोन्त्यादिटि ॥
लोपोव्योर्वलि वृद्धिरेचि यचि भं दाधाघ्वदापूछे चटे-
रित्यब्दानखिलान्नयन्ति कतिचिच्छब्दान् पठन्तः कटून् ॥ ३ ॥
सूत्रैः पाणिनिनिर्मितैर्बहुतरैर्निष्पाद्य शब्दाऽऽवलिं
वैकुण्ठस्तवमक्षमा रचयितुं मिथ्याश्रमाः शाब्दिकाः ॥
पक्काऽन्नं विविधं श्रमेर्ण विविधाऽपूपाऽग्र्यसूपाऽन्वितं
मन्दाऽग्नीननुरुन्धते मितबलानाघ्रातुमप्यक्षमान् ॥ ४ ॥
कृतदुरितनिराकरणं व्याकरणं चतुरधीरधीयानः ॥
बुधगणगणनाऽवसरे कनिष्ठिकायां परं जयति ॥ ५ ॥
पातञ्जले विष्णुपदाऽऽपगायाः पातञ्जले चाऽपि नयेऽवगाहम्
आचक्षते शुद्धिदमाप्रसूतेराचक्षते रागमधोक्षजे च ॥ ६ ॥
नृणामनभ्यस्तफणाभृदीशगिरा दुरापा बुधराजगोष्ठी ॥
अबुद्धचापश्रुतिपद्धतीनां युद्धक्षमेवोद्धृतयोद्धसार्था ॥ ७ ॥
नाङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते ॥
कस्मिंश्चिदुक्ते तु पदे कथञ्चित्स्वैरं वपुः स्विद्यति वेपते च ८

१ ज्योतिःशब्देन गणकाः. नटा नाट्यकाराः विटा जाराः गायकाः भिषजो वैद्यास्तेषामाननान्येव गह्वराणि गुहाः २ धूर्ताः ३ थोड्डत्ताथय्येतिगायकानां तालशब्दानुकरणम् ४ वर्षाणि. ५ यापयन्ति. ६ कर्णकठोरान् ७ विष्णुस्तवम् ८ श्रमेण कृत्वेति शेषः ९ अनुकुर्वन्ति. १० गङ्गायाः जले पात पतनम् ११ पतञ्जलिनिर्मिते १२ नये व्याकरणशास्त्रे. १३ मज्जनमभ्यास च १४ दुष्प्रापा १५ पण्डितराजसभा. १६ अज्ञातधनुर्वेदमार्गाणाम्. १७ कम्पते

[1]सूत्रं पाणिनिबद्धं [2]कलयन् पुरुषः [3]समुद्वहति [4]सुदृशम् ॥
[5]वर्णादीनां धर्मान् [6]बुद्धा[7]विधिवत्[8]प्रयुङ्क्तेऽसौ ॥ ९ ॥

[9]शब्दशास्त्रम[10]नधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे ॥
बद्धुमिच्छति वने मदोत्कटं हस्तिनं कमल[11]नालतन्तुना ॥ १०

## नैयायिकप्रशंसा।

[12]मोहं [13]रुणद्धि विमलीकुरुते च बुद्धिं
[14]सूते च संस्कृतपदव्यवहारशक्तिम्
शास्त्राऽन्तराऽभ्यसनयोग्यतया [15]युनक्ति
तर्कश्रमो न तनुते किमिहोपकारम् ॥ १ ॥

प्रायः काव्यैर्गमितवयसः पाणिनीयाऽम्बुराशेः
सारज्ञस्याऽ[16]प्यपरिकलितन्यायशास्त्रस्य पुंसः ॥
वादाऽऽरम्भे वदितुमनसो वाक्यमेकं सभायां
[17]वक्त्री जिह्वा भवति कियतीं पश्य कष्टामवस्थाम् ॥ २ ॥

अपरीक्षितलक्षणप्रमाणैरपरामृष्टपदार्थसार्थतत्त्वैः ॥
अवशीकृतजैत्रयुक्तिजालैरलमेतैरनधीततर्कविद्यैः ॥ ३ ॥

अद्भुत[18]स्तर्कपाथोधिरगाधो यस्य वर्धकः ॥

---

१ पाणिनिना बद्धरचित सूत्र पक्षे पाणौ हस्ते निबद्ध सूत्र कङ्कणमिति लोके. विवाहकाले सूत्रनिर्मिते कङ्कणे वधूवरयोर्हस्तयोर्बध्नन्तीति प्रसिद्धिः २ अर्थज्ञानपूर्वक विचारयन् पक्षे धारयन् ३ सम्यग्धारयति पक्षे सम्यगुद्वहति पाणिग्रहणपूर्वक स्वीकरोति ४ शोभना दृष्टि शुद्धाशुद्धविवेचनशक्तिमित्यर्थः पक्षे शोभना दृक् यस्या एतादृशी स्त्रियम् ५ अकारप्रभृतिवर्णादीनाम् पक्षे ब्राह्मण वर्णादीनाम् ६ ज्ञात्वा. ७ यथाशास्त्रम् ८ प्रयोग करोति पक्षे योजयति ९ व्याकरणम् १० अध्ययनमकृत्वा ११ बिसतन्तुना १२ अज्ञान. १३ रोधयति नाशयतीत्यर्थः १४ उत्पादयति. १५ योजयति. १६ अनभ्यस्तन्यायशास्त्रस्य १७ वक्रा. १८ तर्कसमुद्रः

अ[1]क्षपादो[2]ऽतमःस्पृष्टस्त्वकलङ्कः कला[3]निधिः ॥ ४ ॥
ज्ञानाऽब्धिराक्षि[4]चरणः क[5]णभक्षकश्च
श्रीपाक्षिलोऽप्युदयनः स च वर्धमानः ॥
गङ्गेश्वरः शशधरो वहवश्च नव्या
ग्रन्थैर्निरुन्धत इमे हृदयाऽन्धकार[6]म् ॥ ५ ॥

## नैयायिकनिन्दा ।

क[7]र्मब्रह्मविचारणां विजहतो भोगापवर्ग[8]प्रदां
घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः
प्रत्यक्षं न पुनाति नाऽपहरते पापानि पीलुच्छटा
व्याप्तिर्नाऽवति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥ १ ॥
हेतुः कोऽपि विशिष्टधीरनुमितौ न ज्ञानयुग्मं मरु-
त्त्वाचो नेति च मोघवादमु[9]खरा नैयायिकाश्चिद्बुधाः ॥
मेषस्याऽण्डमियत्पलं वलिभुजो दन्ताः कियन्तस्तथे-
त्येवं संततचिन्तनैः श्रमजुषो न स्युः कथं पण्डिताः ॥ २ ॥
न जिघ्रत्या[10]म्नायं स्पृशति न तदङ्गा[11]न्यपि सकृ-
त्पुराणं नाऽऽदत्ते न गणयति किंच स्मृतिगणम् ॥
पठञ्छु[12]ष्कं तर्कं परपरिभवार्थोक्तिभिरसौ
नयत्यायुः सर्वं निहतपरलोकार्थयतनः ॥ ३ ॥
प्रयत्नै[13]रस्तोकैः परिचितकुतर्कप्रकरणाः
परं वाचो वश्यान्कतिपयपदौघान्विदधतः ॥
सभायां वाचाटाः श्रुतिकटुरटन्तो घटपटा-
न्न लज्जन्ते मन्दा[14]ः स्वयमपि तु जिह्रेति[15] विबुधः ॥ ४ ॥

---

१ गौतम. पक्षे क्षपा ददातीति क्षपादः स न भवतीति तथाविध इति चन्द्रविशेषणम् २ अज्ञानेनास्पृष्टः पक्षे तमसा राहुणा न स्पृष्ट ३ कलाना निधिरित्यक्षपादविशेषणं पक्षे चन्द्रः एतैर्विशेषणैरद्भुतत्व बोधितम् ४ गौतमः ५ कणाद ६ अज्ञान. ७ कर्मचिन्तनं ब्रह्मचिन्तन च ८ मोक्षः ९ जल्पाकाः १० वेदम् ११ वेदाङ्गानि. १२ नीरसम् १३ बहुभिः १४ मुर्खाः १५ लज्जा प्राप्नोति

# वैद्यप्रशंसा

श्रीः॥ गुरोरधीताऽखिलवैद्यविद्यः पीयूषपाणिः[1] कुशलः क्रियासु ॥
गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥१॥
रागादिरोगान्सततानुषक्तानशेषकायप्रसृतानशेषान् ॥
औत्सुक्य[2]मोहा[3]ऽरति[4]दाञ्जघान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥ २

मूर्ध्नि[5]स्ते दुःसहवेदनाकवलिते भग्ने स्वरेऽन्तर्गलं
तप्तायां ज्वरपावकेन च तनौ तान्ते[6] हृषीक[7]व्रजे ॥
दूने[8] बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः
कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥ ३ ॥

मा बोधि वैद्यकमथाऽपि महाऽमयेषु
प्राप्तेषु यो भिषगिति[9] प्रथितस्तमेव ॥
आकारयत्य[10]खिल एव विशेषदर्शी
लोकोऽपि तेन भिषगेष न दूषणीयः ॥ ४ ॥

निर्वृत्ता[11]ध्वरकृत्यऋत्विजमहो तीर्णापगो[12] नाविकं
युद्धान्ते सुभटं[13] च सिद्धविजयो वोढारमाप्तस्थलः ॥
वृद्धं वारवधूजनं च कितवो[14] निर्घृष्टतद्यौवनो
ध्वस्ताऽऽतङ्कचयश्रि[15]चिकित्सकमपि[16] द्वेष्टि प्रदेयाऽर्थिनम् ॥५ ॥

भ्रान्ता वेदान्तिनः किं पठथ शठतयाऽद्यापि चाऽद्वैतविद्यां
पृथ्वीतत्त्वे लुठन्तो विमृशथ सततं कर्कशास्तार्किकाः किम् ॥
वेदैर्नानागमैः किं ग्लपयथ हृदयं श्रोत्रियाः[17] श्रोत्रशूलै[18]-
र्वैद्यं सर्वानवद्यं[19] विचिनुत शरणं प्राणसंप्रीणनाय ॥ ६ ॥

---

१ पीयूषममृत पाणौ यस्य सः अमृतवदवश्यमारोग्यद इत्यर्थः 'पद्महस्त' इति लोका वदन्ति २ अविचार्यकार्यप्रवृत्ति ३ विचाराशक्ति ४ असतोषः ५ मस्तके. ६ व्याकुले ७ इन्द्रियसमूहे. ८ खिन्ने ९ वैद्य. १० आह्वयति ११ सपादितयज्ञकृत्यः १२ तीर्णा उत्तीर्णा आपगा नदी येन स. १३ योद्धारम् १४ धूर्त. १५ निरस्तरोगसचयः १६ वैद्यम् १७ वेदाध्यायिनः १८ कर्णकटुभिः १९ सर्वेषा मध्ये निर्दोषम्.

## कुवैद्योपहासः ।

वैद्यराज नमस्तुभ्यं यमराजसहोदर ॥
यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ १ ॥

मिथ्यौषधैर्हन्त मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः ॥
वैद्या इमे वञ्चितरुग्गण[1]वर्गाः पिचण्ड[2]भाण्डं परिपूरयन्ति ॥ २

न धातो[3]र्विज्ञानं न च परिचयो वैद्यकनये
न रोगाणां तत्त्वाऽवगतिरपि नो वस्तुगुणधीः ॥
तथाऽप्येते वैद्या इति तरलयन्तो[4] जडजना-
नसून्[5]मृत्यो[6]र्भृत्या इव वसु[7] हरन्ते गदजुषाम्[8] ॥ ३ ॥

कषायैरुपवासैश्च कृतामुल्लाघतां[9] नृणाम् ॥
निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ४ ॥

अज्ञातशास्त्रसद्भावा[10]ञ्छास्त्रमात्रपरायणान् ॥
त्यजेद्दूराद्भिषक्पाशा[11]न्पाशान्वैवस्वता[12]निव ॥ ५ ॥

## गणकप्रशंसा ।

न दैवं न पित्र्यं च कर्माऽवसिद्ध्येन्न यत्राऽस्ति देशे न नु ज्योतिषज्ञः ॥
न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥ १

भानोः शीतकरस्य वाऽपि भुजगग्रासे[13] पुरो निश्चिते
तीर्थानामटनं जनस्य घटते तापत्रयोच्चाटनम् ॥
इष्टे प्रागवधारिते सति धृते स्तुष्टेश्च लाभो भवे-
त्तुष्टे तु व्यसने[14]ऽत्र तत्परिहृतिः[15] कर्तुं जपाद्यैः क्षमा ॥ २ ॥

वृद्धिह्रासौ[16] कुमुदसुहृदः[17] पुष्पवन्तोप[18]रागः[19]
शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः ॥

---

१ रोगसमूहः २ उदरभाण्डम् ३ पारदादेः ४ कम्पयन्तः ५ प्राणान् ६ यमस्य ७ द्रव्यम् ८ रोगिणाम् ९ रोगशान्तिम् १० वास्तवानर्थान्. ११ कुत्सिताभिषजो भिषक्पाशास्तान् १२ यमसंबन्धिनः १३ ग्रहणे. १४ दुःखे १५ परिहारः १६ क्षयवृद्धी १७ चन्द्रस्य १८ सूर्याचन्द्रमसोः १९ ग्रहणम्.

आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भीपुलाक-
न्यायाज्ज्योतिर्नयगतिविदां निश्चलं मानभावम् ॥ ३ ॥
असुखमथ सुखं वा कर्मणां पक्तिवेला-
स्विह नियतमेते भुञ्जते देहभाजः ॥
तदिह पुरत एव प्राह मौहूर्तिकश्चे-
त्कथय फलमसीपामन्ततः किं ततः स्यात् ॥ ४ ॥
विदैवज्ञं ग्रामं विबुधविधुरां भूपतिसभां
मुखं श्रुत्या हीनं मनुजपतिशून्यं च विषयम् ॥
अनाचारान्दारानपहरिकथं काव्यमपि च
प्रवक्तृत्वाऽपेतं गुरुमपि सुबुद्धिः परिहरेत् ॥ ५ ॥
एकाऽऽसनस्था जलवायुभक्षा मुमुक्षवस्त्यक्तपरिग्रहाश्च ॥
पृच्छन्ति तेऽप्यम्बरचारिचारं दैवज्ञमन्ये किमुताऽर्थचित्ताः ॥६॥

## कुगणकनिन्दा।

श्रीः॥ गणिकागणकौ समानधर्मौ निजपञ्चाङ्गनिदर्शकावुभौ ॥
जनमानसमोहकारिणौ तौ विधिना वित्तहरौ विनिर्मितौ ॥ १ ॥
ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गाऽपवादात्मभिः
कल्लोलैर्निविडे कणान्कतिपयाँल्लब्ध्वा कृतार्था इव ॥
दीर्घायुःसुतसंपदादिकथनैर्दैवज्ञपाशा इमे
गेहंगेहमनुप्रविश्य धनिनां मोहं मुहुः कुर्वते ॥ २ ॥
विलिखति सदसद्वा जन्मपत्रं जनानां
फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम् ॥
न फलति यदि लग्नद्रष्टुरेवाऽह मोहं
हरति धनमिहैवं हन्त दैवज्ञपाशः ॥ ३ ॥
प्रमोदे खेदे वाऽप्युपनमति पुंसां विधिवशा-

---

१ परिपाककालेषु. २ रहिताम् ३ देशम् ४ मोक्षेच्छव. ५ त्यक्तः परिग्रहः कलत्रं यैस्ते. ६ आकाशसचारिग्रहगतिम् ७ कुदैवज्ञाः ८ स्व चातुर्यम् [illegible]

न्मयैवं प्रागेवाऽभिहितमिति मिथ्या कथयति ॥
जनानिष्टाऽनिष्टाऽऽकलनपरिहारैकनिरता-
नसौ मेषादीनां परिगणनयैव भ्रमयति[1] ॥ ४ ॥

## विद्याविघ्नानि तत्साधनकथनम् ।

स्वच्छन्दत्वं धनार्थित्वं प्रेमभावोऽथ भोगिता ॥
अविनीतत्वमालस्यं विद्याविघ्नकराणि षट् ॥ १ ॥
यावद्गुरुपदाम्भोजेऽनुरागो याति नोदयम् ॥
क्व नाम तावत्सद्विद्यापद्मिनी प्रैति फुल्लताम् ॥ २ ॥
यस्य नास्ति समुद्योगो विद्यासंपादने क्वचित् ॥
क्व सा तस्य नहि प्रेक्ष्या सुप्तैश्चान्द्रमसी कला ॥ ३ ॥
निमेषमपि यो व्यर्थं प्राणान्तेऽपि न वै नयेत् ॥
तस्यैव विद्या दासी स्याद्योगेन्द्रस्येव मुक्तता ॥ ४ ॥
सति तीव्रतमे कामे विद्यायां किं न सा वशा ॥
ध्रुवेण बालकेनापि सम्पदा सादिताऽचला ॥ ५ ॥

## अभ्यासमाहात्म्यम् ।

अभ्यासेन न यत्सिद्धिस्तादृक् श्रेयोस्ति किं भुवि ॥
तस्मात्तदर्थिभिर्भूयोऽभ्यास एवावलम्ब्यताम् ॥ १ ॥
अभ्यासादेव पवनं भक्षयन्त्येव केचन ॥
तरन्त्यम्भोधिमप्यन्ये सहन्त्यपि विषादिकम् ॥ २ ॥
अभ्यासिनामेव लभ्या अपि विद्याश्चतुर्दश ॥
अप्यर्कमण्डलं भित्वाऽभ्यासिनैवेह गम्यते ॥ ३ ॥
अभ्यासस्य प्रसादेन वायोरपि जयो भवेत् ॥
अणिमाद्यष्टासिद्धीनां भाजनं भवति ध्रुवम् ॥ ४ ॥
अभ्याससदृशं नैव लोकेऽस्ति हितसाधनम् ॥
अतः स एव कर्तव्यः सर्वदा साधुवर्त्मना ॥ ५ ॥

---

१ भ्रम करोति.

## कलावत्प्रशंसा ।

श्रीः ॥ विबुधानां सभायां तु कलावानेव राजते ॥
हरस्तानखिलांस्त्यक्त्वा तमेव शिरसा दधौ ॥ १ ॥
यां सर्वेपि दिदृक्षन्ति जनाः सैव कला किल ॥
लाञ्छनस्यैव वैशद्यं याभिस्ता विकला न किम् ॥ २ ॥
पक्षिणाममृतावाप्तिः पाषाणानामपि द्रवः ॥
सारस्यं पुण्डरीकाणां जायतेऽहो कलावता ॥ ३ ॥
कलावन्तमुपाश्रित्य जीवन्ति विबुधाः किल ॥
अमृतात्मकताऽस्यैव यदस्ति तिमिरापहे ॥ ४ ॥
कलावते नमस्तस्मै यत्पादैः शारदागमः ॥
स्फुटीभवति लोकाना सर्वेषामपि निर्मलैः ॥ ५ ॥

## प्रमादनिन्दा ।

श्रीः ॥ दुःखार्णवसहस्राणि प्रमादेन पदेपदे ॥
प्रत्यक्षमुपलभ्यन्ते स कार्योऽतो न कुत्रचित् ॥ १ ॥
मृत्युं प्रमादमेवाह भगवान्बादरायणः ॥
तस्मात्तद्ध्वंसने दक्षो यः स मृत्युंजयो भवेत् ॥ २ ॥
प्रमादिनां न वित्तानि न विद्या वनितापि च ॥
न हि मद्यजुषा क्वापि साधनान्यथ धीश्च ह्रीः ॥ ३ ॥
शङ्के कृतान्तदंष्ट्रेयं याचितेऽनवधानता ॥
क्षणाच्चूर्णीकरोत्येव यतः सा गणितान्गुणान् ॥
प्रमाद्य इति वक्तव्ये प्रमाद इति जल्पति ॥
जनस्तस्यैव माहात्म्याद्वैयाकरणराडपि ॥ ५ ॥

## लक्ष्मीस्वभावः ।

श्रीः ॥ लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्त-
मन्धीभवन्ति पुरुषास्त्वदुपासनेन ॥

नोचेत्कथं कमलपत्रविशालनेत्रो
नारायणः स्वपिति पन्नगभोगतल्पे ॥ १ ॥

हे लक्ष्मि क्षणिके स्वभावचपले मूढे च पापेऽधमे
न त्वं चोत्तमपात्रमिच्छसि खले प्रायेण दुश्चारिणि ॥
ये देवार्चनसत्यशौचनिरता ये चाऽपि धर्मे रता-
स्तेभ्यो लज्जासि निर्दये गतमतिर्नीचो जनो वल्लभः॥ २ ॥

शूरं त्यजामि वैधव्यादुदारं लज्जया पुनः ॥
सापत्न्यात्पण्डितमपि तस्मात्कृपणमाश्रये ॥ ३ ॥

ये वदन्ति चपलेत्यपवादं नैव दूषणमिदं कमलायाः ॥
दूषणं जलनिधेर्हि भवेत्तद्यत्पुराणपुरुषाय ददौ ताम् ॥ ४ ॥

गुणिनं जनमालोक्य निजवन्धनशङ्कया ॥
राजल्लक्ष्मीः कुरङ्गीव दूरंदूरं पलायते ॥ ५

पद्मे मूढजने ददासि द्रविणं विद्वत्सु किं मत्सरो
नाऽहं मत्सरिणी न चाऽपि चपला नैवाऽस्ति मूर्खे रतिः ॥
मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां
विद्वान्सर्वजनेषु पूजिततनुर्मूर्खस्य नाऽन्या गतिः ॥ ६ ॥

रत्नाकरस्तव पिता कमले निवासो
भ्राता सुधामयतनुः पतिरादिदेवः
केनाऽपरेण कमले वत शिक्षितानि
सारङ्गभृङ्गकुटिलानि विचेष्टितानि ॥ ७ ॥

उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ॥
शूरं कृतज्ञं-दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ ८॥

अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् ॥
प्रमदा पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुम् ॥ ९ ॥

---

१ सर्पः २ शरीरम् ३ शय्यायाम् ४ प्रियः ५ लक्ष्म्याः ६ नारायणाय पक्षे वृद्धाय. ७ मृगीव. ८ चन्द्रः ९ नारायणः १० अनुद्योगिनम् ११ नियतिपरम् १२ तरुणस्त्री

आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम्[1] ॥
संतोषो भीरुत्वं षड्व्याघाता महत्त्वस्य ॥ १० ॥
मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मास्मभू-
र्भोगेभ्यः स्पृहयालवो नहि वयं का निस्पृहाणामसि ॥
सद्यश्शूतपलाशपत्रपुटके पात्रे पवित्रीकृते
भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं[2] समीहामहे[3] ॥ ११ ॥
लक्ष्मीर्यादोनिधेर्[4]यादो[5] नाऽदो वादोचितं वचः ॥
बिभेति या धीवरेभ्यो[6] जडेष्वेव[7] निमज्जति ॥ १२ ॥
हालाहलो[8] नैव विषं विषं रमा जनाः परं व्यत्यय[9]मत्र मन्वते ॥
निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः ॥
हन्तुर्बन्धुजनान्धनार्थमनघान्[10]गन्तुः परस्त्रीशतं
रन्तुर्जन्तुविहिंसकैः[11] सहजनैः संतुष्यतो वञ्चनैः ॥
वक्तुस्तीक्ष्णमयुक्त[12]मेव वचनं पक्तु[13]र्मितं चौदनं
नित्यं नृत्यसि मन्दिरेषु कमले कृत्यं[14] तवैतन्मतम् ॥ १४ ॥
पीतोऽगस्त्येन तात[15]श्चरणतलहतो वल्लभोऽन्येन[16] रोषा-
दाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी[17] मे ॥
गेहं[18] मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं
तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥ १५ ॥
यत्राऽभ्यागतदानमानचरणप्रक्षालनं भोजनं
सत्सेवापितृदेवताऽर्चनाविधिः सत्यं गवां पालनम् ॥
धान्यानामपि संग्रहो न कलहश्चित्ताऽनुरूपा प्रिया
दृष्ट्वा प्राह हरिं वसामि कमला तस्मिन् गृहे निश्चला १६

१ स्वदेशलोभः २ उपजीवनम् ३ वाञ्छामहे. ४ समुद्रस्य. ५ जलजन्तुः ६ कैवर्तेभ्यः पक्षे बुद्धिश्रेष्ठेभ्यः ७ मूर्खेषु पक्षे डलयोः सावर्ण्यात् जलेषु उदकेषु. ८ विषभेदः ९ विपरीतभावम् १० निष्पापान्. ११ प्राणिविघातकैः १२ अयोग्यम्. १३ मितंपच. दरिद्रमिति यावत्. १४ किंप्रकारकम्. १५ समुद्रः १६ भृगुणा १७ सरस्वती १८ कमलम्.

येषामन्यकलत्रदर्शनकलाव्युत्पत्तिशून्ये दृशौ
मूढं हृच्च परार्थचिन्तनविधौ मिथ्याऽनभिज्ञं मुखम् ॥
अप्रज्ञातपशून् बुभुक्षितशिशूनप्रोदकैस्ताम्यत-
स्तेषां लक्ष्मि गृहान् दृशाऽपि भयभीतेवेह नो वीक्षसे १७
कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र ॥
प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥ १८ ॥
या स्वसद्मानि पद्मेऽपि सन्ध्याऽवधि[2] विजृम्भते[3] ॥
इन्दिरा[4] मन्दिरेऽन्येषां कथं स्थास्यति निश्चला[5] ॥ १९ ॥
आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां
मूकत्वं मितभाषितां वितनुते मौग्ध्यं भवेदार्जवम् ॥
पात्रापात्रविचारभारविरहो यच्छत्युदारात्मतां
मातर्लक्ष्मि तव प्रसादवशतो दोषा अपि स्युर्गुणाः॥२०॥
कृष्णः क्रीडितवान् गोभिरिति गोतुल्यबुद्धिषु ॥
पक्षपातवती लक्ष्मीरहो देवी पतिव्रता ॥ २१ ॥

## सत्संगतिः।

श्रीः ॥ जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति[6] पापमपाकरोति ॥
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्संगतिः कथय किं न करोति पुंसाम् ॥ १ ॥
असज्जनः सज्जनसङ्गिसङ्गात्करोति दुःसाध्यमपीह साध्यम् ॥
पुष्पाश्रयाच्छंभुशिरोऽधिरूढा पिपीलिका चुम्बति चन्द्रबिम्बम्॥२॥
वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ॥
नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम्॥३॥

---

१ स्त्री. २ संध्याकालपर्यन्तम् ३ विराजते ४ लक्ष्मीः ५ स्थिरा ६ मान्यम् ७ ददाति ८ निराकरोति ९ विस्तारयति.

गङ्गेवाऽघविनाशिनी जनमनःसंतोपसच्चन्द्रिका
तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानाऽन्धकाराऽपहा ॥
छायेवाऽखिलतापनाशनकरी स्वर्धेनुवत्कामदा
पुण्यैरेव हि लभ्यते सुकृतिभिः सत्सङ्गतिर्दुर्लभा ॥ ४ ॥

काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः ॥
तथा सत्सन्निधानेन मूर्खो याति प्रवीणताम् ॥ ५ ॥

कीटोऽपि सुमनःसंगादारोहति सतां शिरः
अश्माऽपि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ६ ॥

कल्पद्रुमः कल्पितमेव सूते सा कामधुक्कामितमेव दोग्धि ॥
चिन्तामणिश्चिन्तितमेव दत्ते सतां हि सङ्गः सकलं प्रसूते ॥

यथोदयगिरौ द्रव्यं संन्निकर्षेण दीप्यते ॥
तथा सत्सन्निधानेन हीनवर्णोऽपि दीप्यते ॥ ८ ॥

महाऽनुभावसंसर्गः कस्य नोन्नतिकारकः ॥
रथ्याऽम्बुजान्हवीसङ्गात्त्रिदशैरपि वन्द्यते ॥ ९ ॥

गवाशनानां स शृणोति वाक्यमहं हि राजन् पठितं मुनीनाम् ॥
न तस्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्ति॥१०॥

न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह ॥
पयोऽपि शौण्डिनीहस्ते मदिरां मन्यते जनः ॥ ११ ॥

वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियः ॥
पित्रत्यनार्यसंयोगाद्रक्तं नक्तञ्चरो यथा ॥ १२ ॥

महाजनस्य संसर्गः कस्य नोन्नतिकारकः ॥
पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ १३ ॥

---

१ मरकतः 'पाच' इति लोके तत्सम्बन्धिनीः २ पाषाणः ३ कल्पवृक्षः ४ कामधेनुः ५ उदयपर्वते ६ सूर्यसन्निधानेन. ७ प्रकाशितो भवति ८ देवैः ९यवनानां यवनगृहस्थितं सहोदर शुकमुद्दिश्य मुनिगृहस्थितस्य शुकस्योक्तिरियम् १० मद्यविक्रयकर्त्री. ११ मद्यम्

## नम्रत्वप्रशंसा ।

श्रीः ॥ सद्वंशजत्वं साद्गुण्यं शूरहस्तगतापि च ॥
पुरुषस्य च चापत्वं नम्रत्वादेव लक्ष्यते ॥ १ ॥
महान्त एव नम्रत्वं समृद्ध्या यान्ति नाल्पकाः ॥
दृष्टमाम्रादिषु स्पष्टं बर्बुरादिषु च क्रमात् ॥ २ ॥
नत्या व्याघ्रोऽपि वशतामेतीति सुजना जगुः ॥
अतः सैवातियत्नेन साध्या पुरुषपुङ्गवैः ॥ ३ ॥
रूपं विद्या धनं धर्मोऽप्यफलः स्याद्विना तु यम् ॥
विनयोऽसौ न कैर्वात्र संपाद्यः स्याद्धितैषुभिः ॥ ४ ॥
तारुण्यारोपितगुणे सुन्दरीभ्रूशरासने ॥
नम्रत्वमेव संपाद्य जगज्जयति मन्मथः ॥ ५ ॥

## शान्तिस्तुतिः ।

श्रीः ॥ शमकल्पद्रुमस्यैव फलान्येतानि यद्धरा ॥
मृद्रूपाप्यभवत्पत्नी नूनं लक्ष्मीपतेरपि ॥ १ ॥
दुःखलेशोदयोपि क्व लसतां शान्तिकान्तया ॥
न हि भाति शरत्पूर्णचन्द्रे दाहकता क्वचित् ॥ २ ॥
शाखीन्द्रानखिलान् हित्वा रामेणापि पुरा शमी ॥
शाखीश्वरोऽर्चितो लङ्कापुरादिविजयार्थिना ॥ ३ ॥
गुणकोटियुतोप्यत्र न विभाति शमं विना ॥
नरो राजकरस्थोपि यथेष्वासः शरं विना ॥ ४ ॥
शान्तिचिन्तामणिस्तक्कु यस्य हृद्यस्ति सर्वदा ॥
स सर्वपुरुषार्थश्रीवरणीयो न किं भवेत् ॥ ५ ॥

## स्वधर्मप्रशंसा ।

श्रीः ॥ पूर्णेन्दुकीर्तिकौमुद्याः सुखस्पर्शः सुधाम्बुधेः ॥
ज्ञानोद्यानस्य सुरभिर्धर्म एव न चेतरः ॥ १ ॥

विधातृत्वादिपदमप्याप्यते निजभर्गतः ॥
एतं चिन्तामणिं हित्वा धनायाटन्ति तान्युगः ॥ २ ॥
सदाचारवतां पुंसां तपःसिद्धिः पदेपदे ॥
यथा मानसहंसानां प्रफुल्ला हेमपद्मिनी ॥ ३ ॥
स्वधर्म एव कर्तव्यः प्राणान्तेऽपि नरैः सदा ॥
पुमर्थानर्घ्यरत्नानां स एव यत आकरः ॥ ४ ॥
स्वकर्मनिरतं नित्यं स्तुवन्त्यपि दिवौकसः ॥
तद्विहाय हितार्थ्यन्यत्को वा नरगरश्चरेत् ॥ ५ ॥

## भक्तिप्रशंसा ।

श्रीः॥ विमुक्तानां तु दूत्येका भक्तिरेव विराजते ॥
सेवादौ दृढमाराध्या ततस्तत्प्रतिलालनैः ॥ १ ॥
भक्तिसौभाग्ययोगेन भगवानपि भृत्यताम् ॥
प्रयाति का कथान्यार्थस्वार्थानां स्वहितार्थिनः ॥ २ ॥
अहो भक्त्या कङ्करोपि पुरान्तकसरूपताम्॥
पुरावाणेति सा कस्मान्न कार्यानन्दलिप्सुभिः ॥ ३ ॥
मूढभक्त्यवभासेन पशवोप्यापुरीश्वरम् ॥
तस्माद्विजायते सैव तरी संसारवारिधेः ॥ ४ ॥
रतिं दिशति या पुंसि जीवन्मुक्त्या सह स्फुटम् ॥
प्रस्वेदप्रमुखैर्लिङ्गैस्तस्यै भक्त्यै नमोनमः ॥ ५ ॥

## स्थानमाहात्म्यम् ।

श्रीः ॥ नक्रः[1] स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ॥
स एव प्रच्युतः स्थानाच्छुनाऽपि परिभूयते ॥ १ ॥
स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि शूरः ॥
जानामि नागेन्द्र तव प्रभावं कण्ठं विना गर्जसि शंकरस्य॥ २ ॥

१ मकरः 'मगर' इति लो० २ मपकेण

किंचिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि ॥
कान्ताविलोचने न्यस्तं मलीमसमिवाऽञ्जनम् ॥ ३ ॥

गुणैः [1]सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः
अनर्घ्यमपि माणिक्यं हेमाऽऽश्रयमपेक्षते ॥ ४ ॥

कुस्थानस्य प्रवेशेन गुणवानपि पीड्यते ॥
वैश्वानरोऽपि लोहस्थः [2]कारुकैरभिहन्यते ॥ ५ ॥

आश्रयवशेन सततं गुरुता लघुता च जायते पुंसाम् ॥
[3]विन्ध्ये विन्ध्यसमानाः करिणो वत दर्पणे लघवः ॥

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ॥
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ ७ ॥

आसीत्पूर्वं विमलजलधौ [4]मण्डनं भूपतीनां
नारीणां च प्रवलमुकुटे काञ्चनेन प्रसङ्गात् ॥
तन्त्रीवद्धः कथमिदमहो [5]काचखण्डेन [6]सार्धं
झिल्लीकण्ठे मरकतमणे कामवस्थां गतोऽसि ॥ ८ ॥

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति [7]शिल्पमाधातुः ॥
जलमिव समुद्रशुक्तौ [8]मुक्ताफलतां [9]पयोदस्य ॥ ९ ॥

## जिह्वा ।

श्रीः ॥ हे जिह्वे [10]रससारज्ञे सर्वदा मधुरप्रिये ॥
भगवन्नामपीयूषं पिव त्वमनिशं सखे ॥ १ ॥

[11]अङ्गेषु [12]मुख्या [13]द्विजमध्यसंस्था [14]वाणोऽनुसन्धानपराऽसि नित्यम् ॥
[15]अन्धस्थिरप्रेमरसा रसज्ञे [16]नरस्तुतिं तत्यज[17]कर्णवत्त्वम् ॥ २ ॥

---

१ शिवतुल्यः २ लोहकारैः ३ विन्ध्यपर्वते ४ भूषणम् ५ काचमणिन ६ सह ७ कौशलम् ८ मौक्तिकत्वम् ९ मेघस्य १० रसस्यसारं जानाति सा ११ शरीरावयवेषु पक्षे देशेषु. १२ मुखे भवा मुख्या. १३ दन्ताः ब्राह्मणाश्च. १४ वाण वर्णन तदनुसन्धानपरा पक्षे वत्रयोः सावर्ण्यात् वाणानुसन्धानपरः १५ अन्धः अन्नं तस्मिन् स्थिरः प्रेमरसो यस्याः पक्षे. अधो धृतराष्ट्रस्तस्मिन् दृढः प्रेमरसो यस्य. १६ मनुजस्तुतिं पक्षे नरोर्जुनः १७ अङ्गपजवर्. कर्णपक्षे अङ्गेषु मुख्य इत्यादिलिङ्गविपरिणामेन योजनीयम्.

स्नेने रचितोऽयमञ्जलिस्ते परनिन्दापरुषैरलं वचोभिः ॥
नरकाऽपहरं नमः शिवायेत्यमुमादिप्रणवं भजस्व मन्त्रम् ॥ ४ ॥

द्वात्रिंशद्दशनद्वेपिमध्ये भ्रमसि नित्यशः ॥
तदिदं शिक्षिता केन जिह्वे संचारकौशलम् ॥ ५ ॥

## मनः ।

श्रीः ॥ रेरे मनो मम मनोभवशासनस्य
पादाम्बुजद्वयमनारतमानमत्वम् ॥
किं मा निपातयसि संसृतिकूपमध्ये
तेनैव किं तव गमिष्यति पुत्रशोकः ॥ १ ॥

रे चित्त चिन्तय चिरं चरणौ मुरारेः
पारं गमिष्यति भवान् भवसागरस्य ॥
पुत्रः कलत्रमितरे सुहृदः सहायाः
सर्वं विलोकय सखे मृगतृष्णिकेव ॥ २ ॥

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः
तत्तु तत्रैवाऽरमत हताः पाणिनिना वयम् ॥ ३ ॥

कृष्ण त्वदीयपदपङ्कजपञ्जरान्ते
अद्यैव मे विशतु मानसराजहंसः ॥
प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ४ ॥

मनसैव कृतं पापं न शरीरकृतं कृतम् ॥
येनैवाऽऽलिङ्गिता कान्ता तेनैवाऽऽलिङ्गिता सुता ॥ ५ ॥

मनोऽपि मान्तं भज तद्धनन्तं यथाऽर्हितं चक्रेण महीहि ॥
सैहि स्वयं सान्त इति प्रशस्तं धत्ते तथाऽनन्तपदाऽनन्तपदाई ॥

---

१ जिह्वे. २ आगे मनः [illegible] ३ [illegible] ४ [illegible] शिवस्य ५ तवन् ६ [illegible] ७ [illegible]
[illegible] ८ [illegible] ९ [illegible] १० [illegible] ११ [illegible] [illegible]
[illegible]
[illegible] धत्ते.

इतस्ततश्चङ्क्रमणो रजोभिः क्रीडन्मनोमत्तमतङ्गजोऽयम् ॥
यः सर्वदा पिप्पलभोगतुष्टस्तच्छान्तये त्वं हरिमाश्रयस्व ॥ ७ ॥

भिक्षाऽशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ॥
वस्त्रं सुजीर्णशतखण्डमयी च कन्था
हाहा तथाऽपि विषयान्न जहाति चेतः ॥ ८ ॥

परिभ्रमसि किं वृथा क्वचन चित्त विश्राम्यतां
स्वयं भवति यद्यथा भवति तत्तथा नान्यथा ॥
अतीतमपि न स्मरन्नपि च भावि संकल्पय-
न्नतर्कितगमाऽऽगमाननुभवस्व भोगानिह ॥ ९ ॥

अग्रे गीतं सरसकवयः पार्श्वयोर्दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ॥
यद्यस्त्येवं कुरु भवरसाऽऽस्वादने लम्पटत्वं
नोचेच्चेतः प्रविश सहसाऽऽनिर्विकल्पे समाधौ ॥ १० ॥

एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रय-
श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ॥
स्वात्मीभावमुपैहि संत्यज निजां कल्लोललोलां गतिं
मा भूयो भज भङ्गुरां नवरतिं चेतः प्रसीदाऽधुना ॥ ११ ॥

पतितः पशुरपि कूपे निःसर्तुं चरण चालनं कुरुते ॥
धिक् त्वां चित्त भवाब्धेरिच्छामपि नो बिभर्षि निःसर्तुम् १२

हसति कदाचिद्रौति भ्रान्त्वं सदृशादिशः परिभ्रमति ॥
हृष्टं कदापि दुष्टं शिष्टं दुष्टं च निन्दति स्तौति ॥ १ ॥
कमपि द्वेष्टि सरोषं ह्याऽत्मानं श्लाघते कदाचिदपि ॥
चित्तं पिशाचमभवद्राक्षस्या तृष्णया व्याप्तम् ॥ २ ॥

---

१ तुच्छाः २ गतम् ३ अचिन्त्यगमनागमनान्. ४ विषयान् ५ लुब्धत्वम् ६ कल्याणपद्धतिम् ७ स्वसंवेद्यत्वम् ८ कल्लोलवत्चञ्चलाम् ९ नश्वराम् १० त्वाम्

दम्भाभिमानलोभैः कामक्रोधोरुमत्सरैश्चेतः ॥
आकृष्यते समभितः श्वभिरिव पतितातनुर्मार्गे ॥ ३ ॥
तस्माच्छुद्धविरागो मनोऽभिलषितं त्यजेदर्थम् ॥
तदनभिलषितं कुर्यान्निर्व्यापारं तदा भवति ॥ ४ ॥
प्रतिपलमखिलाँल्लोकान् मृत्युमुखं प्रविशतो निरीक्ष्यापि ॥
हा हतकं चित्तमिदं विरमति नाद्यापि विषयेभ्यः ॥५॥

## भोगाद्यस्थिरत्वम् ।

श्रीः ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
माने दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम् ॥
शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तुभयाऽन्वितं भुवि नृणां वैराग्यमेवाऽभयम् ॥१॥
आक्रान्तं मरणेन जन्म जरया यात्युत्[1]वणं यौवनं
संतोषो धनलिप्सया शमसुखं[2] प्रौढाङ्गनाविभ्रमैः[3] ॥
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विपत्तयोऽप्युपहता ग्रस्त न कि केन वा ॥ २ ॥
आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव ह्यापदः[4] ॥
जातं जातमवश्यमाशु विवशं[5] मृत्युः[6] करोत्यात्मसा-[7]
त्तत्किं केन निरङ्कुशेन[8] विधिना यन्निर्मितं सुस्थिरम् ॥३॥
भोगास्तुङ्गतरङ्गभङ्गचपलाः[9] प्राणाः क्षणध्वंसिनः
[10]स्तोकान्येव दिनानि यौवनसुखं स्फूर्तिः क्रियासु स्थिता ॥
तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका
लोकाऽनुग्रहपेशलेन[11] मनसा यत्नः समाधीयताम् ॥ ४ ॥

---

१ उच्छ्रितम् २ शान्तिसुखम् ३ विलासैः ४ प्रकृत्या आपदो विपत्तयः ५ पराधीनम् ६ काल ७ आत्माधीनम् ८ स्वतन्त्रेण ९ तुङ्गाः उच्चा ये तरङ्गा ऊर्मयस्तेषां भङ्गस्तद्वच्चपलाः १० अल्पानि. ११ मृदुलेन.

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताऽभ्रपटलीलीनाम्बुवद्भङ्गुरम् ॥
लोलायौवनलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ ५ ॥
आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा[1] घनसमयतडिद्विभ्रमा[2] भोगपूराः ॥
कण्ठाऽऽश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः[3] प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाऽम्भोधिपारं तरीतुम् ॥ ६ ॥
कृच्छ्रेणाऽमेध्यमध्ये निपतिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरसमये यौवने चोपभोगः ॥
वामाक्षीणामवज्ञा[4]विहसितवसतिर्वृद्धभावोऽप्यसाधुः ॥
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ ७ ॥
भोगा भङ्गुरवृत्तयो[5] बहुविधास्तैरेव चाऽयं भवं[6]
स्तत्कस्येह कृते परिभ्रमत हे लोकाः कृतं चेष्टितैः[7] ॥
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोत्पत्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः[8] ॥ ८ ॥

## पश्चात्तापः ।

श्रीः ॥ विद्या नाऽधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषाऽपि समाहितेन[10] मनसा पित्रोर्न[11] संपादिता[9] ॥
आलोलायतलोचना युवतयः स्वप्नेऽपि नाऽऽलिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेषितः ॥ १ ॥

---

१ संकल्पतुल्याः २ वर्षाकालविद्युद्विलासाः अतिचञ्चला इत्यर्थः ३ कान्ताभिः ४ अवमानः ५ भङ्गशीलाः ६ संसारः ७ चेष्टितैर्व्यापारैः कृतं अलं पर्याप्तमिति यावत् व्यापारं मा कुरुतेत्यर्थः ८ विश्वसनीयम्. ९ संपादिता १० स्वस्थेन ११ माता च पिता च पितरौ तयोः

ब्रह्मज्ञानविवेकनिर्मलधियः[1] कुर्वन्त्यहो दुष्करं[2]
यन्मुञ्चन्त्युपभोगवन्ति च धनान्यैकान्ततो[3] निःस्पृहाः[4] ॥
न प्राप्तानि पुरा न संप्रति न च प्राप्तो दृढप्रत्ययो[5] ॥
वाञ्छामात्रपरिग्रहाण्यपि[6] परित्यक्तुं न शक्ता वयम् ॥ २ ॥
अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौवनं
आयुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवितम् ॥
धर्मं यो न करोति निश्चलमतिः स्वर्गाऽर्गलोद्घाटनं[7]
पश्चात्तापयुतो जरापरिगतः[8] शोकाऽग्निना दह्यते ॥ ५ ॥
धनवानिति हि मदो मे किं गतविभवो विषादमुपयामि[9] ॥
करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ ६ ॥
नाऽभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं[10] न नीतं यशः ॥
कान्ताकोमलपल्लवाऽधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्याऽऽलये दीपवत् ॥ ७ ॥
न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये[11]
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ॥
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नाऽऽलिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा[12] वयम् ॥ ८ ॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ॥
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ ९ ॥

---

१ ब्रह्मज्ञानविचारेण शुद्धान्तःकरणाः २ दुःखेन कर्तुमशक्यम् ३ स्वभावतः नैरन्तर्येणेति वा ४ निरिच्छाः ५ विश्वासः ६ केवलं इच्छया गृहीतानि. ७ 'अडसर' इति लोके. ८ जरया वार्धक्येन परिभूतः ९ खेदम् १० स्वर्गम् ११ छेदनाय. १२ परश्वधाः

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ॥
जराजीर्णैरङ्गैर्नट इव वली[1]मण्डिततनु-
र्नरः संसाराऽन्ते विशति यम[2]धानीं यवनिकाम्[3] ॥ १० ॥
चिरं ध्याता रामो[5] क्षणमपि न रामप्रैतिकृतिः
परं पीतो रामा[4]ऽधर इह न रामाऽङ्घ्रिसलिलम्[6] ॥
नता रुष्टा रामा यदरचि न रामाय विनति[7]-
र्गतं मे साम्राज्यं[8] न दशरथजन्मा[9] परिगतः ॥ ११ ॥
जन्मेदं व्यर्थतां[10] नीतं भवभोगोपलिप्सया ॥
काच[11]मूल्येन विक्रीतो हन्त[12] चिन्तामणि[13]र्मया ॥ १२ ॥

## गृहस्थाश्रमः ।

श्रीः ॥ सानन्दं सदनं[14] सुताश्च सुधियः कान्ता न दुर्भाषिणी
सन्मित्रं सधनं स्वयोषिति रतिश्चाऽऽज्ञापराः सेवकाः ॥
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः संगमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ १ ॥
मानुष्यं वरवंशजन्म[15]विभवो[16] दीर्घायुरारोग्यता
सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे ॥
विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रति-
स्ते पुण्येन विना त्रयोदशगुणाः संसारिणां दुर्लभाः ॥ २ ॥
क्रोशान्तः शिशवः सवारि[17] सदनं पङ्काऽऽवृतं चाऽङ्गणं
शय्या दंशवती[18] च रूक्ष[19]मशनं धूमेन पूर्णं गृहम् ॥

---

१ वलीभिर्मण्डिता तनुर्यस्य. २ कृतान्तनगरीम् ३ 'पडदा' इति लो० ४ स्त्री. ५ राममूर्तिः ६ रामपादोदकम् ७ नमस्कारः ८ सार्वभौमत्वम् ९ दशरथाज्जन्म यस्य सः रामः १० निष्फलत्वम् ११ काचमणेर्मूल्येन १२ हन्त इति खेदे. १३ रत्नविशेषः स हि चिन्तितमर्थं ददाति इति प्रसिद्धिः १४ गृहम् १५ उत्तमकुले उत्पत्तिः १६ ऐश्वर्यम् १७ उदकपूर्णम्. १८ मशकपूर्णा. १९ अस्निग्धम्

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ॥
जराजीर्णैरङ्गैर्नट इव वली[1]मण्डिततनु-
नरः संसाराऽन्ते विशति यमधानी[2]यवनिकाम्[3] ॥ १० ॥
चिरं ध्याता रामा[4] क्षणमपि न रामप्रतिकृतिः[5]
परं पीतो रामाऽधर इह न रामाऽङ्घ्रिसलिलम्[6] ॥
नता रुष्टा रामा यदरचि न रामाय विनति[7]-
गतं मे साम्राज्यं[8] न दशरथजन्मा[9] परिगतः ॥ ११ ॥
जन्मेदं व्यर्थतां[10] नीतं भवभोगोपलिप्सया ॥
काचमूल्येन[11] विक्रीतो हन्त[12] चिन्तामणि[13]र्मया ॥ १२ ॥

## गृहस्थाश्रमः ।

श्रीः ॥ सानन्दं सदनं[14] सुताश्च सुधियः कान्ता न दुर्भाषिणी
सन्मित्रं सुधनं स्वयोषिति रतिश्चाऽऽज्ञापराः सेवकाः ॥
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः संगमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ १ ॥
मानुष्यं वरवंशजन्म[15]विभवो[16] दीर्घायुरारोग्यता
सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे ॥
विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रति-
स्ते पुण्येन विना त्रयोदशगुणाः संसारिणां दुर्लभाः ॥ २ ॥
क्रोशान्तः शिशवः सवारि[17] सदनं पङ्काऽऽवृतं चाऽङ्गणं
शय्या दंशवती[18] च रूक्ष[19]मशनं धूमेन पूर्णं गृहम् ॥

१ वलीभिर्मण्डिता तनुर्यस्य. २ कृतान्तनगरीम् ३ 'पडदा' इति लो० ४ स्त्री. ५ राममूर्तिः ६ रामपादोदकम् ७ नमस्कारः ८ सार्वभौमत्वम् ९ दशरथाज्जन्म यस्य सः रामः १० निष्फलत्वम् ११ काचमणेर्मूल्येन १२ हन्त इति खेदे. १३ रत्नविशेषः स हि चिन्तितमर्थं ददाति इति प्रसिद्धिः १४ गृहम् १५ उत्तमकुले उत्पत्तिः १६ ऐश्वर्यम् १७ उदकपूर्णम्. १८ मशकपूर्णा. १९ अस्निग्धम्

भार्या निष्ठुरभाषिणी[१] प्रभुरपि क्रोधेन पूर्णः सदा
स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम्॥३॥
न्यायाऽर्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः॥[२]
शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते[३]॥ ४ ॥
सविप्रपादोदककर्दमानि सवेदशास्त्रध्वनिगर्जितानि ॥
स्वाहास्वधाकारनिरन्तराणि स्वानन्दतुल्यानि गृहाणि तानि॥५॥
न विप्रपादोदकपङ्किलानि न वेदशास्त्रध्वनिगर्जितानि
स्वाहास्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि॥६॥
यदि रामा[५] यदि च रमा[६] यदि तनयो विनयगुणोपेतः॥
तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम्॥ ७ ॥
वंशो विश्वाऽवतंसो[७] जनुरनुपहतं स्वान्तमौन्नत्यकान्तं
लीला शीलानुकूला क्षपितकलिमला काऽपि विद्याऽनवद्या[९]॥
वाणी वेणी[१०]गुणानां समधिकयशसां सौधिका[११] साधिका श्रीः
श्रीमद्गौरीमयूरीमुदिर[१२] पुरहर[१३] त्वत्कृपाया विपाकः[१४]॥ ८ ॥
तावद्विद्याऽनवद्या गुणगणमहिमा रूपसंपत्तिशौर्यं
स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव ॥
यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषिताऽपत्यवक्त्रात्
हेबाबा[१५] नाऽस्तितैलं नच लवणमपीत्यादि वाचां प्रचारः॥९॥

## जरा।

श्रीः॥ कृतान्तस्य दूती जरा कर्णमूले
समागत्य वक्तीति लोकाः शृणुध्वम् ॥

---

१ कठोरभाषिणी. २ न्यायेन संपादितं धनं येन ३ मुक्तो भवति ४ ब्राह्मणचरणक्षालनोदकेन पङ्किलानि. ५ स्त्री ६ लक्ष्मीः ७ विश्वभूषणम् ८ मनः ९ निर्दोषा १० प्रवाहः ११ साधैथित्री. १२ गौर्येव मयूरी तस्याः मुदिरो मेघः १३ हे त्रिपुरनाशक १४ परिणाम फलमित्यर्थः १५ 'हेबाबा' इदं तु पितुर्लौकिकं संबोधनम्

परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं
भजध्वं रमानाथपादाऽरविन्दम् ॥ १ ॥

कृष्णवर्त्मनि[1] गुणान् गणयन्ती जीवनेऽपि[2] जनयत्यनुरागम् ॥
आगता बत जरेव हिमानी[3] सेव्यतां सुरैतरङ्गवतीयम्[4] ॥ २ ॥

शशिनीव हिमार्तानां घर्मार्तानां यथा रवौ ॥
मनो न रमते स्त्रीणां जरापीतेन्द्रिये[5] पतौ ॥ ३ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती[6]
रोगाश्च शत्रव इव प्रहरन्ति देहम् ॥
आयुः परिस्रवति भिन्नघटादिवाऽम्भो
लोकस्तथाऽप्यहितमाचरतीति चित्रम् ॥ ४ ॥

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ॥
वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते[7] ॥ ५ ॥

वर्णं सितं वीक्ष्य शिरोरुहाणां[8]
स्थानं जरा परिभवस्य यदेव पुंसाम् ॥
आरोपिताऽस्थिशकलं[9] परिहृत्य[10] यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ ६ ॥

मलिनैरलकैरेतैः[11] शुक्लत्वं प्रकटीकृतम् ॥
तद्भोषादिव निर्याता वदनाद्दन्तावलिः[12] ॥ ७ ॥

---

१ अग्नौ पक्षे कृष्णस्य वर्त्म मार्गस्तस्मिन्. २ उदके प्राणे च. ३ हिमसंहतिः ४ सुरते रङ्गवती प० सुराणा तरङ्गवती भागीरथी ५ जरया पीतानि ग्रस्तानि इन्द्रियाणि यस्य तस्मिन्. ६ कम्पयन्ती ७ शत्रुवदाचरति. ८ केशानाम् ९ आरोपितं अस्थ्नः शकलखण्ड यस्मिन्. १० अस्पृश्यत्वादिति भावः ११ केशैः १२ दन्तपङ्क्तिः

यमामिव करधृतदण्डं हरिमिव सगदं[1] शशाङ्कमिव वक्रम् ॥
शिवामिव च विरूपाक्षं[2] जरा करोत्यकृतपुण्यमपि ॥ ८ ॥
श्रुतिः[3] शिथिलतां गता स्मृतिरपि[4] प्रणष्टाऽधुना
गतिर्विपथमागता विगलिता द्विजानां[5] ततिः ॥
गवामपि[6] च संहतिः समुचितक्रियातश्च्युता
कृतानुजरया तया कलियुगस्य साधर्म्यता[7] ॥ ९ ॥
वदनं दशनविहीनं[8] वाचो न परिस्फुटा गता शक्तिः ॥
अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥ १० ॥
पटुरटति पलितदूतो[9] मस्तकमासाद्य सर्वलोकस्य ॥
परिभवति जरामरणं कुरु धर्मं विरम पापेभ्यः ॥ ११ ॥
वृद्धत्वाँ[10]ऽनलदग्धस्य सारं यौवनवस्तुनः ॥
दृश्यते देहगेहेषु भस्मैव पलितच्छलात्[11] ॥ १२ ॥
वीक्ष्यते पलितश्रेणि[12]र्नैव वृद्धस्य मूर्धनि ॥
मृषैव[13] जातं जन्मेति किंतु भस्म वि[14]धिर्न्यधात्[15] ॥ १३ ॥
इयत्यामपि सामग्र्यां सुकृतं[16] न कृतं त्वया ॥
इतीव कुपितो दन्तानन्तकः[17] पातयत्यलम् ॥ १४ ॥
पादौ संस्तम्भयन्ती[18] मुखमपि नमयन्त्यङ्गमाकुञ्चयन्ती
हस्तावुत्कम्पयन्ती प्रणयिजनवचो न श्रुतीः श्रावयन्ती ॥
रत्यामुद्वेजयन्ती[19] वलिततनुमती[20] नूतनोढा[21] जरा वा
तुल्या पूर्वा[22] तु पुंसस्त्र[23]सति[24] बत परा[25] भीतिहेतुर्नरस्य[26] ॥ १५ ॥

---

१ गदया सहितं पक्षे गदेन रोगेण सह तम् २ विकृताक्षम् ३ कर्णेन्द्रियं वेदश्च. ४ स्मरणं मन्वादिवाक्यं च ५ दन्ताना ब्राह्मणाना च. ६ इन्द्रियाणा धेनूनां च. ७ समानधर्मत्वम् ८ दन्तरहितम् ९ पलितमेव दूतः १० वार्धक्यं तदेवानलस्तेन दग्धस्य ११ पलितमिषेण. १२ पलितपङ्क्तिः १३ व्यर्थमेव १४ ब्रह्मा १५ निक्षिप्तवान् १६ पुण्यम् १७ यमः १८ पादयोः स्तभनं कुर्वती. १९ उद्वेगं कुर्वती २० वलयः सजाता यस्याः सा वलिता सा चासौ तनुश्च तद्वती पक्षे वलितं वलनं तद्युक्तायास्तद्वती २१ नवीन विवाहिता स्त्री २२ नुतनोढा २३ पुरुषात् २४ उद्वेगं प्राप्नोति २५ जरा २६ भयकरणम्

दुर्नीतं किमिहाऽस्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ १ ॥
सा रम्या नगरी महान् स नृपतिः सामन्तचक्रं[1] च त-
त्पार्श्वे तस्य च सा विदग्धपरिषत्ता[2]श्चन्द्रबिम्बाऽऽननाः ॥
उन्मत्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः[3] कथाः
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ २ ॥

यत्राऽनेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राऽप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ॥
इत्थं चेमौ रजनिदिवसौ दोलयन् द्वाविवाऽक्षौ[4]
कालः काल्याभुवनफलके[5] क्रीडति प्राणिसारैः[6] ॥ ३ ॥
अशनं[7] मे वसनं[8] मे जाया मे बन्धुवर्गो मे ॥
इति मेमेकुर्वाणं कालवृको[9] हन्ति पुरुषाऽजम्[10] ॥ ४ ॥
ब्रह्मा विष्णुदिने याति विष्णू रुद्रस्य वासरे ॥
ईश्वरस्य तथा सोऽपि कः कालं लङ्घितुं क्षमः ॥ ५ ॥
अप्सु प्लवन्ते[11] पाषाणा मानुषा घ्नन्ति राक्षसान् ॥
कपयः कर्म कुर्वन्ति कालस्य कुटिला[12] गतिः ॥ ६ ॥

## क्षमा ।

श्रीः ॥ क्षमाशस्त्रं[13] करे यस्य दुर्जनः किं करिष्यति ॥
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ १ ॥
आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य[14] च ॥
सोढुं तयोर्मुखाऽऽक्षेपमलमेकैव सा क्षमा[15] ॥ २ ॥

---

१ माण्डलिकमण्डलम् २ चतुरसभा ३ स्तुतिपाठकाः ४ पाशौ ५ भुवनमेव फलकः शारीपटस्तस्मिन् ६ प्राणिन एव साराः 'सोंगठ्या' इति लो० तैः ७ भोजनम् ८ वस्त्रम् ९ काल एव वृकः 'लाडगा' इति लो० १० पुरुष एव अजः (बोकड) तम् ११ तरन्ति १२ वक्रा १३ शान्ति. १४ 'नांगर' इति लोके १५ पृथ्वी शान्तिश्च

नरस्याऽऽभरणं रूपं रूपस्याऽऽभरणं गुणः ॥
गुणस्याऽऽभरणं ज्ञानं ज्ञानस्याऽऽभरणं क्षमा ॥ ३ ॥
क्षमाबलमशक्तानां शक्तानां भूषणं क्षमा ॥
क्षमा वशीकृतिर्लोके क्षमया किं न सिध्यति ॥ ४ ॥

## क्रोधनिन्दा।

श्रीः ॥ क्रोधान्धकूपपतिताः खादन्ति स्ववपूंष्यपि ॥
हन्तातस्तं कथं त्यक्तुं विलम्बः क्रियतां बुधैः ॥ १ ॥
दुर्वासप्रभृतीनां च ब्रह्मतत्त्वविदामपि ॥
क्रोधस्यैव प्रसादेन नानाविपदभूत्खलु ॥ २ ॥
शरन्मध्यान्हकालेपि क्रोधान्धः स्वतनूमपि ॥
यन्न जानाति तत्रान्यज्ञानवार्तैव का भवेत् ॥ ३ ॥
किं कुम्भीपाक एवायं कोपरूपेण देहिनाम् ॥
त्रैलोक्येपि विपत्त्यर्थमवतीर्णो भवार्णवे ॥ ४ ॥
क्रोधमुग्धधियां नैव सुखं कालत्रयेपि च ॥
दृष्टं कदाप्युलूकानां क्रीडनं फुल्लपङ्कजे ॥ ५ ॥

## क्षुधा।

श्रीः ॥ आदौ रूपविनाशिनी कृशकरी कामाऽङ्कुरच्छेदिनी
पुत्राऽमित्र[1]कलत्र[2]भेदनकरी गर्वाङ्कुरच्छेदिनी ॥
कामं मन्दकरी तपःक्षयकरी धर्मस्य निर्मूलनी
सा मां संप्रति सर्वरोगजननी प्राणापहन्त्री क्षुधा ॥ १ ॥
शय्या वस्त्रं चन्दनं चारु[3] हास्यं वीणा वाणी दृश्यते या च नारी
न भ्राजन्ते क्षुत्पिपासातुराणां सर्वाऽऽरम्भास्तण्डुलाः प्रस्थमूलाः२
नाऽस्ति क्षुधासमं दुःखं नाऽस्ति रोगः क्षुधासमः ॥
नाऽस्त्याहारसमं सौख्यं नाऽस्ति क्रोधसमो रिपुः ॥ ३ ॥

---

१ शत्रुः २ कुटुम्बम् ३ सुन्दरम्

## स्वभावः ।

सर्वस्य हि परीक्ष्यन्ते स्वाभावा नेतरे गुणाः ॥
अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्तते ॥ १ ॥
न धर्मशास्त्रं पठतीति कारणं नचाऽपि वेदाऽध्ययनं दुरात्मनः ॥
स्वभाव एवाऽत्र तथाऽतिरिच्यते यथा प्रकृत्या मधुरं गवां पयः २
निम्नोन्नतं वक्ष्यति को जलानां विचित्रभावं मृगपक्षिणां च ॥
माधुर्यमिक्षौ कटुतां मरीचे स्वभावतः सर्वमिदं हि सिद्धम् ॥ ३ ॥
वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
न्मेरुः स्वल्पशिलायते मृगपतेः संघः कुरङ्गायते ॥
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याऽङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ ४ ॥

## जीवितसाफल्यम् ।

श्रीः ॥ यस्य जीवन्ति धर्मेण पुत्रमित्राणि बान्धवाः ॥
सफलं जीवितं तस्य नाऽत्मार्थे को हि जीवति ॥ १ ॥
वाणी रसवती यस्य भार्या पुत्रवती सती ॥
लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥ २ ॥

## दीपवर्णनम् ।

श्रीः ॥ रक्षपात्रगतं स्नेहं प्रदीपश्रीविवर्धनम् ॥
प्रयास्यन्ति विना तेन भस्मत्वं ये भवद्गुणाः ॥ १ ॥
रेरे दीप तिरस्कृताऽखिलतमःस्तोमाऽरिवर्गस्य ते
रात्रौ गूढनिजाङ्गघातिशलभाऽऽघातेन किं पौरुषम् ॥
तत्कर्माऽऽचर येन तावकयशो भूयात्प्रभाते पुन-
र्न स्नेहो न च सा दशा न हि परं ज्योतिः परं स्थास्यति २

१ अतिक्रम्य २ अतिक्रम्य वर्तते. ३ नीचोच्चम् ४ तीक्ष्णताम् ५ कृत्रिमसरिद्वदाचरति. ६ सर्पः ७ माला. ८ अमृतम् ९ विजृम्भते. १० शोभा ११ सूत्राणि १२ 'टोळ' इति लोके.

दीपोऽर्जुन इवाऽऽभाति पतङ्ग[1]जनितापदः ॥
किं च राम इवाऽऽभाति सं[2]मुच्छिन्नदशाननः ॥ ३ ॥

## व्यापारिणः ।

श्रीः ॥ आदौ सत्ययुगे बलिस्तदनु च त्रेतायुगे राघवो
रामः सत्यपराक्रमोऽथ भगवान् धर्मस्तथा द्वापरे ॥
दाता कोऽपि न चाऽस्ति संप्रति कलौ जीवन्ति केनाऽर्थिन
इत्येवं कृतनिश्चयेन विधिना व्यापारिणो निर्मिताः ॥१॥

## परोपकृतिः ।

श्रीः ॥ [3]नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे ॥
येषां गु[4]णमयं जन्म परेषां गुह्यगुप्तये ॥ १ ॥
परोपकारशून्यस्य धिङ् मनुष्यस्य जीवितम् ॥
यावन्तः पशवस्तेषां चर्माण्यपकरिष्यति ॥ २ ॥
धनानि जीवितं चैव पराऽर्थे प्राज्ञ उत्सृजेत् ॥
तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥ ३ ॥

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाऽम्बुभिर्भूरिविलम्बिनो घनाः ॥
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम्॥४॥
[5]श्रोत्रं [6]श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ॥
विभाति कायः खलु सज्जनानां परोपकारैर्न तु चन्दनेन ॥ ५ ॥

पद्मा[7]ऽऽकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कै[8]रवचक्रवालम् ॥

---

१ पतङ्गः शलभः त प्रति जनिता आपदा येन आप चैव हलन्ता-नामित्युक्तेटाप् पक्षे पतङ्. सूर्यस्तस्माज्जनिर्जन्म यस्य स कर्णस्त प्रति तापदः
२ समुच्छिन्नं दग्ध दशायाः वर्त्याः आनन येन पक्षे समुच्छिन्न उन्मूलितो दशाननो रावणो येन. ३ शुष्काणि ४ सूत्रमयम् ५ कर्णः ६ शास्त्रेण
७ कासारम् ८ कुमुदमण्डलम्

नाऽभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहितेषु कृताऽतियोगाः ॥ ६ ॥

तृणं चाऽहं वरं मन्ये नरादनुपकारिणः ॥
घासो भूत्वा पशून् पाति भीरून्[1] पाति रणाऽङ्गणे ॥ ७ ॥

परोपकृति[2]कैवल्ये[3] तोलयित्वा[4] जनार्दनः ॥
गुर्वी[5]मुपकृतिं मत्वा ह्यवतारान्[6] दशाऽग्रहीत्[7] ॥ ८ ॥

## ब्रह्मलिखितम् ।

श्रीः ॥ पत्रं नैव यदा करीर[8]विटपे दोषो वसन्तस्य किं
नोलूकेन[9] विलोक्यते यदि दिवा सूर्यस्य किं दूषणम् ॥
धारा नैव पतन्ति चातकमुखे मेघस्य कि दूषणं
यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं[10] कः क्षमः[11] ॥ १ ॥

यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना ॥
यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि ॥ २ ॥

इतरकर्मफलानि यदृच्छया[12] विलिखितानि सहे चतुरानन ॥
अरसिकेषु कवित्वनिवेदनं शिरसि मालिखमालिखमालिख ॥४॥

स हि गगन[13]विहारी कल्मष[14]ध्वंसकारी
दशशतकरधारी ज्योतिषां[15] मध्यचारी ॥
विधुरपि विधियोगाद्ग्रस्यते राहुणाऽसौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ ५ ॥

---

१ भीतान् भयशीलान् वा. २ परोपकारः ३ मोक्षः ४ उभयोस्तुलना कृत्वा. ५ भारवतीम् ६मत्स्यादीन् ७जग्राह. ८'नेपतीति' लोके. ९ दिवाभीतेन १० शोधयितुम् ११ समर्थः १२ स्वेच्छया १३ आकाशसचारी. १४अन्धकारनाशकर्ता १५ नक्षत्राणाम्

त्रिलोकेशः शार्ङ्गी शबर[2]शरलक्ष्यत्वमगम-
द्विधाता[3] लोकानामलभत शिरः[4]कृन्तनविधिम् ॥
प्रयातौ तौ राहोर्दिनकरशशाङ्कौ कवलतां
प्रभुर्नग्नः शम्भुः शिरसि लिखितं लङ्घयति कः ॥ ६ ॥
हरिणाऽपि हरेणाऽपि ब्रह्मणा त्रिदशैरपि[6] ॥
ललाटलिखिता रेखा न शक्या परिमार्जितुम् ॥ ७ ॥

## वेश्यागर्हणम्।

श्रीः ॥ वेश्याँऽसौ मदनज्वाला रूपेन्धनसमेधिता ॥
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १ ॥
कष्टं जीवति गणिका गणकोऽपि च राजसेवको वैद्यः ॥
दिवसेदिवसे मरणं परस्य यच्चित्तरञ्जनं वृत्तिः ॥ २ ॥
एता हसन्ति च रुदन्ति च वित्तहेतो-
र्विश्वासयन्ति पुरुषं न च विश्वसन्ति ॥
तस्मान्नरेण कुलशीलसमन्वितेन
वेश्याः श्मशानघटिका इव वर्जनीयाः ॥ ३ ॥
जात्यन्धाय[10] च दुर्मुखाय च जराजीर्णाऽखिलाऽङ्गाय च
ग्रामीणाय[11] च दुष्कुलाय च गलत्कुष्ठाऽभिभूताय च ॥
यच्छन्तीषु[12] मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया[13]
पण्यस्त्रीषु[14] विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ४ ॥

---

१ विष्णुः २ शवरो जरानामा भिल्लः प्रभासे परस्परं कलहेनाखिलयादवोपसंहारानन्तरमश्वत्थस्याधस्ताद्वामोरौ दक्षिणं पादं निधाय स्थिते भगवति जरानाम्ना भिल्लेन दूरतो भगवच्चरणं दृष्ट्वा मृगमुखभ्रमाद्भगवत्पादो बाणेन विद्ध इति भागवतम् ३ ब्रह्मा ४ शिरःकर्तनम् ५ मासताम् ६ देवैः ७ वराङ्गना. ८रूपमेवेन्धनं काष्ठं तेन सम्यक्प्रदीप्ता. ९श्मशानस्थिताघटिकाः घव्यो घटा इति यावत् एता यथा अस्पृश्यास्तथैव ता वर्जनीया इति भावः १० जन्मान्धाय ११माम्याय १२ अर्पयन्तीषु १३ लक्ष्मीलेशाशया.१४ गणिकासु

हारहीरकहिरण्यभूषणैस्तोषमेति गणिकार्थनैषिणी ॥
प्रेमकोमलकटाक्षवीक्षितैरेव जीवति कुलाऽङ्गनाजनः ॥ ५॥

तावत्कुलस्त्रीमर्यादा यावल्लज्जावगुण्ठनम् ॥
हृते तस्मिन् कुलस्त्रीभ्यो वरं वेश्याऽङ्गनाजनः ॥ ६ ॥

धनाऽऽशा कैतवस्नेहो वितर्थैश्चित्ततोषणम् ॥
एकमप्यस्ति नाऽस्मासु कथं वेश्यासमा वयम्॥ ७ ॥

## मद्यपानगर्हणम्।

श्रीः॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्यामुपैति ॥
पापं कृत्वा दुर्गतिं यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम्॥१॥

मत्तो हिनस्ति सर्वं मिथ्या प्रलपति हि विकलया बुद्ध्या ॥
मातरमपि कामयते साऽवज्ञं मद्यपानमत्तः सन् ॥ २ ॥

एकतश्चतुरो वेदा ब्रह्मचर्यं यथैकतः ॥
एकतः सर्वपापानि मद्यपानं तथैकतः ॥ ३ ॥

मद्यपस्य कुतः सत्यं दया मांसाऽशिनः कुतः
कामिनश्च कुतो विद्या निर्धनस्य कुतः क्रिया ॥ ४ ॥

वैकल्यं धरणीपातमयथोचितजल्पनम् ॥
संनिपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ ६ ॥

## अघटितघटना।

श्रीः ॥ अम्बुजमम्बुनि जातं नहि दृष्टं जातमम्बुजादम्बु ॥
अधुना तद्विपरीतं चरणसरोजाद्विनिर्गतागङ्गा ॥ १ ॥

जाता लता हि शैले जातु लतायां न जायते शैलः ॥
अधुना तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥ २ ॥

---

१ धनेच्छावती. २ लज्जया अवगुण्ठन संवरणम् 'घुंगट' इति लोके ३ कपटस्नेहः ४ असत्यगोष्ठीभिः ५ पापाचरणम् ६ नरकम् ७ नाशयति. ८ इच्छति. ९ विकलत्वम् १० अयुक्तप्रलापः ११ त्रिदोषस्य १२ लक्षणानि. १३ सुवर्णवल्ल्यां तत्तुल्यायामङ्गयष्ट्याम् १४ पर्वततुल्य स्तनद्वयमिति भावः

कमले कमलोत्पत्तिः श्रूयते न च दृश्यते ॥
बाले तव मुखाऽम्भोजे दृष्टमिन्दीवरद्वयम् ॥ ३ ॥
न केनाऽपि श्रुतं दृष्टं वारिणा वारि शुष्यति ॥
अहो गोदावरी वारौ भवसिन्धुर्विशुष्यति ॥ ४ ॥
मूकाऽरब्धं कमपि बधिराः श्लोकमाकर्णयन्ति
श्रद्धालु[3]स्तं विलिखति कुणिः[4] श्लाघया वीक्षतेऽन्धः ॥
अभ्यारोहत्यहह सहसा पङ्गुरप्यद्रिशृङ्गं[5]
सान्द्राऽऽलस्याः शिशुभरणतो मन्दमायान्ति वन्ध्याः ॥ ५ ॥
एष वन्ध्यासुतो याति ख[6]पुष्पकृतशेखरः ॥
मृग[7]तृष्णाऽम्भसि स्नातः श[8]शशृङ्गधनुर्धरः ॥ ६ ॥

## प्रवासः।

श्रीः ॥ अहो नु कष्टः सततं प्रवासस्ततोऽतिकष्टः पर[9]गेहवासः ॥
कष्टाऽधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ १ ॥
तीर्थानामवलोकनं परिचयः सर्वत्र वित्ताऽर्जनं
नानाऽऽश्चर्यनिरीक्षणं चतुरता बुद्धेः प्रशस्ता गिरः ॥
एते सन्ति गुणाः प्रवासविषये दोषोऽस्ति चैको महा-
न्यन्मुग्धामधुराऽधराऽधरसुधापानं विना स्थीयते ॥ २ ॥
देशेदेशे किमपि कुतुकाद[10]द्भुतं लोक[11]मानाः
संपाद्यैव [12]द्रविणम[13]तुलं स[14]द्म भू[15]योऽप्यवाऽऽप्य ॥
संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः सतीभिः
सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ॥ ३ ॥

---

१ इन्दीवरसदृश नेत्रयुगलम् २ उदकेन. ३ श्रद्धावान् ४ विकलपाणिः ५शिखरम् ६ खमाकाशं तस्य पुष्पेण कृतः शेखरः शिरोभूषण येन ७मरुमरीचिकोदके कृतमज्जनः ८ शशशृङ्गकृतधनुर्धारी. ९ परगृहवासः १० आश्चर्यम् ११ वीक्षमाणाः १२ द्रव्यम् १३ बहुलम् १४ गृहम् १५ पुनः

आकिञ्चन्यादतिपरिचयाज्जाययोपेक्ष्यमाणो[1]

भूपालानामननुसरणाद्विभ्यदेवाऽखिलेभ्यः[2]

गेहे तिष्ठन् कुमतिरलसः कूपकूर्मैः[3] सधर्मा

किं जानीते भुवनचरितं किं सुखं चोपभुङ्क्ते ॥ ४ ॥

व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् ॥

यो गृहेष्वेव निद्राति दरिद्राति[4] स दुर्मतिः ॥ ५ ॥

## व्याजनिन्दा ।

श्रीः ॥ यच्छ्वशुरोऽभूज्जनकः[5] पत्युर्द्धात्र्याश्च[6] तत्सुता जाया ॥

भ्राता भुजंगराजो[7] भक्ता मुक्त्यै भजन्ति तच्चित्रम् ॥ १ ॥

त्रिदोषशमनार्थाय[8] त्वयि भज्जन्ति मानवाः ॥

त्वं करोषि चतुर्दोषं[9] कथं गङ्गे न लज्जसि ॥ २ ॥

लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः

स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः ॥

एषाऽपि स्वगुणाऽनुरूपरमणाऽभावाद्वराकी हता

कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ॥ ३ ॥

इन्दोर्लक्ष्म[10] त्रिपुरजयिनः कण्ठमूलं मुरारि-

र्दिङ्नागानां[11] मदजलमषीभाञ्जि गण्डस्थलानि ॥

अद्याऽप्युर्वीवलयतिलक श्यामलिम्नाऽनुलिप्ता-[12]

न्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥ ४ ॥

सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे जनैः ॥

नाऽरयो[13] लेभिरे पृष्ठं न वक्षः[14] परयोषितः ॥ ५ ॥

---

१ दारिद्र्यात्. २ अवमानितः ३ सदृशः ४ दरिद्रो भवति. ५ पिता जनकराजश्च. ६ उपमातुः पृथ्व्याश्च. ७ शेषः जारश्च. ८ त्रयो दोषाः आध्यात्मिकाधिभौतिकाधिदैविकाः ९ चत्वारो दोषा यस्य तथाविध पक्षे चतुर्हस्त विष्णुसरूप करोषीत्यर्थः १० कलङ्कः ११ दिग्गजानाम्. १२ नीलिम्ना १३ वैरिणः १४ उरःस्थलम्

# सेवकनिन्दा।

श्रीः ॥ आहारे वैडवाऽनलश्च शयने यः कुम्भकर्णायते
संदेशे बधिरः पलायनविधौ सिंहः सृगालो रणे ॥
अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने
भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥ १ ॥
प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ॥
दुःखीयाति सुखहेतोः को मूढः सेवकादन्यः ॥ २ ॥
जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः ॥
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ ३ ॥
शिरसा धार्यमाणोऽपि सोमः सौम्येन शम्भुना ॥
तथाऽपि कृशतां धत्ते कष्टः खलु पराऽऽश्रयः ॥ ४ ॥
वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् ॥
पुंसां विवेकहीनानां सेवया न धनाऽर्जनम् ॥ ५ ॥
सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ॥
स्वाऽऽऽर्यत्तत्वं शरीरस्य मूढैस्तदपि हारितम् ॥ ६ ॥
सर्वः कल्पे वयसि यतते लब्धुमर्थान्कुटुम्बी
पश्चात् पुत्रैरुपहितभरः कल्पते विश्रमाय ॥
अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां
सेवाकाकुः परिणतिरभूत् स्त्रीषु कष्टोऽधिकारः ॥ ७ ॥
स्वाऽभिप्रायपरोक्षस्य परचित्ताऽनुवर्तिनः ॥
स्वयं विक्रीतदेहस्य सेवकस्य कुतः सुखम् ॥ ८ ॥
चलेषु स्वामिचित्तेषु सुलभे पिशुने जने ॥

---

१ वाडवाग्निः २ वार्ताहरणे ३ 'कोल्हा' इति लो० ४ पादविकलः ५ रोदने ६ भिक्षा ७ भारवाहकत्वेनोपजीवनम् ८ स्वाधीनत्वम् ९ नाशितम् १० प्रथमे ११ योग्यो भवति १२ सूचके

यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥ ९ ॥
सेवाश्ववृत्तिर्यैरुक्ता[1] न नैः सम्यगुदाहृतम् ॥
स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः[2] क्व सेवकः ॥१०॥
मौनान्मूकः प्रवचनपटुर्वातलो जल्पको[3] वा
धृष्टः[4] पार्श्वे वसति च सदा दूरतस्त्वप्रगल्भः[5] ॥
क्षान्त्या भीरुर्[6]यदि न सहते प्रायशो नाऽभिजातः[7]
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ११ ॥
द्वयं जहाति सेवकः सुखं च मानमेव च ॥
यदर्थमर्थमीहते[8] तदेव तस्य हीयते ॥ १२ ॥

## भिक्षुकगुणाः ।

श्रीः ॥ उच्चैरध्ययनं[9] पुरातनकथाः स्त्रीभिः सहाऽऽलापन
तासामर्भक[10]लालनं पतिनुति[11]स्तत्पाकमिथ्यास्तुतिः ॥
आदेशस्य कराऽवलम्बनविधिः पाण्डित्यलेखक्रिया
होरा[12]गारुडमन्त्रतन्त्रकविधिर्भिक्षोर्गुणा द्वादश ॥ १ ॥
प्रातःक्षालितलोचनाः करतले चञ्चत्पवित्राङ्कुरा-
स्तत्तत्स्थाननिवेशितोर्ध्वतिलकाश्चैलान्त[13]बद्धाऽक्षताः ॥
को जातश्च मृतोऽथ वा मृततिथिः कस्याऽऽलये वर्तते
चेत्थं हर्षशतैर्युताः प्रतिदिनं धावन्त्यहो भिक्षुकाः ॥ २ ॥
अग्र्यो[14] भुक्तिमतां[15] प्रयोगसमये मन्त्रेषु पृष्ठं गतः
पाकाऽगारगतस्तु पाचकमनस्तोषाय वाचस्पतिः[16] ॥
उञ्छायां[17] निरतो रतोऽर्भकगणे पिण्डेषु दत्ताऽऽदरो
नानाश्राद्धगणैकचालितमना भट्टोत्तमो राजते ॥ ३ ॥

---

१ सेवकाः २ विक्रीताः असवः प्राणा येन सः ३ बहुभाषकः ४ 'धीट' इति लो० ५ असञ्जमसः ६ भयशीलः ७ 'दाडगा' इ० ८ इच्छति ९ पठनम् १० शिशुः ११ स्तुति १२ प्रश्नकथनम् १३ वस्त्रान्ते १४ अग्रगण्यः १५ भोक्तॄणाम् १६ बृहस्पतिः १७ दक्षिणाया अयं तु वैदिकानां साकेतिकः शब्दः

# वाग्वर्णनम् ।

श्रीः ॥ केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नाऽलंकृता मूर्धजाः ॥
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १ ॥

मातर्नोऽतः परमनुचितं यत्खलानां पुरस्ता-
दस्ताऽऽशङ्कं जठरपिठरीपूर्तये नर्तितासि ॥
तत्क्षन्तव्यं सहजसरले वत्सले वाणि कुर्या
प्रायश्चित्तं गुणगणनया गोपवेषस्य विष्णोः ॥ २ ॥

अपि ललितसुगुणवेणिः सांऽलंकाराऽपि या सुवर्णाऽपि ॥
रघुतिलकविहीना चेद्वाणी रमणीव नैव कल्याणी ॥ ४ ॥

कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्तिं सूते दुष्कृतं या हिनस्ति ॥
तां चाऽप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ ५ ॥

तव करकमलस्था स्फाटिकीमक्षमालां
नखकिरणविभिन्नां दाडिमीबीजबुद्ध्या ॥

---

१ बाहुभूषणानि २ चन्द्रवदुज्ज्वलाः ३ सुगन्धतैलादिना संस्कृताः ४ केशाः ५ सम्यगलंकरोति ६ या असंस्कृतेति पदच्छेदपक्षे समलं मलसहितम् ७ उदरभाण्डम् ८ गोपवेषधारिणः कृष्णस्य ९ ललिता सुन्दरा सुष्ठुगुणयुक्ता वेणिः प्रवाहो यस्याः सा, पक्षे ललिताशोभनगङ्गावनादिसूत्रयुक्ता वेणिः केशपाशो यस्याः १० श्लेषरूपकाद्यलंकृतियुक्ता, पक्षे सौवर्णहीरकाद्यलंकारयुक्ता ११ सुष्ठु [illegible] यस्या, पक्षे शोभनगौरवर्णा १२ रघुतिलकोरामस्तद्वर्णनविहीना वाणी [illegible] रलयोः सावर्ण्यात् लघुतिलकेन कुङ्कुमतिलकेन विहीना रमणी स्त्री [illegible] नोरधान् १५ प्रपूरयति १६ अलक्ष्मीं 'अवदसे' ति लोके [illegible] १८ स्फटिकमयीम् १९ जपमालाम् २० नखाना किरण

अनुलवमनुकर्षन् येन कीरो[२] निषिद्धः
स भवतु मम भूत्यै[३] वाणि ते मन्द[४]हासः ॥ ६ ॥
गानाब्धेस्तु[५] परं पारं नोपेयाय[६] सरस्वती ॥
अतो निमज्जनभयात्तुम्बीं[७] वहति वक्षसि ॥ ७ ॥
या कर्षति निजयोगादन्तर्गतजीवनानि[८] सरसानां[९] ॥
वाणी सैव गुणैर्वर्ता[१०] घटीव यद्वा वधूटीव[११] ॥ ८ ॥
अस्त्यद्याऽपि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं[१२]
वर्तन्तेऽपि च तत्रतत्र रसिका गोष्ठीषु सक्ता नृपाः ॥
एकस्तत्र निरादरो भवति चेदन्यो भवेत्साऽऽदरो
वाग्देवी[१३]वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥ ९ ॥
तास्तु वाचः सभायोग्या याश्चित्ताऽऽकर्षणक्षमाः ॥
स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १० ॥
इयं पुण्याधिकन्यैव मन्ये वाक्चातुरी छलात् ॥
वृणोति विबुधान् हित्वा पुरुषोत्तममेव यत् ॥ ११ ॥
न धनी न बली नापि शूरो न गुणवानपि ॥
तथा भाति यथा वक्ता सभायां पिकवद्वने ॥ १२ ॥
यस्य वाण्यास्ति मधुरा तस्यैव सफलं तपः ॥
नोचेज्जीवन्ति पशवोप्यनिशं पुष्टिशालिनः ॥ १३ ॥
सालंकारोपि सरसः सगुणोपि पुमानिह ॥
प्रबन्ध इव वक्तृत्वं विना नूनं जडो न किम् ॥ १४ ॥
वाचः सौष्ठवमावेक्ष्य सुधाप्रायः सुधाभवत् ॥
सुधाधरोपि नोतद्वद्वाग्मी द्विजमुदे यथा ॥ १५ ॥

---

१ प्रतिक्षणम् २ शुकः ३ समृद्ध्यै ४ मन्दहास्यम् ५ गानसमुद्रस्य ६ न प्राप्तवती. ७ इक्ष्वाकुफलम् जलतरणार्थं तुम्ब्या.संग्रहं लोकाः कुर्वन्तीति प्रसिद्धम् ८ हृद्गतानि जीवनानि उदकानि च. ९ रसिकानां कूपादीनां च १० प्रागल्भ्यादिगुणयुक्ता रज्जुयुक्ता च ११ स्त्रीव १२ खंदक ' इतिलो० १३ सरस्वती.

## वाग्मिप्रशंसा ।

श्रोतॄन्मूकयति[2] ब्रुवन् स्थिरतमं[3] कुर्वन्नमीषां मनो
निर्बाष्पः परबाष्पकृत्परदृशामेकाऽऽश्रयो नाऽन्यदृक् ॥
यस्त्यक्ताऽङ्गविकम्पनः प्रचलयन्नित्यं सतां मस्तकं
क्षीरं श्रोतृषु मुख्यमात्मनि गुणं धत्ते स वक्तोत्तमः ॥१॥
तद्वक्ता सदसि ब्रवीतु वचनं यच्छृण्वतां चेतसः
प्रोल्लासं[4] रसपूरणं[5] श्रवणयोरक्ष्णोर्विकासश्रियम् ॥
क्षुन्निद्राश्रमदुःखकालगतिवत् कार्यान्तरप्रस्मृतिं[6]
प्रोत्कण्ठामनिशं श्रुतौ वितनुते शोकं विरामादपि ॥ २॥
श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः ॥
वल्गितं वावदूकस्य कृतिनः किं न शोभते ॥ ३ ॥
अल्पाऽक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी॥
बहुवचनमल्पसारं यः कथयति विप्रलापी सः ॥ ४ ॥
शुद्धकांस्यरचिताऽपि लालिता जिह्वया यदि न योजिता भवेत् ॥
किं तया करणमस्ति घण्टया जिह्वया ध्वनिमतां हि पूज्यया॥५॥

## असत्यवादिनिन्दा ।

श्रीः ॥ यशो यस्माद्भस्मीभवति वनवन्हेरिव वनं
निर्दानं[11] दुःखानां यदवनिरुहाणामिव[12] जलम् ॥
न यत्र स्याच्छायाऽऽतप इव तपःसंयमकथा
कथं चित्तन्मिथ्यावचनमभिधत्ते[13] न मतिमान् ॥ १ ॥
जिह्वैकैव सतामुभे फणवतां[14] स्रष्टुश्चतस्रश्च ता-
स्ताः सप्तैव विभावसोर्नियमिताः[16] षट् कार्तिकेयस्य च ॥

१ वक्ता २ मूकान् करोति. ३ अचल तटस्थमिति यावत् ४ प्रकर्षेणोल्लासं विकासम् ५ रसाना शृङ्गारादीना पूरणम् ६ अन्यकार्यविस्मृतिम् ७ वक्तुः ८ञ्शोळी,लवक,इति वा प्रसिद्धया ९कर्तव्य न किंचित्कार्यमस्तीति भाव १०दावाग्नेः ११ आदिकारणम् १२वृक्षाणाम् १३ वक्ति. १४ सर्पाणाम् १५ब्रह्मणः १६अग्नेः

पौलस्त्यस्य दशाऽभवन् फणिपतेर्जिह्वासहस्रद्वयं
जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥ २ ॥

असत्यमप्रत्ययमूलकारणं कुवासनासद्मसमृद्धिवारणम् ॥
विपन्निदानं परवञ्चनोर्जितं कृताऽपराधं कृतिभिर्विवर्जितम् ॥३॥

नाऽसत्यवादिनः सख्यं न पुण्यं न यशो भुवि ॥
दृश्यते नाऽपि कल्याणं कालकूटमिवाऽश्नतः ॥ ४ ॥

## अविवेकनिन्दापूर्वकविवेकस्तुतिः ।

श्रीः ॥ कदापि साहसं नैव कर्तव्यं पुरुषैर्यतः ॥
जीवितस्यापि नाशः स्यात्तस्यैव कृपया किल ॥ १ ॥

स्वल्पं महद्वा यत्कर्म विचार्यैव तदाचरेत् ॥
अविचारेण नाचारस्तिरश्चामपि दृश्यते ॥ २ ॥

विवेकस्यैव दास्यस्ताः सकला अपि संपदः ॥
निखिलास्तारका यद्वच्छरद्राका कलानिधेः ॥ ३ ॥

अहो विवेकराजस्य कृपयैवाखिला नराः ॥
संसारवारांनिधिमप्युत्तरन्त्येव तत्क्षणात् ॥ ४ ॥

अविवेकिनमालोक्य तथा खिद्यति मे मनः ॥
कुम्भीपाकादिनरकानुभवैरपि नो यथा ॥ ५ ॥

## कृतघ्ननिन्दा ।

श्रीः ॥ व्योमनि शं वा कुरुते चित्रं निर्माति यत्नतः सलिले ॥
स्नपयति पवन सलिलैर्यस्तु खले चरति सत्कारम् ॥ १ ॥

यथा वृष्टिः समुद्रेषु भुक्तस्योपरि भोजनम् ॥
एवं प्रीतिः खलैः सार्धमुत्पन्नाऽप्यवसीदति ॥ २ ॥

शोकं मा कुरु कुक्कुर सत्त्वेष्वहमधम इति मुधा साधो ॥
कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ३ ॥

---

१ रावणस्य. २ शेषस्य. ३ अविश्वास. ४ विपत्ते. कारणम् ५ कुशलैः ६ विषम् ७ भक्षयतः ८ सुखम् ९ आलेख्यम् १० पूजाम् ११ भषक १२ व्यर्थम्.

## गर्भवासप्रयुक्तं दुःखम्।

श्रीः ॥ कृमिभिः[1] क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम् ॥
मूर्छामाप्नोत्युरुक्लेशो[2] गर्भस्थैः क्षुधितैर्भृशम् ॥ १ ॥
कटुतीक्ष्णोष्णलवणक्षाराऽम्लादिभिरुल्बणैः[3] ॥
मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ २ ॥
उल्बेन[4] संवृतस्तस्मिन्नान्त्रैश्च[5] बहिरावृतः ॥
आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ३ ॥
अकल्पः[6] स्वाङ्गचेष्टायां[7] शकुन्त[8] इव पञ्जरे ॥
अनुच्छ्वसन्[9] स्मरन् पूर्वं[10] गर्भे किं नाम विन्दते ॥ ४ ॥
निःसृतोऽहं[11] करिष्यामि सुकृतानीति चिन्तयन् ॥
मेदोऽसृग्दिग्धसर्वाऽङ्गो[12] जरायुपुटसंवृतः[13] ॥ ५ ॥
निष्क्रामन्[14] भृशदुःखाऽऽर्तो[15] रुदन्नुच्चैरधोमुखः[16]
यन्त्रादिव विनिर्मुक्तः पतत्युत्तानशाय्यथ[17] ॥ ६ ॥

## स्त्रीस्वभावनिन्दा।

श्रीः ॥ अनृतं[18] साहसं माया[19] मूर्खत्वमतिलोभता ॥
अशुचित्वं निर्दयत्वं स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥
स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः[20] प्रियसाहसाः ॥
घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ २ ॥
स्त्रियो हि नाम खल्वेता निसर्गादेव[21] पण्डिताः ॥
पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥ ३ ॥

---

१ कीटकैः २ महाकष्टयुक्तः ३ उत्कटैः ४ जरायुणा 'जार' इति लोके. ५ व्याप्तः ६ असमर्थः ७ चलनादिव्यापारे. ८ पक्षीव ९ उच्छ्वासं त्यक्तुमशक्तः १० प्राचीन कर्म ११ गर्भाशयाच्च्युतः १२ मेदोरक्तलिप्तसर्वाङ्गः १३ जरायुकोशव्याप्तः १४ बहिर्निःसरन्. १५ निःसरणकालेऽत्यन्तदुःखयुक्तः १६ उच्चस्वरेण रोदनं कुर्वन्. १७ उत्तानः शेतेऽसौ उत्तानशायी. १८ असत्यम् १९ कपटम् २० दुःसहाः २१ स्वभावतः

विधायाऽलीकविश्रम्भ[1]मङ्गेषु त्यक्तसौहृदाः ॥
नवंनवमभीप्सन्त्यः पुंश्चल्यः[2] स्वैरवृत्तयः[3] ॥ ४ ॥
स्वातन्त्र्यं पितृमन्दिरे च वसतिर्यात्रोत्सवे संगति-
र्गोष्ठी पूरुषसंनिधानानियमो वासो विदेशे तथा ॥
संसर्गः[4] सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः
पत्युर्वार्धकमीर्ष्यितं प्रवसनं[5] नाशस्य हेतुः स्त्रियाः ॥ ५ ॥
ज्योत्स्नेव नयनाऽऽनन्दः सुरेव[6] मदकारणम् ॥
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ६ ॥
अग्राह्यं हृदयं तथैव वदनं यद्दर्पणाऽन्तर्गतं
भावः[7] पर्वतसूक्ष्ममार्गविषमः[8] स्त्रीणां न विज्ञायते ॥
चित्तं पुष्करपत्रतोयतरलं[9] विद्वद्भिराशंसितं
नारी नाम विषाङ्कुरैरिव लता दोषैः समं वर्धिता ॥ ७ ॥
गुणाऽऽश्रयं कीर्तियुतं च कान्तं पतिं विधेयं सधनं रतिज्ञम् ॥
विहाय शीघ्रं वनिता व्रजन्ति नरान्तरं शीलगुणादिहीनम् ॥८॥
समुद्रवीचीव[10] चलस्वभावाः संध्याऽभ्रलेखेव[11] मुहूर्तरागाः ॥
स्त्रियो हृताऽर्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति[12] ॥ ९॥
संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ॥
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ १० ॥
नाऽमृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ॥
सैवाऽमृतलतारक्ता विरक्ता विषवल्लरी ॥ ११ ॥

---

१ कपटविश्वासम् २ जारिण्यः ३ स्वेच्छावृत्तयः ४ समागमः ५ प्रवासः ६ मद्यमिव ७ चित्ताभिप्रायः ८ पर्वतस्थसूक्ष्ममार्गवदतिकठिनः ९ कमलपत्रगतजलबिन्दुवच्चञ्चलम् १० तरङ्गः ११ सायतनाभ्रमिव क्षणमनुरागिण्यः १२ निष्पीडितलाक्षारसरञ्जितकार्पासवत्.

अनङ्कुरितकूर्चकः[1] सतु सितोपलाऽऽढ्यं[2] पयः
स एव धृतकूर्चकः सलवणाऽम्बुतक्रोपमः ॥
स एव सित[3]कूर्चकः क्वथितगुग्गुलोद्वेगकृत्
भवन्ति हरिणीदृशां प्रियतमेषु भावास्त्रयः ॥ १२ ॥
जल्पन्ति सार्ध[4]मन्येन पश्यन्त्यन्यं सविभ्रमम् ॥
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ १३ ॥
स्त्रीणां द्विगुण आहारो लज्जा चाऽपि चतुर्गुणा ॥
साहसं षड्गुणं चैव कामश्चाऽष्टगुणः स्मृतः ॥ १४ ॥
अन्तःक्रूराः सौम्यमुखा अगाधहृदयाः स्त्रियः ॥
अन्तर्विषा बहिःसौम्या भक्ष्या विषकृता इव ॥ १५ ॥
स्त्रियो हि मूलं निधनस्य[5] पुंसः स्त्रियो हि मूलं व्यसनस्य[6] पुंसः ॥
स्त्रियो हि मूलं नरकस्य पुंसः स्त्रियो हि मूलं कलहस्य पुंसः ॥ १६
कामनाम्ना किरातेन[7] विततता[8] मूढचेतसाम् ॥
नार्यो नर[9]विहङ्गानामङ्गबन्धनवागुराः[10] ॥ १७ ॥
दर्शनाद्ग्रसते चित्तं स्पर्शनाद्ग्रसते धनम् ॥
सङ्गमाद्ग्रसते सत्त्वं[11] नारी प्रत्यक्षराक्षसी ॥ १८ ॥

## कुलवधूवृत्तम् ।

श्रीः ॥ यस्य भार्या शुचि[12]र्दक्षा भर्तारमनुगामिनी ॥
नित्यं मधुरवक्त्री च सा रमा[13] न रमा रमा ॥ १ ॥
नित्यं स्नाता सुगन्धा च नित्यं च प्रियवादिनी ॥
अल्पभुङ्मितवक्त्री च देवता सा न मानुषी ॥ २ ॥

---

१ अनुद्गतश्मश्रुः २ खण्डशर्करायुक्त दुग्धमिव सुखावहः ३ सितकूर्चकस्तु स्त्रीणा क्वथितगुग्गुलुवदुद्वेगजनको न कथमपि संतोषजनक इत्यर्थः क्वथित-गुग्गुलुक्काथवदिति वा पाठः ४ सह. ‘ बरोबर ’ ५ मरणस्य. ६ दुःखस्य ७ भिल्लेन. ८ प्रसृताः ९ नरा एव विहङ्गाः पक्षिणस्तेषाम्. १० पाशाः ११ बलं. १२ पवित्रा. १३ लक्ष्मीः

असारभूते संसारे सारभूता नितम्बिनी ॥
इति सञ्चिन्त्य वै शम्भुरर्धाङ्गे पार्वतीं दधौ ॥ ३ ॥

कार्येषु मन्त्री करणेषु दासी भोज्येषु माता शयनेषु रम्भा ॥
धर्माऽनुकूला क्षमया धरित्री भार्या च षाड्गुण्यवतीह दुर्लभा॥४॥

पदन्यासो गेहाद्बहिर[1]हिफणाऽऽरोपणसमो
निजो[2]ऽऽवासादन्यद्भवनमपरद्वीपतुलितम् ॥
वचो लोकाऽलभ्यं कृपणधनतुल्यं मृगदृशः
पुमानन्यः कान्ता[3]द्विधुरिव चतुर्थीसमुदितः ॥ ५ ॥

सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ॥
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ६ ॥

जीवति जीवति नाथे मृते मृता या मुदायुता मुदिते[4] ॥
सहजस्नेहरसाला[5] कुलवनिता[6] केन तुल्या स्यात् ॥ ७ ॥

भक्तिः प्रेयसि[7] संश्रितेषु[8] करुणा श्वश्रूषु[9] नम्रं शिरः
प्रीतिर्यातृषु गौरवं गुरुजने क्षान्तिः[10] कृताऽऽगस्यपि[11] ॥
अम्लाना[12] कुलयोषितां व्रतविधिः सोऽयं विधेयः पुन-
र्भर्तुर्दयिता इति प्रियसखी ब्रू[illegible] दार [illegible] ष्वपि[13] ॥ ८ ॥

अभ्युत्थानमु रुषं निरय मैं [illegible] तद्भाषणे नम्रता
तत्पादाऽर्पितदृष्टि मदयन्ति विड [illegible] स्तस्योपचर्या[14] स्वयम् ॥
सुप्ते तत्र शयीत तत्प्रथमता चिमा जह्याच्च[15] शय्यामिति
प्राच्यैः पुत्रि निवेदितः कुलवधूसिद्धान्त धर्माऽऽगमः ॥९॥

लज्जावशाच्च नतमन्थरदृष्टिपातं यैश्चुम्बितं कुलवधूवदनाऽरविन्दम्
तेषामनेकपुरुषव्रणिताधरेषु शक्तिः कथं भवति वेशवधूमुखेषु॥१०

---

१ सर्पः २ स्वगृहात्. ३ कान्तात्प्रियात् अन्यः पुमान् वरदचतुर्थ्युदितश्चन्द्र इव दर्शनानर्ह इत्यर्थः ४ हर्षिते. ५ स्वाभाविकस्नेहभरिता ६ कुलस्त्री. ७ भर्तरि. ८ आश्रितेषु ९ 'जावा' इति० १० क्षमा. ११ अपराधिनि. १२ प्रफुल्लवदना. १३ 'सवतीवर' १४ पूजा. १५ त्यजेत्.

सैव साध्वी सुभक्तश्च सुस्नेहः सरसोज्ज्वलः ॥
पाकः[1] संजायते यस्याः करादप्युदरादपि ॥ ११ ॥
दीपदशा[2] कुलयुवती वैदग्ध्येनैव[3] मलिनतामेति ॥
दोषा[4] अपि भूषायै[5] गणिकायाः शशिकलायाश्च ॥१२ ॥
रूपसंपन्नम[6]ग्राम्यं[7] प्रेमप्रायं[8] प्रियंवदम्[9] ॥
कुलीनमनुकूलं च कलत्रं[10] कुत्र लभ्यते ॥ १३ ॥

## असतीचरितम्।

श्रीः ॥ यस्य भार्या विरूपा च कश्मला[11] कलहप्रिया ॥
अधिकाऽधिकभक्षा च सा जरा[12] न जरा जरा ॥ १ ॥
विवादशीलां स्वयमर्थचोरिणीं
पराऽनुकूलां बहुपाकपाकिनीम् ॥
आक्रोशिनीं दुर्विपहप्रकोपिनीं
त्यजन्ति भार्यां दशपुत्रमातरम् ॥ २ ॥
भर्ता यद्यपि नीतिशास्त्रनिपुणो विद्वान्कुलीनो युवा
दाता कर्णसमः प्रसिद्धविभवः शृङ्गारदीक्षागुरुः[13] ॥
स्वप्राणाऽधिककल्पिता स्ववनिता स्नेहेन संलालिता
तं कान्तं प्रविहाय सैव युवती जारं पतिं वाञ्छति ॥ ३॥
पतिरतीव धनी सुभगो[14] युवा परविलासवतीषु पराङ्मुखः ॥
शिशुरलंकुरुते भवनं सदा तदपि सा सुदती रुदती कुतः ॥ ४ ॥
आरोपिता[15] शिलायामश्मेव त्वं भवेति मन्त्रेण ॥
मग्नाऽपि परिणयाऽऽपदि[16] जारमुखं वीक्ष्य हर्षितैव॥५॥

१ पक्वान्नं पक्षे बालकः २ दीपवर्तिः ३ विशेषण दग्धा विदग्धा तस्या भावो वैदग्ध्यं तेन पक्षे चातुर्येण. ४ सदोषता मलिनत्वं च ५दूषणानि रात्रिश्च ६ सौन्दर्यपूर्णम्. ७ ग्राम्य न भवतीत्यग्राम्यं सद्व्यवहारचतुरम् ८ प्रेमबहुलम् ९ मधुरभाषि. १० कुटुम्बम्.११ अमङ्गला. १२ वृद्धत्वम् १३ उपदेष्टा १४ सुन्दरः अथ च सुष्ठु भं नक्षत्र तस्मिन् गच्छति. कुयोगं त्यक्त्वा भार्या व्रजति. इदमेव रोदनकारणम् १५ स्थापिता १६ परिणयरूपायामापदि संकटे.

इह वटवृक्षे यक्षः प्रतिवसति दिवाऽपि यत्र भयशङ्का ॥
तस्मिन्नभिनववध्वा नीता वीतोदयाः क्षणदाः[1] ॥ २१ ॥
आयातासि विमुञ्च वेपथुभरं दृष्टासि केनापि नो
नीलं चोलमिदं विमुञ्च हरतु स्वेदं निशीथानिलः ॥
इत्यन्तर्भयसन्नकण्ठमसकृद्यामीति तल्पंगता
त्रस्यन्ती परिरभ्यते सुकृतिभिः स्वैरं नवस्वैरिणी ॥२२॥

## सामान्यतः पुत्रप्रशंसा ।

श्रीः ॥ गृहे जोनुचरः[2] केल्यां मुग्धस्मितमुखाऽम्बुजः ॥
पुत्रः पुण्यवतामेव पात्रीभवति नेत्रयोः ॥ १ ॥
स्वगर्भशुक्तिनिर्भिन्नं सुवृत्तं सुतमौक्तिकम् ॥
वंशश्रीतिलकीभूतं मन्दभाग्यस्य दुर्लभम् ॥ २ ॥
वर्धते न चिरं लोके वंशलक्ष्मीरसन्ततिः[3] ॥
स्वल्पाऽवशेषितस्नेहवर्तिमालेव दीपिका ॥ ३ ॥
अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ॥
आनन्दग्रन्थिरेको ऽयमपत्यमिति कथ्यते ॥ ४ ॥
आनन्दस्रुतिरात्मनोनयनयोरन्तः सुधाऽभ्यञ्जनं
प्रस्तारः प्रणयस्य मन्मथतरोः पुष्पं प्रसादो रतेः ॥
आलानं[4] हृदयद्विपस्य विषयाऽरण्येषु संचारिणो
दंपत्योरिह लभ्यते सुकृततः संसारसारः सुतः ॥ ५ ॥
दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम् ॥
पुण्याऽधिका हि पश्यन्ति गङ्गाधरमिवाऽऽत्मजम् ॥ ६ ॥
उरोरुहादुद्गमितैः[6] पयोभिरापूर्य केल्या निजमास्यगर्भम् ॥
फूत्कृत्य मातुर्वदने हसन्तं तनूभवं पश्यति कोऽपि धन्यः ॥ ७ ॥
कृतचङ्क्रममङ्गणेषु किंचित्क्वणत्किङ्किणिरिङ्गदङ्घ्रिपद्मम् ॥

---

१ रात्रयः २ जानुभ्या चरतीतिजानुको रिङ्गमाण इत्यर्थः ३ सन्ततिरहिता. ४ बन्धनस्तम्भः ५ नग्नम्. ६ स्तनात्.

यदि सन्महितं सुतं श्रितं स्यात्तदिदं सद्म हितं भवेत्तदानीम्॥८॥
अहं किमम्[1]बा किमभीष्टता पदे तवेति मातुर्भुरि तात पृच्छया ॥
[2]प्रलोभ्यतुल्यं प्रवदन्तमर्भकं मुदा हसन् जिघ्रति मूर्ध्नि पुण्यभाक्॥९॥
निन्द्यते पितृभिस्तप्तैर्निरपत्यधनः पुमान् ॥
अध्वनीनैरविश्रान्तैरवकेशीव पादपः ॥ १० ॥

## विषयनिन्दान्तर्गतपुत्रनिन्दा ।

श्रीः ॥ नाना शरीरकष्टैर्धनव्ययैः साध्यते यदा पुत्रः ॥
उत्पन्नमात्रपुत्रे जीवितशङ्का गरीयसी तत्र ॥ १ ॥
जीवन्नपि किं मूर्खः प्राज्ञः किं शीलवान् भविता ॥
जारश्चोरः पिशुनः पतितो द्यूतप्रियश्चापि ॥ २ ॥
पितृमातृबन्धुघाती मनसः खेदाय जायते पुत्रः ॥
चिन्तयति तातनिधनं पुत्रो द्रव्याद्यधीशताहेतोः ॥ ३ ॥
सर्वगुणैरुपपन्नः पुत्रः कस्यापि कुत्रचिद्भवति ॥
सोल्पायू रुग्णो वा ह्यनपत्यो वा तथापि खेदाय ॥ ४ ॥
पुत्रात्सद्गतिरिति चेत्तदपि प्रायोस्ति युक्त्यसहम् ॥
नापुत्रस्य लोकोस्तीति श्रुत्या को वा प्रभाष्यते लोकः॥५॥

## विषयनिन्दान्तर्गतसुहृन्निन्दा ।

श्रीः ॥ तावत्सर्वे सुहृदो व्यत्ययतः शत्रवः सर्वे ॥
अश्नन्ति चेदनुदिनं बन्दिन इव वर्णयन्ति संतृप्ताः ॥ १ ॥
तच्चेद्द्वित्रिदिनान्तरमभिनन्दन्तः प्रकुप्यन्ति ॥
दुर्भरजठरनिमित्तं समुपार्जयितुं प्रवर्तते चित्तम् ॥ २ ॥

## सत्पुत्रप्रशंसा ।

श्रीः ॥ एकोऽपि गुणवान् पुत्रो निर्गुणैः किं शतेन तैः ॥
एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् ॥ १ ॥

---

१ माता २ इष्टस्थाने. ३ प्रलोभ्यस्य प्रलोभनार्थं दर्शितस्य वस्तुनोऽनुरूपम्. ४ अवघ्राण करोति. ५ पान्थैः ६ वन्ध्यः

एकेन हि सुवृक्षेण पुष्पितेन सुगन्धिना ॥
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ २ ॥

पात्रं न तापयति नैव मलं प्रसूते
स्नेहं न संहरति नैव गुणान् क्षिणोति ॥
द्रव्याऽवसानसमये चलतां न धत्ते
सत्पुत्र एव कुलसद्मनि[1] कोऽपि दीपः ॥ ३ ॥

प्रज्ञया वा विसारिण्या[2] यो बलेन धनेन वा ॥
धुरं[3] वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ४ ॥

स जातो येन जातेन याति वंशः समुन्नतिम् ॥
परिवर्तिनि[4] संसारे मृतः को वा न जायते ॥ ५ ॥

विद्याविहीना बहवोऽपि पुत्राः कल्पायुषः सन्तु पितुः किमेतैः ॥
क्षयिष्णुना[5] वाऽपि कलावता[6] वा तस्य प्रमोदः शशिनेव[7] सिन्धोः॥६॥

किं मृष्टं[8] सुतवचनं पुनरपि मृष्टं तदेव सुतवचनम् ॥
मृष्टान्मृष्टतरं किं श्रुतिपरिपक्कं तदेव सुतवचनम् ॥ ७ ॥

एकेनाऽपि सुपुत्रेण विद्यायुक्तेन भासते ॥
कुलं पुरुषसिंहेन[9] चन्द्रेणेव हि शर्वरी[10] ॥ ८ ॥

अजातमृतमूर्खाणां वरमाद्यौ न चाऽन्तिमः ॥
सकृद्दुःखकरावाद्यावन्तिमस्तु पदेपदे ॥ ९ ॥

वरं गर्भस्रावो वरमपि च नैवाऽभिगमनं
वरं जातः प्रेतो वरमपि च कन्या विजनिता ॥
वरं वन्ध्या भार्या वरमपि च गर्भेषु वसति-
र्नचाऽविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥ १० ॥

---

१ कूलमेव सद्म गृहं तस्मिन्. २ प्रसरणशीलया. ३ कार्यभारम्. ४ भ्रमणशीले. ५ क्षयशीलेन. ६ कलापूर्णेन ७ चन्द्रेण. ८ मधुरम्. ९ पुरुषश्रेष्ठेन १० रात्रिः

## कुपुत्रनिन्दा ।

श्रीः ॥ किं तेन जातु जातेन मातृयौवनहारिणा ॥
आरोहति न यः स्वस्य वंशस्याऽग्रे ध्वजो यथा ॥ १ ॥
किं तया क्रियते धेन्वा या न दोग्ध्री न गर्भिणी ॥
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥ २ ॥
एकेन शुष्कवृक्षेण दह्यमानेन वह्निना ॥
दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं तथा ॥ ३ ॥
कोटरान्तः स्थितो वन्हिस्तरुमेकं दहेत्खलु ॥
कुपुत्रस्तु कुले जातः स्वकुलं नाशयत्यहो ॥ ४ ॥
अजातमृतमूर्खेभ्यो मृताऽजातौ सुतौ वरौ ॥
यतस्तावल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ५ ॥
यस्य पुत्रो न वै विद्वान् न शूरो न च धार्मिकः ॥
अप्रकाशं कुलं तस्य नष्टचन्द्रेव शर्वरी ॥ ६ ॥
अविनीतः सुतो जातः कथं न दहनात्मकः ॥
विनीतस्तु सुतो जातः कथं न पुरुषोत्तमः ॥ ७ ॥

## राजराजनीतिराजाश्रयादयः ।

श्रीः ॥ राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ॥
राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ १ ॥
पर्जन्य इव भूतानामाधारः पृथिवीपतिः ॥
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ २ ॥
यः कुलाऽभिजनाऽऽचारैरतिशुद्धः प्रतापवान् ॥
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ ३ ॥
कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः ॥
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ ४ ॥

---

१ कदाचित्. २ यौवननाशकेन. ३ दोहनशीला. ४ 'ढोल' इति लोके.
५ प्रकाशरहितम्.

एकेन हि सुवृक्षेण पुष्पितेन सुगन्धिना ॥
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ २ ॥
पात्रं न तापयति नैव मलं प्रसूते
स्नेहं न संहरति नैव गुणान् क्षिणोति ॥
द्रव्याऽवसानसमये चलतां न धत्ते
सत्पुत्र एव कुल[1]सद्मनि कोऽपि दीपः ॥ ३ ॥
प्रज्ञया वा वि[2]सारिण्या यो बलेन धनेन वा ॥
[3]धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ४ ॥
स जातो येन जातेन याति वंशः समुन्नतिम् ॥
[4]परिवर्तिनि संसारे मृतः को वा न जायते ॥ ५ ॥
विद्याविहीना बहवोऽपि पुत्राः कल्पायुषः सन्तु पितुः किमेतैः ॥
[5]क्षयिष्णुना वाऽपि [6]कलावता वा तस्य प्रमोदः [7]शशिनेव सिन्धोः॥६॥
किं [8]मृष्टं सुतवचनं पुनरपि मृष्टं तदेव सुतवचनम् ॥
मृष्टान्मृष्टतरं किं श्रुतिपरिपक्वं तदेव सुतवचनम् ॥ ७ ॥
एकेनाऽपि सुपुत्रेण विद्यायुक्तेन भासते ॥
कुलं [9]पुरुषसिंहेन चन्द्रेणेव हि [10]शर्वरी ॥ ८ ॥
अजातमृतमूर्खाणां वरमाद्यौ न चाऽन्तिमः ॥
सकृद्दुःखकरावाद्यावन्तिमस्तु पदेपदे ॥ ९ ॥
वरं गर्भस्रावो वरमपि च नैवाऽभिगमनं
वरं जातः प्रेतो वरमपि च कन्या विजनिता ॥
वरं वन्ध्या भार्या वरमपि च गर्भेषु वसति-
र्नचाऽविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥ १० ॥

---

१ कूलमेव सद्म गृहं तस्मिन् २ प्रसरणशीलया. ३ कार्यभारम्. ४ भ्रमण० शीले. ५ क्षयशीलेन. ६ कलापूर्णेन ७ चन्द्रेण. ८ मधुरम्. ९ पुरुषश्रेष्ठेन १० रात्रिः

राजसेवा मनुष्याणाम[1]सिधाराऽवलेहनम् ॥
[2]पञ्चाननपरिष्वङ्गो [3]व्यालीवदनचुम्बनम् ॥ १६ ॥
इच्छेद्यस्तु सुखं निवस्तुम[4]वनौ गच्छेत्स राज्ञः सभां
[5]कल्याणीं गिरमेव [6]संसदि वदेत्कार्यं विदध्यात्कृती ॥
अक्लेशाज्जनमर्जयेदधिपतेरावर्जयेद्[7]वल्लभान्
कुर्वीतोपकृतिं जनस्य जनयेत्कस्याऽपि नाऽ[8]पक्रियाम् ॥
अयुक्तं युक्तं वा [9]यदभिहितमज्ञेन विभुना
स्तुयादेतन्नित्यं जडमपि गुरुं तस्य [10]विनुयात् ॥
विवत्सु[11]र्नैःस्पृह्यं कथमपि सभाया[12]मभिनये-
त्स्वकार्यं संतुष्टे क्षितिभृति [13]रहस्येव कथयेत् ॥ १७ ॥
सिद्ध्यन्ति कर्मसु महत्स्वपि य[14]न्नियोज्याः
संभावनागुणमवेहि तमी[15]श्वराणाम् ॥
किं प्राऽभविष्य[16]दरुणस्तमसां वधाय
तं चेत्स[17]हस्रकिरणो धुरि नाऽकरिष्यत् ॥ १८ ॥
[18]आलोकान्तप्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाऽधिकारो मतो नः ॥
तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देवविश्रान्तिम[19]ह्नः ॥ १९ ॥
[20]भुजङ्गभोगसंक्रान्ता [21]कलत्रं तव मेदिनी ॥
अहंकारः परां कोटिमारोहति कुतस्तव ॥ २० ॥
अचिराऽधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ॥
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ २१ ॥

---

१ खड्गधारा. २ सिंहालिङ्गनम् ३ सर्पिणी ४ पृथिव्याम् ५ मनोज्ञाम् ६ सभायाम् ७ प्रियान् ८ अपकारम् ९ उक्तम् १० तद्गुरोः स्तवनं कुर्यात् ११ निस्पृहताम् १२ अभिनयपूर्वक दर्शयेत् १३ एकान्ते १४ भृत्याः १५ राज्ञाम् १६ सूर्यसारथिः १७ सूर्यः १८ लोकालोकपर्वतपर्यन्तम् १९ दिनस्य २० शेषः पक्षे जारः २१ भार्या

सप्रतिबन्धं कार्यं प्रभुरधिगन्तुं सहायवानेव ॥
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ २२ ॥

भोगिनः[1] कञ्चुका[2]ऽऽसक्ताः क्रूराः कुटिलगामिनः ॥
सुदुष्टा मन्त्रै[3]साध्याश्च राजानः पन्नगा[4] इव ॥ २३ ॥

उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् लघून्वर्धय-
न्नत्युच्चान्नमयन्नतान्समुदयन् विश्लेषयन्संहतान् ॥
क्रूरान् कण्टकिनो बहिर्निरसयन् म्लानान् पुनः सेचयन्
मालाकार इव प्रपञ्चचतुरो राजा चिरं नन्दति ॥ २४ ॥

अकस्माद्द्वेष्टि यो भक्त[5]माजन्मपरिसेवितम् ॥
न व्यञ्जने रुचिर्यस्य त्याज्यो नृप इवाऽऽतुरः ॥ २५ ॥

## राजस्तुतिः ।

संग्रामाङ्गण[6]मागतेन भवता चापे[7] समारोपिते[8]
देवाऽऽकर्णय येनयेन सहसा यद्यत्समासादितम् ॥
कोदण्डेन शराः शरैररिशिरस्तेनाऽपि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ १ ॥

अन्तर्विष्णो[9]स्त्रिलोकी निवसति फणिनामीश्वरे[10] सोऽपि शेते
सिन्धोः सोऽप्येकदेशे तमपि चुलकयां कुम्भयोनिश्चकार ॥
धत्ते खद्योत[11]लीलामयमपि नभसि श्रीनृसिंहक्षितीन्द्र
त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ २ ॥

अपायि[12] मुनिना पुरा पुनरमायि[13] मर्यादया
अतारि[14] कपिना[15] पुरा पुनरदाहि लङ्कारिणा ॥
अमन्थि[16] मुरवैरिणा पुनरबन्धि[17] लङ्कारिणा
क्व नाम वसुधापते तव यशोऽम्बुधिः क्वाम्बुधिः ॥ ३ ॥

---

१ विलासिनः भोगवतश्च. २ कवचं पक्षे 'कांत' ३ विचारः (मसलत) पक्षे शावरादिः ४ सर्पाइव. ५ सेवकं ओदनं च ६ युद्धभूमिम् ७ धनुषि ८ सज्जीकृते ९ विष्णोरुदरे १० शेषे ११ ज्योतिरिङ्गणः 'काजवा' इति लो० १२ पीतः १३ मितः १४ तीर्णः १५ मारुतिना १६ मथितः १७ बद्धः

अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया.
[1]प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाऽकीर्तयः ॥
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥ ४ ॥
द्वारं [2]खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः [3]कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ॥
आक्रान्तं [4]महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्सैव चिरंतनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥५॥
त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति [5]द्विषे-
स्त्वं बाणान् दशपञ्च मुञ्चसि परे सर्वाणि शस्त्राण्यपि ॥
ते [6]देवीपतयस्त्वदस्त्रनिहतास्त्वं मानुषीणां पति-
र्निन्दा तेषु कथं स्तुतिस्तव कथं श्रीकण्ठ निर्णीयताम् ॥६
कीर्तिस्तव क्षितिप याति [7]भुजङ्गगेहे
[8]मातङ्गसंगमकरी च दिगन्तरेषु ॥
त्यक्त्वाऽ[9]म्बरं व्रजति [10]नन्दनम[11]प्यकम्पं
किंकिं करोति न [12]निरर्गलतां गता स्त्री ॥ ७ ॥

## मदनवर्णनम् ।

श्रीः ॥ शंभुस्वयंभुहरयो [13]हरिणेक्षणानां
येनाऽक्रियन्त सततं [14]गृहकर्मदासाः ॥
वाचामगोचरचरित्रविचित्रिताय
तस्मै नमो भगवते [15]कुसुमाऽऽयुधाय ॥ १ ॥

---

१ अन्धः इय मिथ्याध्यवसितिः अनेन राज्ञः अकीर्तिरेव नास्तीति सू-
तम् २ खड्गधारिभिः गण्डकैश्च 'गेंडे' इति लो० ३ सर्पैः द्वारपालैश्च ४पट्टा-
भिषिक्तस्त्रीभिः ५ वैरिणः ६ देवाङ्गनास्वामिनः ७ पाताले जारगृहे च
८ दिक्करिसमागमकरी अन्त्यजसंगकरी च ९ वस्त्रं आकाश च १० इन्द्रवनं
पुत्रं च ११ निर्भयम् १२ निष्प्रतिबन्धत्वम् १३ स्त्रीणाम् १४ गृहकर्मकरा
दासाः १५ मदनाय

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ॥
यतस्तन्नेत्र[१]संचारसूचितेषु प्रवर्तते ॥ २ ॥

न गम्यो मन्त्राणां न च भवति भैषज्य[२]विषयो
न चाऽपि प्रध्वंसं[३] व्रजति विविधैः शान्तिकशतैः ॥
भ्रमाऽवेशादङ्गे किमपि विदधद्भव्यमसमं
स्मराऽपस्मारो[४]ऽयं भ्रमयति दृशं घूर्णयति च ॥ ३ ॥

अनङ्गेनाऽबलासङ्गाज्जिता येन जगत्त्रयी ॥
सचित्रचरितः कामः सर्वकामप्रदोऽस्तु वः ॥ ४ ॥

कुलगुरुरबलानां केलिदीक्षाप्रबन्धे
परमसुहृदनङ्गो रोहिणीवल्लभस्य ॥
अपि कुसुमपृषत्कै[५]र्देवदेवस्य जेता
जयति सुरतलीलानाटिकासूत्रधारः ॥ ५ ॥

अद्याऽपि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व[६] इवाम्बुराशौ[७] ॥
त्वमन्यथा मन्मथ मद्विधानां
भस्माऽवशेषः कथमेवमुष्णः ॥ ६ ॥

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं[८] दृश्यते मद्विधेषु ॥
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्र[९]सारीकरोषि ॥ ७ ॥

स्तोकां[१०]ऽस्त्रसाधनवता भवता मनोज[११]
स्वैरं[१२] जगज्जितमनङ्गतयाऽपि सर्वम् ॥
स्याच्चेद्भवान् बहुशरः प्रतिलब्धगात्रः
कुर्यास्ततो यदपि कर्म कियन्न जाने ॥ ८ ॥

---

१ नेत्रकटाक्षपातेन सूचितेषु २ औषधोपायसाध्यः ३ नाशम् ४ भूतोन्मादो रोगविशेषः ५ पुष्पबाणैः ६ वडवाग्निः ७ समुद्रे ८ असत्यम् ९ वज्रवत्कठिनान्करोषि १० अल्पानि ११ मदन १२ स्वेच्छया.

एकं वस्तु द्विधा कर्तुं बहवः सन्ति धन्विनः ॥
धन्वी स मार एवैको द्वयोरैक्यं करोति यः ॥ ९ ॥
न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ॥
तथाऽपि जितमेवाऽसीदमुना भुवनत्रयम् ॥ १० ॥
हृदयतृणकुटीरे दीप्यमाने स्मराऽग्ना-
वुचितमनुचितं वा वेत्ति नो पण्डितोऽपि ॥
किमु कुवलयनेत्राः सन्ति नो नाकनार्य-
स्त्रिदशपतिरहल्यां तापसीं यः सिषेवे ॥ ११ ॥
शिवशिव हि शिवेन पुष्पधन्वा प्रलयनटेन किमित्यकारि भस्म ॥
स हि पुनरुदितश्छलाय लोके स तु मणिमन्त्रमहौषधैरसाध्यः ॥

## पान्थोक्तिप्रत्युक्तयः।

श्रीः ॥ भोः पान्थ पुस्तकधर क्षणमत्र तिष्ठ
वैद्योऽसि किं गणितशास्त्रविशारदोऽसि ॥
केनौषधेन मम पश्यति भर्तुरम्बा
किंवाऽऽगमिष्यति पतिः सुचिरप्रवासी ॥ १ ॥
कस्येयं तरुणि प्रपा पथिक नः किं पीयतेऽस्यां पयो
धेनूनामथ माहिषं बधिर रे वारः कथं मङ्गलः ॥
सोमो वाऽथ शनैश्चरोऽमृतमिदं तत्तेऽधरे दृश्यते
श्रीमत्पान्थ विलाससुन्दर सखे यद्रोचते तात्पिब ॥ २ ॥

---

१ हृदयमेव तृणकुटीरं तृणगृहम् २ इन्द्रः ३ प्रलयकालिको नर्तकः शिव इति यावत् ४ कृतः ५ उत्पन्नः ६ छलंकर्तुम् ७ अचिकित्स्यः ८ कक्षे पुस्तकधारिणं पान्थं प्रति कस्याश्चित्कामिन्याः स्वाभिप्रायसूचिकोक्तिः औषधप्रश्नेन श्वश्र्वा अन्धत्वं सूचितं प्रोषितस्य पत्युः कदा आगमनं भविष्यतीति प्रश्नेन सोऽपि गृहे नाऽस्तीति सूचितम् ९ कस्येति इयं छलोक्तिः १० पानीयशालिका ११ पयो जलं क्षीरं च १२ जलानि सोमादिवासरश्च. १३ उदकं पीयूषं च.

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ॥
मा संचर मनःपान्थ तत्राऽऽस्ते स्मरतस्करः ॥ ३ ॥
वाणिज्येन गतः स मे गृहपतिर्वार्ताऽपि न श्रूयते
प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता ॥
बालाऽहं नवयौवना निशि कथं स्थातव्यमस्मिन्गृहे
सायं संप्रति वर्तते पथिक हे स्थानान्तरं गम्यताम् ॥ ४
यामिन्येषा बहुलजलदैर्बद्धभीमाऽऽन्धकारा
निद्रां यातो मम पतिरसौ क्लेशितः कर्मदुःखैः ॥
बाला चाऽहं मनसिजभयात्प्राप्तगाढप्रकम्पा
ग्रामश्चोरैरयमुपहतः पान्थ निद्रां जहीहि ॥ ५ ॥
भवनमिव मदीयं निर्जनः पान्थ पन्थाः
कुसुमशर इवाऽस्मिंस्तस्करा दुर्निवाराः ॥
गृहप इव पतङ्गोऽप्येष यातो दिगन्तान्
मदनसुभग भूयो नैव गन्तुं समीहे ॥ ६ ॥
रेरे पान्थ कुतो भवान्नगरतो वार्ता न चाऽपि श्रुता
बाढं ब्रूहि युवा पयोदसमये हित्वा प्रियां जीवति ॥
सत्यं जीवतिजीवतीति कथिता वार्ता मयाऽपि श्रुता
विस्तीर्णा पृथिवी जनोऽपि विविधः किंकिं न संभाव्यते ॥ ७
शून्यं वेश्म चिरोषितो गृहपतिर्जाताऽधुना शर्वरी
स्थातु नोचितमत्र गच्छ निभृतं लोकैर्नालक्षितः ॥
इत्थं लोलदृशा ह्यसाध्वभिहितो दासीजनेनाऽध्वगः
स्थित्वा किंचिदिव क्व यामि रजनीप्राप्तेत्युदीर्य स्थितः ॥८॥

---

१ कामिन्याः काय एव दुर्गमो मार्गस्तस्मिन्. २ कुचावेव पर्वतौ ताभ्या दुर्लङ्घ्ये. ३ मन एव पान्थ. ४ स्मर एव तस्करः तत्राऽस्ते अतो मा संचार कुर्विति मानस प्रति बोधः ५ बाणिज्यार्थं परदेशं गतः ६ भर्ता. ७रात्रिः ८ भयंकरगाढान्धकारा. ९ कर्मजन्यैर्दुःखैः श्रान्त इत्यर्थः १० उक्तैर्हेतुभिर्मनसिजात यद्भयं तस्मात्. अथ च कामभयात्. ११ गृहस्वामीव. १२ सूर्यः १३ सत्यम् १४ वर्षाकाले. १५ चिरकालं दूर गतः १६ अदृष्टः १७ उक्त्वा

ग्रामेऽस्मिन् प्रस्तरप्राये[1] न किंचित्पान्थ विद्यते ॥
पयोधरोन्नतिं[2] दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥ ९ ॥
पान्थ मन्दमते किंवा संतापमनुविन्दसि ॥
पयोधरं[3] समाशास्व[4] येन शान्तिरवाप्नुयात् ॥ १० ॥
त्वामिव पथिक प्रियो[5] मे विटपिस्तोमेषु[6] गमयति क्लेशान् ॥
किमितोऽन्यत्कुशलं मे संप्रति यत्पान्थ जीवामि ॥ ११ ॥
किमिति कृशाऽसि कृशोदरि किं तव परकीयवृत्तान्तैः ॥
कथय तथाऽपि मुदे[7] मम कथयिष्यति पान्थ तव जाया ॥ १२ ॥
यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाऽङ्गुलिः ॥
तथा प्रपापालिकाऽपि धारां वितनुते तनुम् ॥ १३ ॥
भोः पान्थ त्वरितोऽसि तिष्ठ निमिषं किंचिद्वदामो वयं
मार्गोऽयं पुरतो द्विधा खलु भवेद्वामेन[8] नो गम्यताम् ॥
तत्राऽऽस्ते सहकारकोमलतरोर्मूले प्रपापालिका
तस्यालोचनवागुरानिपतितो[9] न त्वं पुनर्यास्यसि ॥ १४ ॥

## कामातुरः ।

श्रीः॥असुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम्॥
अभिमुखीष्विव [10]वाञ्छितसिद्धिषु व्रजति [11]निर्वृतिमेकपदे मनः॥१
अपराधी नूनमहं प्रसीद रम्भोरु विरम संरम्भात्[12] ॥
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः॥ २ ॥
कदा कान्ताऽगारे परिमलमिलत्पुष्पशयने
शयानः श्यामायाः कुचयुगमहं वक्षसि वहन् ॥
अये स्निग्धे मुग्धे चपलनयने चन्द्रवदने
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ३ ॥

१ पाषाणमये. २ पयोधराणा मेघाना पक्षे स्तनयोरुन्नतिम् ३ मेघं स्तनं च. ४ सम्यक्प्रार्थना कुरु. ५ कान्तः ६ वृक्षसमूहेषु. ७ हर्षाय ८ वामभागेन. ९ लोचनमेव वागुरा मृगबन्धिनी जालमित्यर्थः १० इष्टसिद्धिषु. ११ संतोषम् १२ कोपात्.

## परस्त्रिसंभोगनिन्दा ।

श्रीः ॥ परस्त्रीस्मरणेनापि कोऽप्यनर्थागमः क्षणात् ॥
दृष्टौ कुलादिहंतारौ हा दुर्योधनरावणौ ॥ १ ॥
अन्यकान्तामिषान्मन्ये कृतान्तोऽवततार ह ॥
नोचेदिन्द्रादिदेवानामपि तद्विपदः कुतः ॥ २ ॥
अपि प्रारब्धदुःखानि प्राणान्तान्यपि देन्हिनः ॥
परं तु नेतरस्त्रीणां यच्छ स्वप्नेपि संस्मृतिम् ॥ ३ ॥
किं जङ्गमेयं मदिरा किंवा विषमहालना ॥
यद्वा ज्वालेव वडवानलस्य तरुणीमिषात् ॥ ४ ॥
परनारी महामारी स्रष्ट्राऽकारि यतस्ततः ॥
किमित्येष पुनर्मृत्युः सर्वज्ञेनापि निर्मितः ॥ ५ ॥

## विषयनिन्दा ।

श्रीः ॥ मूढः कुरुते विषयजकर्दमसंमर्दमर्दनं मिथ्या ॥
दुरदृष्टवृष्टिभिरिदं गेहंगेहं पतत्येव ॥ १ ॥
भार्यारूपविहीना मनसः खेदाय जायते पुंसाम् ॥
अत्यन्तं रूपवती सा परपुरुषैर्वशीक्रियते ॥ २ ॥
यः कश्चित्परपुरुषो मित्रं भृत्योऽथ वा भिक्षुः ॥
पश्यति हिं साभिलाषं विवक्षितोदाररूपवतीम् ॥ ३ ॥
यं कंचित्परपुरुषं स्वभर्तुरतिसुन्दरं दृष्ट्वा ॥
मृगयति न किं मृगाक्षी मनसैव परस्त्रियं पुरुषः ॥ ४ ॥
एवं सुरूपभार्या भर्ता रूपात्प्रतिक्षणं क्षीणः ॥
नो लभते सुखलेशं बलिमिव बलिभुग्बलिष्वेकः ॥ ५ ॥
वनिता नितान्तमज्ञा स्वाज्ञामुल्लङ्घ्य वर्तते यदि सा ॥
शत्रोरप्यधिकतरा पराभिलाषिण्यसौ किमुत ॥ ६ ॥
योषा सुरूपवेषा यदि भर्तृमनोनुकूलमाचरति ॥
पतिदेवता मृता चेत्किं वक्तव्यं तदा हि यः खेदः ॥ ६ ॥

## तारुण्यमदनिन्दा ।

श्रीः ॥ तरुणः प्रायशः सर्वपापसंपादको भवेत् ॥
नहि दारुगतो वन्हिर्दहेद्दारूणि कुत्रचित् ॥ १ ॥
यौवनाम्भोनिधिं को वा तरेज्ज्ञानप्लवं विना ॥
किं कोपशमनं क्वापि दृष्टं शान्त्युदयं विना ॥ २ ॥
मातरं पितरं भ्रातॄन् गुरूनपि युवा क्षिपेत् ॥
अतस्त एव पुरुषा ये धीरास्तरुणा अपि ॥ ३ ॥
तारुण्यमिव सर्वेषां रुग्यादीनामपि मादकम् ॥
मद्यमस्ति तथाप्येतन्नैवात्राविशति स्वयम् ॥ ४ ॥
मन्ये मोहपिशाचस्य स्थानं यौवनदुर्वनम् ॥
यत्र कामादयः क्रूरा यातुधानाः सहस्रशः ॥ ५ ॥

## विरहिजनोक्तिः ।

श्रीः ॥ चन्द्रश्[1]चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते
माल्यं सूचि[2]कुलायते मलयजाऽऽलेपः[3] स्फुलिङ्गायते[4] ॥
रात्रिः कल्पशतायते[5] विधिवशात्प्राणोऽपि भारायते
हा हन्त प्रमदावियोगसमयः संहारकालायते ॥ १ ॥
तारापते कुमुदिनीमनुकूलकान्तां
पादेन पीडयसि कम्पयसि द्विजातीन्[6] ॥
विद्वेषमाचरसि किंच वियोगिलोके
नक्तंचरस्य[7] भवतः करुणा कुतः स्यात् ॥ २ ॥
भो रोहिणि त्वमसि रात्रिचरस्य भार्या
एनं निवारय पतिं सखि दुर्निवारम् ॥

---

१ चण्डकरः सूर्यस्तद्वदाचरति. २ 'सुई' इति लो० ३ चन्दनलेपः ४ अग्निकण इवाचरति ५ सहस्रकल्पमितेवाचरति ६ पक्षिणः पक्षे ब्राह्मणान्. ७ रात्रिचरस्य. पक्षे राक्षसस्य.

जालान्तरेण मम सद्मनि सन्निविष्टः
श्रोणीतटं स्पृशति किं कुरुधर्म एषः ॥ ३ ॥
जटा नेयं वेणीकृतकचकलापो न गरलं[1]
गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम् ॥
इयं भूतिर्नाऽङ्गे[2] प्रियविरहजन्मा धवलिमा[3]
पुरारातिभ्रान्त्या[4] कुसुमशर किं मां व्यथयसि ॥ ४ ॥
रे रे निर्दय[5] दुर्निवार मदन प्रोत्फुल्लपङ्केरुहं[6]
बाणं संवृणु[7] संवृणु त्यज धनुः किं पौरुषं मां प्रति ॥
कान्तासंगवियोगदुःखदहनज्वालाऽवलीढं वपुः
शूराणां मृतमारणे न हि पुरा धर्मः प्रयुक्तो बुधैः ॥ ५ ॥
आस्वाद्य निर्विशेषं विरहिवधूनां मृदूनि मांसानि ॥
करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनि[9] ॥ ६ ॥
परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्याऽन्तःपरिमिलनमप्राप्य हरितम्[10] ॥
इदं व्यस्तन्यासं प्रशिथिलभुजाऽऽक्षेपचलनैः
कृशाङ्ग्याः संतापं वदति नलिनीपत्रशयनम्[11] ॥ ७ ॥
आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताऽग्रमालोहितं
लाक्षारञ्जनवार्तयाऽपि सहसा रक्तं तलं पादयोः ॥
अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदाऽऽवहं
हन्ताऽधीरदृशः[12] किमन्यदलकाऽऽमोदोऽपि[13] भारायते ॥८॥
अयं रेवाकुञ्जैः[14][15] कुसुमशरसेवासमुचितः
समीरोऽयं वेलानवविदलदेलापरिमलः ॥

---

१ विषम् २ भस्म ३ पाण्डुरता ४ शिवभ्रान्त्या ५ निष्करुण ६ विकसितम् ७ उपसहर ८ 'गारा' इति० ९ मेघः निर्गताः रदाः दन्ता यस्य दन्तानामभावादस्थिचर्वणासमर्थः संस्त्यजतीति भावः १० हरिद्वर्णम् ११ शय्या. १२ चञ्चलदृशः १३ केशरञ्जनचूर्णम् १४ नर्मदा. १५ लतागृहम्

इयं प्रावृड् धन्या नवजलदविन्यासचतुरा
पराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ ९ ॥
अङ्गाऽसङ्गि[1]मृणालकाण्डम[2]यते भृ[3]ङ्गाऽऽवलीनां रु[4]चं
नासामौ[5]क्तिकमिन्द्रनीलसरणिं श्वासाऽनिलाद्दाहते ॥
क्षिप्ता सा हि[5]मवालुकाऽपि कुचयोर्धत्ते क्षणं दीप्ततां
त[6]प्ताऽयःपतिताऽम्बुवत्करतले धाराम्बु संलीयते ॥ १० ॥
यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघै[7]रन्तरितः प्रिये तव मुखच्छायाऽनुकारी शशी ॥
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता–
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ११ ॥
बकुलमालिकयाऽपि मया न सा तनुरभूषि तदन्तरभीरुणा ॥
तदधुना विधिना कथमावयोर्गिरिदरीनगरीशतमन्तरम् ॥ १२ ॥
यस्य कान्ताऽस्ति दूरस्था न[8]वा पीनप[9]योधरा ॥
तस्य तापस्य शान्त्यर्थं न वा[10]पी न प[11]योधराः ॥ १३ ॥
प्रस्थानं व[12]लयैः कृतं प्रियसखैर[13]स्रैरज[14]स्रं गतं
धृत्या न क्षणमा[15]सितं व्य[16]वसितं चित्तेन गन्तुं पुरः ॥
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमुत्सृज्यते ॥ १४ ॥
स्वयमप्राप्तदुःखो यः स दु[17]नोति न विस्मयः ॥
त्वं स्मर प्राप्तदाहोऽपि दहसीति किमुच्यते ॥ १५ ॥
हारो नाऽऽरोपितः कण्ठे मया विश्ले[18]षभीरुणा ॥
इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः ॥ १६ ॥

---

१ बिसखण्डम् २ प्राप्नोति. ३ भृङ्गपङ्क्तीनाम् ४ कान्तिम् ५ कर्पूरः ६ तप्तलोहपतितजलवत्. ७ छादितः ८ नवीना ९ पुष्टस्तनी १० 'विहीर' इति लो० ११ मेघाः १२ कङ्कणैः १३ नेत्रोदकैः १४ निरन्तरम् १५ उपवेशनं कृतम् १६ निश्चितम् १७ तापयति १८ वियोगः

विरमतविरमत सख्यो नलिनीदलतालवृन्तपवनेन ॥
हृदयगतोऽयं वह्निर्झटिति कदाचिज्ज्वलत्येव ॥ १७ ॥
बिभेमि सखि संवीक्ष्य भ्रमरीभूतकीटकम् ॥
यद्ध्यानादागते पुंस्त्वे तेन सार्धं रतिः कथम् ॥ १८ ॥
याः पश्यन्ति प्रियं स्वप्ने धन्यास्ताः सखि योषितः ॥
अस्माकं तु गते कान्ते गता निद्राऽपि वैरिणी ॥ १९ ॥
यदि प्रिया वियोगेऽपि रुद्यते दीनदीनकम् ॥
तदिदं दग्धमरणमुपयोगं क्व यास्यति ॥ २० ॥
दिव्यचक्षुरहं जातः सरागेणाऽपि चक्षुषा ॥
इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥ २१ ॥
नूनमयं मे पापः कान्ताविरहो रसायनीभूतः ॥
वर्षसहस्राऽभ्यधिकान्नयामि कथमन्यथा दिवसान् ॥ २२ ॥
केशैः केसरमालिकामपि चिरं या बिभ्रती खिद्यते
या गात्रेषु घनं विलेपनमपि न्यस्तं न सोढुं क्षमा ॥
दीपस्याऽपि शिखां न वा स्वभवने शक्नोति या वीक्षितुं
तापं सा विरहाऽनलस्य महतः सोढुं कथं शक्ष्यति ॥ २३
अपसरति न चक्षुषो मृगाक्षी
रजनिरियं च न याति नैति निद्रा ॥
प्रहरति मदनोऽपि दुःखितानां
बत बहुशोऽभिमुखीभवन्त्यपायाः ॥ २४ ॥
हृदि विलसितो हारो नाऽयं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ॥
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग क्रुधा किमु धावसि ॥ २५ ॥

---

१ विरामं कुरुत. २ रोदनं क्रियते. ३ अतीन्द्रियज्ञानवान्. ४ जीवनसाधकरसायनरूपो जातः ५ बकुलमालिका. ६ वासुकिः

पाणौ मा कुरु चूतसायकममुं मा चापमारोपय
क्रीडानिर्जितविश्वमूर्छितजनाऽऽघातेन किं पौरुषम् ॥
तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षाऽनल-
श्रेणीजर्जरितं मनागपि मनो नाऽद्यापि संधुक्षते ॥ २६ ॥

पादाऽङ्गुष्ठेन भूमिं किसलयरुचिना[1] सोऽपदेशं[2] लिखन्ती
भूयोभूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे[3] ॥
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं[4] वाक्यगर्भं दधाना
यन्मां नोवाच किंचित्स्थितमपि पुरतो मानसं तद्दुनोति[5] ॥ २७ ॥

व्रीडायोगान्नतमुखतया[6][7] सन्निधाने गुरूणां
बद्धोत्कम्पस्तनकलशयोर्मन्युमन्तर्निगृह्य[8][9] ॥
तिष्ठेत्युक्तं किमिव नतया यातमुत्सृज्य बाष्पं
मय्यासन्नश्चकितहरिणीहारिनेत्रत्रिभागः ॥ २८ ॥

निद्राऽर्धमीलितदृशोमदमन्थराणि[10]
नाऽप्यर्थवन्ति न च नाम निरर्थकानि ॥
अद्याऽपि मे मृगदृशो मधुराणि तस्या
न्यस्ताक्षराणि हृदये किमपि ध्वनन्ति ॥ २९ ॥

मुखं तस्याः स्मितस्मेरं[11] किंचिदञ्चलसंवृतम्[12] ॥
मदाऽऽलोकनलोलाक्षं स्मृत्वा मन्ये सुधां[13] मुधा[14] ॥ ३० ॥

इदमाशि[15] शिशिरैरन्तस्तापाद्विवर्णमणीकृतं[16][17][18]
निशिनिशि भुजन्यस्ताऽपाङ्गप्रवर्तिभिरश्रुभिः[19] ॥

---

१ कोमलपल्लवकान्तिना. २ सव्याजम् ३ लोला चञ्चला तारा कनीनिका ययोः ४ लज्जया नम्रम् ५ संतापयति. ६ लज्जा. ७ नम्रमुखत्वेन. ८ क्रोधं. ९ रुद्ध्वा. १० मन्दानि. ११ स्मितेन हास्येन स्मेर प्रसन्नम् १२ वस्त्राञ्चलेन संवृतं अवगुण्ठितम्. १३ अमृतम्. १४ व्यर्थम्. १५ अस्य कनकवलयमित्यनेन संबन्धः १६ उष्णैः अस्याश्रुभिरित्यनेन संबन्धः १७ अभ्यन्तरे विरहजन्यतापाद्धेतोः १८ विवर्णा हीनवर्णा मणयो यस्मिन्नेवविधं कृतम् १९ नेत्रप्रान्तः

अनतिलुलितज्यांघाताऽङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तंस्रस्तं पुनः प्रतिसार्यते ॥ २१ ॥

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ॥
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ २२ ॥

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ॥
दिनोऽवसाने छायेव पुरोमूलं वनस्पतेः ॥ २३ ॥

सखि पतिविरहहुताशः किमिति प्रशमं न याति नयनोदैः ॥
शृणु कारणं नितम्बिनि मुञ्चसि नयनोदकं तु सस्नेहम् ॥ २४ ॥

काचिद्विलोलनयना रमणे स्वकीये
दूरंगते सति मनोभवबाणखिन्ना ॥
त्यक्तुं शरीरमचिरान्मलयाद्रिवायुं
सौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ २५ ॥

उपनिषदः परिपीता गीताऽपि च हन्त मतिपथं नीता ॥
तदपि न हा विधुवदना मानससदनाद्बहिर्याति ॥ २६ ॥

गुरुमध्ये हरिणाक्षी मौक्तिकशकलैर्निहन्तुकामं माम् ॥
रदयन्त्रितरसनाग्रं तरलितनयनं निवारयांचक्रे ॥ २७ ॥

अङ्गानि मे कान्तवियोगवन्हिः
सरक्षतु प्रियतमो हृदि वर्ततेऽसौ ॥
इत्याशया शशिमुखी गलदश्रुवारि-
धाराभिरुष्णमभिषिञ्चति हृत्प्रदेशम् ॥ २८ ॥

---

१ मौर्वीघर्षगजन्यः किणः २ सुवर्णकङ्कणम् ३ वारंवारंगलितम् ४ कोमलाङ्गि ५ तापकाले ६ पत्युर्विरहो वियोग एव हुताशोऽग्निः ७ नेत्रोदकैरश्रुभिरिति यावत् ८ मलयस्थचन्दनेष्वनिशं सर्पनिवासात्तत्संसर्गसंपृक्तस्य वायोः सविषत्वात्तत्पानेन झटिति मे मरणं स्यादिति बुद्ध्या तं पपाविति गूढाशयः ९ ब्रह्मप्रतिपादकाः श्रुतिशिरोभागाः १० अभ्यस्ताः ११ मृत्खण्डैः १२ दन्ताः

वसन्तकुसुमाकरं[1] तदनु पूर्णचन्द्रोदयं[2]
निदान[3]मविचारयन्[4] दिशतु[5] हन्त मारो[6] भिषक्[7] ॥
त्वदीयविरहज्वरो मयि विजृम्भते सांप्रतं
तत्राऽधररसायनं तरुणि देहि दिव्यौषधम् ॥ ३९ ॥
वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि ॥
प्रियसङ्गसुखायैव मुक्ताहार[8]स्तपस्यति ॥ ४० ॥
अहमिह स्थितवत्यपि तावकी त्वमपि तत्र वसन्नपि मामकः ॥
न तनुसंगम एव सुसंगमो हृदयसंगम एव सुसंगमः ॥ ४१ ॥
इह नगरे प्रतिर[9]थ्यं भुजङ्ग[10]सम्बा[11]धरुद्धसंचारे ॥
शृणु सखि साधनमेकं नकुल[12]प्रतिपालनं श्रेयः ॥ ४२ ॥
स्वच्छं सज्जनचित्तवल्लघुतरं दीनाऽर्तिवच्छीतलं
पुत्राऽऽलिङ्गनवत्तथैव मधुरं बालस्य संजल्प[13]वत् ॥
एलोशीरलवङ्गचन्दनलसत्कर्पूरकस्तूरिका-
पाटल्युत्पलकेतकीसुरभितं पानीयमानीयताम् ॥ ४३ ॥
वक्राम्भोजे सर[14]स्वत्यभिवसति सदा शोण[15] एवाऽधरस्ते
पाणिः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः[16] ॥
वाहिन्यः[17] पार्श्वमेताः कथमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेन्तर्मानसेऽस्मिन्कथय नरपते तेऽम्बुपानाऽभिलाषः ॥ ४४

---

१ वसन्तकुसुमाकरनामकमौषधम् पक्षे वसन्तऋतुः स चासौ कुसुमाकरश्च. २ पूर्णचन्द्रोदयाख्य रसायन पक्षे पूर्णो यश्चन्द्रस्तस्योदयम् ३ रोगोत्पत्तिकारणम् ४ विचारमकुर्वन् ५ ददातु. ६ मदनः ७ वैद्यः ८ मुक्तस्त्यक्तः आहारो येन. पक्षे मुक्ताना मौक्तिकाना हारः ९ रथ्यायारथ्यायाम् १० सर्पा जाराश्च ११ समर्दः (दाटी गर्दी) इति लो० १२ नकुल 'मुगुस' पालन पक्षे न इति पदच्छेदः कुलप्रतिपालन न श्रेय· अत्र द्वितीयचरणे भुजङ्गवासोऽनिरुद्धसचार इत्यपि पाठः अत्र पाठे सर्पाणा पक्षे जाराणा च निवासः न निरुद्धोऽनिरुद्धः सचारो यस्यैवविध इति १३ भाषणवत् १४ वाणी नदीविशेषश्च. १५ आरक्तः नदविशेषश्च. १६ मुद्राभि. सहितः अब्धिश्च. १७ सेना नद्यश्च.

प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः ॥
संप्रत्ययोग्यास्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥४५
करा हिमांशोरपि तापयन्तीत्येतत्प्रिये चेतसि नैव शङ्क्यम् ॥
वियोगतप्तं हृदयं मदीयं तत्र स्थितां त्वां समुपैति तापः ॥४६

कान्तां दृष्ट्वा चरणयुगलक्षालनाय प्रवृत्ता-
मस्मिन् राष्ट्रे श्रियमिति वचः पो[1]पठीति प्रयत्नात् ॥
देवस्यत्वेति च पुनरसौ वीटिकायाः[2] प्रदाने
जामाता ते जडमतिरयं छान्दसः[3] किं करोमि ॥ ४७ ॥

क्व प्रस्थितासि करभोरु घने[4] निशीथे[5]
प्राणाऽधिपो वसति यत्र निजः प्रियो मे ॥
एकाकिनी वद कथं न बिभेषि बाले
नन्वस्ति पुङ्खित[6]शरो मदनः सहायः ॥ ४८ ॥

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्ट[7]रागोऽधरो
नेत्रे दूरमनञ्जने[8] पुलकिता तन्वी तवेयं तनुः ॥
मिथ्यावादिनि दूतिबान्धवजनस्याऽज्ञातपीडाऽऽगमा
वापीं स्नातुमितो गताऽसि न पुनस्तस्याऽधमस्याऽन्तिकम् ४९

कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते
कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव सः ॥
इति सरभसध्वस्तप्रेम्णि व्यपेत[9]घृणे स्पृहां
पुनरपि हतव्रीडं चेतः[10] करोति करोमि किम् ॥ ५० ॥

पुराभूदस्माकं प्रथममविभिन्ना[11] तनुरियं
ततो नु त्वं प्रेयानहमपि हताशा प्रियतमा ॥
इदानीं नाथस्त्वं वयमपि कलत्रं[12] किमपरं
मयाऽप्तं प्राणाना [13]कुलिशकठिनानां फलमिदम् ॥ ५१ ॥

---

१ अतिशयेन पुनः पुनर्वा पठति. २ ताम्बूलस्य. ३ वैदिकः स्वच्छन्दानुवर्ती वा. ४ निविडे. ५ अर्धरात्रे. ६ पुङ्खिताः शरा येन. ७ क्षालितः रागो रक्तिमा यस्य ८अञ्जनरहिते. ९त्यक्तकरुणे. १० मनः ११ एका १२कुटुम्बम्. १३ वज्रवत्कठोराणा.

स्मर्तव्याऽहं त्वया कान्त न स्मरिष्याम्यहं तव ॥
स्मरणं चेतसो धर्मस्तच्चेतो भवता हृतम् ॥ ९२ ॥
स्मर्तव्या वयमिन्दुसुन्दरमुखि प्रस्तावतोऽपि प्रियाः
सत्यं नाथ यदि प्रदास्यति विधिर्जातिस्मरत्वं मम ॥
एकस्मिन्नपि जन्मनि प्रियतमे जातिस्मरत्वं कथं
प्राणाः पान्थ समं त्वयैव चलिताः काऽद्याऽपि जन्मैकता ॥ ९३
गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ॥
ममाऽपि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ ९४ ॥
सहिष्ये विरहं नाथ देह्यदृश्याञ्जनं मम ॥
यदक्तनेत्रां कन्दर्पः प्रहर्तुं मां न शक्ष्यति ॥ ९५ ॥
अनलस्तम्भनविद्यां सुभग भवान्नियतमेव जानाति ॥
मन्मथशराग्नितप्ते हृदि मे कथमन्यथा वससि ॥ ९६ ॥
मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्छिता ॥
बुद्धा[3] वक्ति प्रियं दृष्ट्वा किं चिरेणाऽऽगतो भवान् ॥

## सूर्यास्तवर्णनम् ।

श्रीः ॥ पृथुगगनकबन्धस्कन्धचक्रं किमेत-
त्किमु रुधिरकपालं कालकापालिकस्य ॥
कललभरितमन्तः किं नु तार्क्ष्योऽण्डखण्डं
प्रजनयति वितर्कं सान्ध्यमर्कस्य बिम्बम् ॥ १ ॥
अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ॥
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ २ ॥
विलोक्य संगमे रागं पश्चिमायां विवस्वतः ॥
कृतं कृष्णं मुखं प्राच्या नहि नार्यो विनेर्ष्यया ॥ ३ ॥

---

१ गोष्ठीप्रसङ्गेन. २ प्रवासगमनम् ३ जागृता. ४ अशिरस्ककलेवरम् ५ काल एव कापालिको भिक्षुः ६ गरुडः ७ अनुरागः प्रीतिस्तद्युक्त पक्षे रक्तिमयुक्तम् ८ बहिर्निष्कासयामास. ९ अतेत गत वसु द्रविण किरणाश्च यस्मात्. १० अपरदिगेव गणिका.

सान्ध्यरागरुधिराऽरुणमारान्निष्पपात रविमण्डलमब्धौ ॥
क्रूरकालकरवालविलूनं वासरस्य सहसैव शिरो नु ॥ ४ ॥

परिपतति पयोनिधौ पतङ्गः सरसिरुहामुदरेषु मत्तभृङ्गः ॥
उपवनतरुकोटरे विहङ्गस्तरुणिजनेषु शनैःशनैरनङ्गः ॥ ५ ॥

कृतोपकारं प्रियबन्धुमर्कमद्राक्ष्म हीनांशुमधःपतन्तम् ॥
इतीव मत्वा नलिनीवधूभिर्निमीलितान्यम्बुरुहेक्षणानि ॥ ६ ॥

नो रविर्न च तमो न तमीशो न द्युतिर्ग्रहगणो न च संध्या ॥
यादृशी प्रथमतः किल सृष्टेस्तादृशीं नु भुवनं श्रियमूहे ॥ ७ ॥

विश्लेषाऽऽकुलचक्रवाकमिथुनैरुत्पक्ष्मभिः क्रन्दितं
कारुण्यादिव मीलितासु नलिनीष्वस्तं च मित्रे गते ॥
शोकेनेव दिगङ्गनाभिरभितः श्यामायमानैर्मुखै-
र्निःश्वासाऽनिलधूम्रवर्तय इवोद्गीर्णास्तमोराजयः ॥ ८ ॥

शुचिरिति परितः प्रसिद्धिभाजि प्रकटिततेजासि दुर्जये कृशानौ ॥
निजविभवमुनिकुरम्बमस्तवेला व्यतिकरवान्निदधे सरोजबन्धुः ॥ ९ ॥

अस्तंगतवति सवितारि भर्तरि मधुपं निवेश्य कोशान्ते ॥
कमलिन्योऽपि रमन्ते किमत्र चित्रं मृगाक्षीणाम् ॥ १० ॥

अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्ताऽतिभारः ॥
संध्यामृष्टावशिष्टस्वकरपरिकरस्पष्टहेमारपङ्क्ति-
व्याकृष्याऽवस्थितोऽस्तक्षितिभृति नयतीवैष दिक्चक्रमर्कः ॥ ११ ॥

यातोऽस्मि पद्मनयने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ॥

---

१ खड्गः २ छिन्नम् ३ वियोगाकुलैः ४ निजद्रव्यसमूहं किरणसमूहं च ५ स्थापयामास. ६ सूर्यः ७ सूर्ये. ८ भृङ्गं मद्यपं च ९ सध्याया मृष्टा उपसंहृतास्तेभ्योवशिष्टो य स्वकराणां परिकरः समूहस्तद्रूपास्पष्टा हेमनिर्मितानामराणां पङ्क्तिर्यस्मिंस्तत्. १० दिशा चक्र मण्डलम् रथाङ्गं च

प्रत्यायनामय[1]मितीव सरोरुहिण्याः[2]
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ १२ ॥
उदयतटाऽन्तरितमियं प्राची सूचयति दिङ् निशानाथम्[3] ॥
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ १३ ॥

## तमोवर्णनम् ।

पिदधति[4] तिमिरे[5] समस्तलोकं प्रलयमहाऽब्धिनिभे भृतोच्चनीचे ॥
व्यरुचदुडुगणोर्वलक्षरोचि[6]र्बहुविधफेनसमूहतुल्यरूपः ॥ १ ॥
काकोलं[7] कलकण्ठिका कुवलयं कादम्बिनी[8] कर्दमः
कंसाऽरिः कबरी[9] कृपाणलतिका[10] कस्तूरिका कज्जलम् ॥
कालिन्दी कर्षपट्टिका[11] करिघटा[12] कामाऽरिकण्ठस्थली
यस्यैते करदा[13] भवन्ति सखि तद्वन्दे विनिद्रं तमः ॥ २ ॥
लिम्पतीव तमोऽङ्गानि वर्षतीवाऽञ्जनं नभः ॥
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ ३ ॥
अविज्ञातविशेषस्य सर्वतेजोऽपहारिणः ॥
स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ॥ ४ ॥
चिन्वद्भिरचिकीर्षितानि[14] घटयद्वेतालगोष्ठीसुखं
तन्वानं शवसाधनो[15]द्धतरसं निर्व्याजवीरात्मनाम् ॥
कुर्वत्कामकृशानुतप्तमनसां गुप्ताऽङ्गनासंगमं
दृप्यत्कोकिलकाककण्ठमलिनं ध्वान्तं समुज्जृम्भते ॥ ५ ॥
विरम तिमिर साहसा[16]दमुष्माद्यदि रविरस्तमितः स्वतस्ततः किम्
कलयसि[17] न पुरो महीमहोभि[18]र्द्युतिनिधिरभ्युदयत्ययं शशाङ्कः ॥ ६ ॥

---

१ विश्वासोत्पादनम् २ कमलिन्याः ३ चन्द्रम् ४ तिरोदधति सति. ५ अन्धकारे. ६ धवलकान्तिः ७ विषभेदः ८ मेघपङ्क्तिः ९ केशपाशः १० खड्गलतिका ११ 'कसोटी' ति लोके, १२ गजसमूहः १३ करप्रदा भवन्ति. १४ कर्तव्यकर्माणि. १५ प्रेतसाधनविधिः १६ अयथाबलमारम्भात् १७ पर्याप्त. १८ महद्भिस्तेजोभिः

## प्रभातवर्णनम् ।

अभूत्प्राची पिङ्गा रसपति[1]रिव प्राश्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ॥
क्षणं क्षीणास्तारा नृपतय इवाऽनु[2]द्यमपरा
न दीपा राजन्ते द्रविण[3]रहितानामिव गुणाः ॥ १ ॥

विरलविरलीभूतास्ताराः कलौ सुजना इवा-
ऽप्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनः ॥
मन इव मुनेः सर्वत्राऽपि प्रसन्नमभून्नभो
विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥ २ ॥

पुरुहूतदिगङ्गना[4] प्रसूता रविमुद्दामसुतं चिरादुपेतम् ॥
अलिनो नलिनीदलाद्विमुक्ताः प्रियबाहुद्वयबन्धनान्नवोढाः ॥ ३ ॥

व्रजत्यपरवारिधिं रजतपिण्ड[5]पाण्डुः शशी
न भान्ति जलबुद्बुदद्युतिसपत्निकास्तारकाः ॥
कुरण्टकविपाण्डुरं दधति धामदीपाङ्कुरा-
श्चकोरनयनाऽरुणा भवति दिक् च सौत्रामणी[6] ॥ ४ ॥

दिशिदिशि मृगयन्ते[7] पल्लवग्राम[8]मेते
मुहुरपगतनिद्राः सप्तयो[9] हेषितै[10]र्नः ॥
अयमपि च सरोषैः कामिभिः श्रूयमाणो
नदति[11] मधुरतारं ताम्रचूडो[12] विहङ्गः ॥ ५ ॥

यः सैन्ये स्मरपार्थिवस्य विरहिप्रत्यर्थिना[13]मग्रणी[14]-
ज्योत्स्नानिर्झर[15]मुज्झति स्म जगतां यस्तापनिर्वापणम् ॥

---

१ पारद इव २ उद्योगरहिताः ३ दरिद्राणाम् ४ प्राचीदिक् ५ रौप्यगोलकवत्पाण्डुरः ६ ऐन्द्री प्राचीत्यर्थः ७ शोधयन्ति ८ पल्लवसमूहम् ९ अश्वाः १० 'हिंसणे' इति लोके. ११ शब्दं करोति. १२ कुक्कुटः १३ शत्रूणाम् १४ श्रेष्ठः अग्रेसर इत्यर्थः १५ ज्योत्स्नाप्रवाहम्

सोऽयं तारकनायकः किमपरं शृङ्गार[1]संजीवनं
जातः पुष्पपरागपाण्डुरजरत्कूश्माण्डपिण्डाकृतिः [2] ॥ ६ ॥
कुमुदवनम[3]पश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः[4] प्रीतिमांश्चक्रवाकः ॥
उदयमहिमरोचिर्याति शीतांशुरस्तं
हतविधिललितानां हन्त चित्रो विपाकः ॥ ७ ॥
ललित[5]नयनताराः क्षाम[6]वक्त्रेन्दुबिम्बा
रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्यः ॥
तिमिरमिव दधानाः स्रंसिनः[7] केशपाशा-
नवनिपतिगृहेभ्यो[8] यान्त्यमूर्वारवध्वः[9] ॥ ८ ॥
कान्ते जग्मुषि ताम्रचूडरटितं[10] श्रुत्वा प्रबुद्धा जवा[11]-
त्किंचिद्वासवदिङ्मुखं[12] प्रविकसद्दृष्ट्वा गवाक्षाऽध्वना ॥
संत्रासेन समीरिता प्रियतमप्रेम्णाऽवरुद्धा शनै-
रुत्थानोपनिवेशनानि कुरुते तल्पे मुहुः पांसुला[13] ॥ ९ ॥
निर्यान्त्या[14] रतिवेश्मनः[15] परिणतप्रायां[16] विलोक्य क्षपां[17]
गाढाऽऽलिङ्गनचुम्बनानि बहुशः कृत्वाऽप्यसन्तुष्टया ॥
एकं भूमितले निधाय चरणं तल्पे प्रकल्प्या[18]ऽपरं
तन्वङ्ग्या [19]परिवर्तिताङ्गलतया [20]प्रेयांश्चिरं चुम्बितः ॥१०॥
पद्मिन्याः सकलां विधाय विकलां[21] ताराऽधिपः सं पदं[22]
तत्प्रेयस्युदयोन्मुखे सति रवावुद्दिग्न[23]तामाश्रितः ॥

१ शृङ्गारस्य जीवनौषधम् २ जीर्णकूश्माण्डपिण्डः ३ गतशोभम् ४ घूकः ५ चञ्चलनयनकनीनिकाः ६ क्षामं कृश वक्त्रेन्दुमण्डल यासा ताः ७ शिथिलान्. ८ राजगृहेभ्यः ९ वारस्त्रियः १० कुक्कुटारावम् ११ सम्भ्रमेण. १२ प्राचीमुखम् १३ स्वैरिणी. १४ निर्गच्छन्त्या. १५ केलिमन्दिरात् १६ प्रभातप्रायाम् १७ रात्रिम् १८ निधाय. १९ परिवर्तिता वलिता अङ्गलता अङ्गवल्लिर्यया. २० प्रियतमः २१ हीनाम् २२ शोभाम् २३ खिन्नत्वम्.

तारा: स्वस्य करैर्[1]विकृष्य सहसा गच्छन्नितोऽस्ताचलं
लग्ना: काश्चन ता: प्रभाकरकरे पश्यन् परिम्लायति ॥ ११ ॥
संश्लिष्टा साऽनुरागं स्वकरपरिचयप्राप्तभूरिप्रसादा
या पूर्वाभुक्तपूर्वा रवि[2]करकलितां तामुदीक्ष्याऽमृतांशुः[3] ॥
निस्तेजाः पश्चिमाऽब्धौ प्रविशति हि सतां दुःसहो मानभङ्गः
किं वक्तव्यं सितांशोः स तु सकल[4]तां मण्डलस्याऽपि नेता[5]॥१२॥
उत्सिक्तः[6] कुसुमासवैः कुमुदिनीं राजप्रियां[7] पुष्पिणी[8]–
मालिङ्गन्निशि निर्भयं परिचयं कुर्वन्पुनः पल्लवैः ॥
यावत्पङ्कजसौरभस्व[9]मखिलं गृह्णंल्लघु[10]प्रस्थित–
स्तावत्कल्य[11] उपस्थिते मरुदयं विष्वग्भयाद्धावति ॥ १३॥

## मध्याह्नवर्णनम् ।

स्वेस्वे कर्माणि संनियोज्य सुहृदो भूमीसुरान्[12]मन्त्रिण–
श्चक्रं निर्भयमारचय्य भगवान् संप्राप्तरागोदयः ॥
स्वाऽऽलोकक्षणकादिशीक[13]मधुनोत्खातुं विचिन्वन्निव
ध्वान्तं क्वाऽपि [14]निलीनमम्बरमणि[15]र्व्योमाऽग्रमारोहति ॥१॥
छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं
मूलं याति सरोजलस्य जडता ग्लानेव मीनैः सह ॥
आचामत्यहिमांशुदीधितिरपस्तप्तेव लोकैः समं
निद्रागर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥ २ ॥
उष्णालुः[16] शिशिरे निषीदति तरोर्मूलाऽऽलवाले शिखी[17]
निर्भिद्योपरिकर्णिकारकुसुमान्याशेरते षट्पदाः[18] ॥

---

१ किरणैः २ सूर्यहस्तलग्नाम् ३ चन्द्रः ४ नक्षत्राणां द्विजानां च ५ नायकः ६ मत्तः सपृक्तश्च. ७ चन्द्रप्रियां. नृपप्रिया च. ८ पुष्पयुक्ता रजस्वला च. ९ पङ्कजसौरभ कमलामोदस्तदेव स्वं धनम् १० सत्वरम् ११ प्रभाते. १२ द्विजान्. १३ भयद्रुतम् १४ गुप्तम् १५ सूर्यः १६ उष्णक्लान्तः १७ मयूरः १८ भ्रमराः

तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनिवेशिपञ्जरशुकः क्लान्तो जलं याचते ॥ ३ ॥
पत्रच्छायासु हंसा मुकुलितनयना दीर्घिका[1] पद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ॥
बिन्दूत्क्षेपान् पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः[2] समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः[3] ॥ ४ ॥
स्कन्धान्सिन्धुरयूथ[4]गण्डकषणव्यासक्तदानोदका-
न्सेवन्ते[5] मधुपा[6] महीरुहशिरःपुष्पाणि हित्वा भृशम् ॥
लीयन्ते वलभीकुलाय[7]कुहरे निष्पन्द[8]मेते खगा
जिह्वालीढवधूमुखो मृगगणश्छायासु विश्राम्यति ॥ ५ ॥

## वसन्तवर्णनम् ।

माकन्दच्युतपुष्परेणुपटलीक्लृप्ताऽऽलवालोदरे
मन्दस्यन्दिमरन्दपूरभरिते वातोत्थपुष्पप्लवैः ॥
खेलन्तो ललितं मधोर्गुणगणान् गायन्ति पुष्पन्धयाः[11]
कान्तानामधरे धयन्ति[12] मधुरं सक्तं मधूलीरसम्[13] ॥ १ ॥
उद्यद्भिर्द्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गाऽऽलीविरुतैः कलैरविशदव्यापारलीलाभृतः ॥
घूर्णन्तो[16] मलयानिलाऽऽहतिचलैः शाखासमूहैर्मुहु-
र्भान्ति प्राप्य मधुप्रसङ्गजनितां मत्ता इवाऽमी द्रुमाः ॥ २ ॥

## ग्रीष्मवर्णनम् ।

देशेदेशे जडिम[17]कुरङ्गास्तेजोभल्लैर्दिनकरभिन्ने ॥
धावंधावं[18] प्रहरति राज्ञां धारागेहं[19] शरणमवापुः ॥ १ ॥

---

१ वापी २ किरणैः ३ सूर्यः ४ गजसमूहस्य. ५ लिप्तमदोदकान्. ६ भृङ्ग. ७ नीड-रन्ध्रे. ८ निश्चलम् ९ आम्रः १० समूहः ११ भ्रमराः १२ पिबन्ति १३ मकरन्दम् १४ प्रवालम् ' पोंवळी ' इ० लो० १५ पल्लवैः १६ कम्पन्तः १७ हिमान्येव कुरङ्गा मृगाः १८ धावित्वाधावित्वा १९ ' कारंजें ' इति प्र.

## प्रावृड्वर्णनम् ।

अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा ॥
कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥ १ ॥

यथा रन्ध्रंव्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ॥
यथा विद्युज्जालोल्लसितपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिक तरुखण्डे स्मरदवः ॥ २ ॥

सर्वत्रोद्गवकन्दला वसुमती वृद्धिर्जलानां परा
जातं निष्कमलं जगत्सुमलिनैर्लब्धा घनैरुन्नतिः ॥
सर्पन्ति प्रतिमन्दिरं द्विरसनाः सन्त्यक्तमार्गो जनो
वर्षाणां च कलेश्च संप्रति जयत्येकैव राज्यस्थितिः ॥ ३ ॥

नैतद्वारिदगर्जितं रतिपतिप्रस्थानढक्कारवो
नैते वारिधराः स्रवन्मदजलास्तत्सिन्धुराः प्रोद्धुराः ॥
नैषा विद्युदियं विभाति रुचिरा तच्चन्द्रहासप्रभा
मन्ये मानिनि मानदुर्गमधुना जेतुं किमायात्यसौ ॥ ४ ॥

## शरद्वर्णनम् ।

धन्याः शरदि सेवन्ते प्रोल्लसच्चित्रशालिकान् ॥
ग्रामादान् स्त्रीसखाः पौराः केदारांश्च कृषीवलाः ॥ १ ॥

नमिताः फलभारेण नमिताः शालमञ्जरीः ॥
केदारेषु हि पश्यन्तः के दारेषु विनिस्पृहाः ॥ २ ॥

## हेमन्तवर्णनम् ।

हेमन्ते वहुदोषाऽऽढ्ये द्वौ गुणौ सर्वसंमतौ ॥
अयत्नशीतलं वारि सुरतं स्वेदवर्जितम् ॥ १ ॥

अलं हिमानीपरिदीर्णगात्रः समापितः फाल्गुनसंगमेन ॥
अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा भीष्मो महात्माऽजनि माघतुल्यः॥२

हेमन्ते पथिकजनाः प्रियाविमुक्ता लोकानां गृहबहिरङ्गणे शयानाः॥
कन्दर्पोऽऽकुलमनसां निशासु तेषां शीतं किं लगति जगत्प्रकम्पकारि
हेमन्ते हिमकरबिम्बचारुमुख्या रामाया मृदुभुजपञ्जरे शयानाः ॥
ये कालं परमसुखं नयन्ति तेषां शीतं किं लगति जगत्प्रकम्पकारि ४

अद्य शीतं वरीवर्ति सरीसर्ति समीरणः ॥
अपत्नीको मरीमर्ति तरीतर्ति कुचोष्मवान् ॥ ५ ॥
हसन्तीं च हसन्तीं च हसन्तीं वामलोचनाम् ॥
हेमन्ते ये न सेवन्ते ते नरा दुःखभागिनः ॥ ६ ॥

## समस्यापूरणम् ।

श्रीः ॥ [1]चेतोहरा [2]युवतयः स्वमनोऽनुकूलाः
सद्बान्धवाः प्रणतिनम्रगिरश्च भृत्याः ॥
गर्जन्ति [3]दन्तिनिवहास्[4]तरलास्तुरङ्गाः
[5]संमीलने नयनयोर्नहि किंचिदस्ति ॥ १ ॥

अयि खलु [6]विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां [7]विपाकः॥
हरशिरसि शिरांसि यानि रेजुः शिवशिव तानि लुठन्ति गृध्रपादाः॥२

सहस्रशीर्षापुरुषः सहस्राऽक्षः सहस्रपात् ॥
चलितश्चकितश्छन्नः प्रयाणे तव भूपते ॥ ३ ॥
वागर्थाविव संपृक्तौ [8]शतकोटिप्रविस्तरम् ॥
[9]तुरासाहं पुरोधाय नेमुः सर्वे सुराः शिवौ[10] ॥ ४ ॥
असमाने समानत्वं भविता कलहे मम ॥
इति मत्वा ध्रुवं मानी मृगारिसिंहः पलायते ॥ ५ ॥

---

(१) संमीलने नयनयोरिति चतुर्थपादः समस्या (२) हरशिरसीत्युत्तरार्धं समस्या. (३) चलित इत्युत्तरार्धे समस्या. (४) नेमुरिति चतुर्थपादः आद्यपादत्रय समस्यापूरणं. (५) मृगारिसिंह इति चतुर्थपादः समस्या

१ चेतोहरा मनोहारिण्यः २ युवतयस्तरुण्यः ३ दन्तिनिवहा गजसमूहाः ४ तरलाश्चञ्चलाः ५ समीलने निमीलने. ६ विषमः क्लेशदः ७ विपाकः परिणामः ८ इद क्रियाविशेषणम् ९ तुरासाहमिन्द्रम् १० शिवौ पार्वतीशंकरौ.

दामोदरकराऽऽघातविह्वलीकृतचेतसा ॥
दृष्टं चाणूरमल्लेन शतचन्द्रं नभःस्थलम् ॥ ६ ॥
[1]भीष्मग्रीष्मर्तुसंतप्तशून्यरथ्यान्तरस्थयोः ॥
[2]अन्योन्याऽऽलापसुखिनोर्यूनोश्चन्द्रायते रविः ॥ ७ ॥
सीतासमागमोत्कण्ठा कर्णान्ताऽऽकृष्टधन्वनः ॥
राघवस्य [3]शराऽङ्गारैः समुद्रादग्निरुत्थितः ८ ॥
घटो [4]जन्मस्थानं [5]मृगपरिजनो भूर्जवसनं
वनेवासः कन्दैरशनमपि दुःस्थं वपुरिदम् ॥
अगस्तिः [6]पाथोधिं य[7]दकृत कराऽऽम्भोजकुहरे
[8]क्रियासिद्धिः [9]सत्त्वे वसति महतां नोपकरणे ॥ ९ ॥
अस्माकं [11]जलजीविनां जलमिदं [12]सद्वाजिराजिव्रजैः
पातव्यं पररक्तरक्तमनसां तृप्तिः पतीनां क्षयः ॥
मत्वैवं किल राजराजनृपते [13]त्वज्जैत्रयात्रोत्सवे
मत्सी रोदिति मक्षिका च हसति [14]ध्यायन्ति वैरिस्त्रियः ॥१०॥
स्फुरिते जठरे विष्णोर्नवनीतभुजः शिशोः ॥
मक्षिका पादघातेन कम्पितं भुवनत्रयम् ॥ ११ ॥
रामाऽभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटस्तरुण्याः ॥
सोपानमार्गे प्रकरोति शब्दं ठंठंठठंठंठठठंठठंठः ॥ १२ ॥

---

( ६ ) शतचन्द्रमिति च समस्या. ( ७ ) यूनोश्चन्द्रायतेरविरिति च० स० ( ८ ) समुद्रादग्निरुत्थित इति च० स० ( ९ ) क्रियासिद्धिः सत्त्वे इति चतु० स० ( १० ) मत्सीरोदितीति चतुर्थपादः समस्या. ( ११ ) मक्षिकापादघातेनेति उत्तरार्धे समस्या. ( १२ ) ठठठमिति च० स०

१ भीष्मो दारुणः २ अन्योन्यभाषणेन जाताल्हादयोः ३ शरा एवाङ्गाराः ४ उत्पत्तिस्थानम् ५ मृगा एव परिजन ६ समुद्रम् ७ अकरोत् ८ कार्यसिद्धिः ९ बले १० सामग्र्याम् ११ जलैकजीवितानाम् १२ तुरगपङ्क्तिसमूहैः. १३ विजययात्रोत्सवे १४ चिन्तयन्ति

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ॥
कूजितं भवति मानधनाया हूंहुहूंहुहुंहुहुंहूंहुहुंहूंहू ॥ १३ ॥
श्रुत्वा सागरबन्धनं दशशिराः सर्वैर्मुखैरेकदा
तूर्णं पृच्छति वार्तिकान्सचकितो भीत्या परं संभ्रमात् ॥
बद्धः सत्यमपांनिधिर्जलनिधिः कीलालधिस्तोयधिः
पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ १४ ॥
अम्बा कुप्यति तात मूर्ध्नि विधृता गङ्गेयमुत्सृज्यतां
विद्वन्षण्मुख का गतिर्मम चिरं मूर्ध्नि स्थिताया वद ॥
कोपावेशवशादशेषवदनैः प्रत्युत्तरं दत्तवा-
नम्भोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ १५ ॥
**सर्वस्य द्वे** सुमतिकुमती संपदापत्तिहेतू
**एको गोत्रे** प्रभवति पुमान्यः कुटुम्बं बिभर्ति ॥
**वृद्धो यूना** सह परिचयात्त्यज्यते कामिनीभिः
**स्त्री पुंवच्च** प्रभवति यदा तद्धि गेहं विनष्टम् ॥ १६ ॥
आषाढी कार्तिकी माघी वचा शुण्ठी हरीतकी ॥
गयायां पिण्डदानेन पुण्या श्लेष्महराऽनृणी ॥ १७ ॥

---

(१३) हूंहुंहूमि० च० स० (१४) अपानिधिरित्यादि समस्या. (१५) अम्भोधिरित्यादिचतुर्थपादः समस्या (१६) सर्वस्यद्वे, एकोगोत्रे, वृद्धोयूना, स्त्रीपुंवच्च, इति चत्वारि पाणिनेः सूत्राणि समस्या चतुर्षु पादेषु (१७) पुण्याश्लेष्महराऽनृणीति चतुर्थपादः समस्या

१ केशग्रहसहितम् २ मुखम् ३ चुम्बनं कुर्वति सति ४ कान्ते ५ बलात्कारेण ६ कण्ठे अव्यक्तशब्दः ७ मान एव धन यस्याः मानिन्या इत्यर्थः ८ सेतुबन्ध ९ रावणः १० झटिति. ११ वृत्तान्तज्ञापकान् १२ माता १३ मस्तके १४ त्यज्यताम् १५ क्रोधपरत्वेन १६ षड्भिर्मुखैरित्यर्थः १७ आषाढीकार्तिकीमाघीएकादशीपुण्या वचाशुंठीहरीतकीश्लेष्महरा गयाया पिण्डदानेन अनृणी पितृऋणान्मुक्त इति योजना

काचिद्दिनार्धसमये रविरश्मितप्तां
नीलांशुकाञ्चलनिलीनमुखेन्दुबिम्बाम् ॥
तां तादृशीं समनुवीक्ष्य कविर्जगाद
राहुर्दिवा ग्रसति पर्व विना किलेन्दुम् ॥ १८ ॥

## प्रहेलिका ।

अपदो दूरगामी च साऽक्षरो न च पण्डितः ॥
अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥ १ ॥
वने जाता वने त्यक्ता वने तिष्ठति नित्यशः ॥
पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डितः ॥ २ ॥
गोपालो नैव गोपालस्त्रिशूली नैव शंकरः ॥
अपि चक्री स नो विष्णुर्यो जानाति स पण्डितः ॥ ३ ॥
विजिताऽऽत्मभवद्वेषिगुरुपादहतो जनः ॥
हिमोऽपहाऽमित्रधरैर्व्याप्तं व्योमाऽभिनन्दति ॥ ४ ॥
तरुण्याऽऽलिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ॥
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥ ५ ॥

---

(१८) राहुर्दिवाग्रसतीति चतुर्थपादः समस्या (१) संदेशपत्रम् 'लाखोटा' इति प्राकृते उत्तरं (२) नौका नागवल्लीचेत्युत्तरम् (३) वृषभः (सांड) इत्युत्तरम् (४) सूर्यकिरणतप्तो जनो मेघाच्छन्नमाकाशमभिनन्दतीति तात्पर्यार्थः इत्युत्तरम् (५) कुम्भः (घागर) इत्युत्तरम् ।

१ मध्यान्हे २ सूर्यकिरणसंतप्ताम् ३ नीलवस्त्राञ्चलापहितमुखचन्द्राम् ४ स्वर्भानुः ५ अरण्ये काष्ठरूपेणोत्पन्ना ६ उदके ७ मूल्यं दत्त्वा भोग्या स्त्री गणिका यथा द्रव्यदानेन भोग्या तथेयमपीत्यर्थः ८ धेनूनां पतित्वात्पालकः ९ तप्त-त्रिशूलाङ्कितत्वात्तच्चिन्हवान्. १० तप्तचक्राङ्कितत्वात्तच्चिन्हवान् ११ विना गरुडेन जित इन्द्रस्तदात्मभवोऽर्जुनस्तद्द्वेषीकर्णस्तस्य गुरुः पिता सूर्यस्तस्य प.दैः किरणैस्तप्तः (अमृताहरणसमये गरुडेनेन्द्रो जित इति पुराणेषु प्रसिद्धम्) १२ हिमापहोऽग्निस्तस्य शत्रुभूतमुदकं तद्धरैर्मेघैः १३ तरुण्या आलिङ्गितः (स्त्रियो हि कटिनिहितं कुम्भं हस्तेन वेष्टयन्तीति प्रसिद्धम्) १४ कटिनिहितत्वा-देव नितम्बाश्रितः १५ गुरूणां श्वश्र्वादीनां सन्निधावपि (कक्ष्या कलशं निधाय स्त्रीषु गच्छन्तीषु सतीषु अपूर्णः कलशो ध्वनिं करोतीति प्रसिद्धम्) १६ शब्दं करोति

काचिन्मृगाक्षी प्रियविप्रयोगे गन्तुं निशापारमपारयन्ती ॥
उद्गातुमादाय करेण वीणामुद्ग्रीवमालोक्य शनैरहासीत् ॥६॥

आपाण्डुपीनकठिनं वर्तुलं सुमनोहरम् ॥
करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ ७ ॥

दुर्वारवीर्ये सरुषि त्वयि का प्रसुप्ता
श्यामा सपत्नहृदये सुपयोधरा च ॥
तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये
सैवाऽऽद्यवर्णरहिता वद नाम का स्यात् ॥ ८ ॥

सदारिमध्यैाऽपि न वैरियुक्ता नितान्तरक्ताऽपि सितैव नित्यम् ॥
यथोक्तवादिन्यपि नैव दूतिका का नाम कान्तेति निवेदयाऽऽशु ॥९॥

अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ ॥
निःश्वस्य रोदिति क्लिष्टा कुतो व्याधकुटुम्बिनी ॥ १०॥

गीत्वा किमपि व्याधः शृङ्गं जग्राह तरुणहरिणस्य ॥
तमथ समीक्ष्योद्यतकरमेणीमपि लज्जिता व्याधी ॥ ११ ॥

---

(६)गीतप्रियोयं मृगो यदि मत्कृतं गीतमाकर्णयितु चन्द्रान्तिःसरेत्तदा चन्द्रो निष्कलङ्को भूत्वा मन्मुखसाम्य लभेत नैतदुचित यतः प्रियविप्रयोगे संतापकरोय हिमांशुर्मच्छत्रुरिति धिया वीणामहासीत् ( ७ ) उ० पक्वबिल्वफल कुचयुगलं च. नासिकाचूर्णनिक्षेपणार्थे वृद्धैरपि बिल्वफल भ्रियते इति प्रसिद्धिः ( ८ ) उ० शस्त्री. आद्यवर्णरहिता स्त्री. हे दुर्वारवीर्ये त्वयि सरुषि सति सपत्नहृदये का प्रसुप्ता. शस्त्री. प्रणतशत्रुसरोजसूर्ये त्वयि तुष्टे सति सपत्नहृदये प्रसुप्ता सैवाद्यवर्णरहिता का स्त्री ( ९ ) उ० सारिका. ( १० ) काचिच्छबरस्त्री स्नुषायाः स्तनौ गुञ्जाफलविभूषितौ दृष्ट्वा मत्पुत्र एतस्यामनुरक्तः क्षीणता गतो गजान्विनिहत्य तत्गण्डस्थलमुक्ताहारैः स्तनौ विभूषयितु नालम् अतोऽनायासलभ्यैर्गुञ्जाफलैर्विभूषयति अतः पराक्रमहीनैतदर्जिताधीनवृत्तेः सर्वस्याऽपि कुटुम्बस्य जीवितसंदेहः स्यात् अतो व्याधकुटुम्बिनी दुःखान्निःश्वस्य रोदिति. (११) शृङ्गदानाय उद्यतकर त हरिण वा च एणी उद्यतकरा समीक्ष्य व्याधस्त्री लज्जिता

१ श्यामवर्णा लोहमयत्वात् अन्यत्र षोडश वार्षिकी. २ सुष्ठु पयः जल धरतीति सुपयोधरा. लोहनिर्मिते शस्त्रे पानी। दीयते इति प्रसिद्धिः पक्षे सुस्तनी ३ रिकारो मध्ये यस्याः ४ सकारेण इता युक्ता ५ ककारः अन्ते यस्याः सारिका ' साळुंकी ' प्रसिद्धा ' सोंगटी ' ति वा प्रसिद्धा. ६ अद्भुतम्.

सर्वस्वापहरो न दस्युकुलजः खट्वाङ्गभृन्नेश्वरो
दोषाऽनिष्टकरो न धर्मनिरतः कीलालपो नाऽसुरः ॥
नृणां पृष्ठपलायनो न पिशुनः शीघ्रंगमो नो हयः
शश्वद्रात्रिचरो न राक्षसगणः कोऽयं सखि ब्रूहि मे॥१२॥

वृक्षाऽग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शूलपाणिः ॥
त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः॥१३॥

एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः ॥
क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः ॥ १४ ॥

अस्थि नाऽस्ति शिरो नाऽस्ति बाहुरस्ति निरङ्गुलिः ॥
नाऽस्ति पादद्वयं गाढमङ्गमालिङ्गति स्वयम् ॥ १५॥

नरनारीसमुत्पन्ना सा स्त्री देहविवर्जिता ॥
अमुखी कुरुते शब्दं जातमात्रा विनश्यति ॥ १६ ॥

दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः ॥
गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति ॥ १७ ॥

न तस्याऽऽदिर्न तस्याऽन्तो मध्ये यस्तस्य तिष्ठति ॥
तवाऽप्यस्ति ममाऽप्यस्ति यदि जानासि तद्वद ॥ १८ ॥

---

इत्यन्वयः मद्गीतसुखितस्त्वं याचकस्य मे शिरोदानं देहीति व्याधः शृङ्गं जग्राह अथ तं हरिणं शिरोदानायोद्यतकरं समीक्ष्य तज्जाया हरिणीमपि पतिभक्त्या निजशिरोदानाय उद्यतकरा समीक्ष्य अयं हरिणो दाता तत्पत्न्यपि दात्री इति हेतोर्विरमेते पशवो न वयं मनुष्या इति लज्जितेऽभिप्रायः ( १२ ) उत्तरं मत्कुणः 'ढेंकूण' इति लोके ( १३ ) उ०-नारिकेरफलम् 'नारळ' इतिलोके (१४) उ० सूचिका. ( सुई ) ( १५ ) उ०- कञ्चुकः ( अगरखा ) ( १६ ) उ०. छोटिका 'चुटकी' तिलोके नरनार्यौ अङ्गुष्ठमध्यमाङ्गुली. ( १७ ) उत्तरं— उपानत् 'जोडा' ( १८ ) उ०— नयनं ( डोळा ).

# छेकापन्हुतिः ।

श्रीः ॥ मधुरस्वना धृतोर्णा[1] मण्याभरणा सुशोभना सुदती[2] ॥
मत्स्कन्धोचितदण्डा भिक्षो दयिताऽस्ति किं न मे वीणा॥१॥

रागी[3] भिनत्ति निद्रां तल्पं न जहाति निष्ठुरं दशति ॥
चतुरे किं प्राणेशो नहिनाहि सखि मत्कुणव्रातः ॥ २ ॥

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया ॥
पतिं बुद्ध्वा सखि ततः प्रबुद्धाऽस्मीत्यपूरयत् ॥ ३ ॥

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ॥
नागरिकः किमु मिलितो नहिनहि सखि हैमनः[4] पवनः ॥ ४ ॥

समये पयोधराणामपतितया नैव शक्यते स्थातुम् ॥
उत्कण्ठिताऽसि बाले नहिनहि सखि पिच्छिलः[5] पन्थाः ॥५

या पाणिग्रहलालिता[6] सुसरला तन्वी सुवंशोद्भवा[7]
गौरी स्पर्शसुखाऽऽवहा गुणवती नित्यं मनोहारिणी ॥
सा केनाऽपि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं
रे भिक्षो तव कामिनी नहिनहि प्राणप्रिया यष्टिका ॥६॥

आदौ गृहीतपाणिः पश्चादारूढजघनकटिभागा ॥
नखमुखलालनसुखदा सा किं रामाऽस्ति नैव भोः पामा[8]॥७॥

रुचिरस्वरवर्णपदा रसभाववती जगन्मनोहरति ॥
तत्किं तरुणी नहिनहि वाणी बाणस्य मधुरशीलस्य ॥ ८ ॥

तन्वी चारुपयोधरा सुवदना श्यामा मनोहारिणी
नीता निष्करुणेन केनचिदहो देशान्तरादागता ॥

---

१ धृतोर्णादिदशा पक्षे धृतोर्णावस्त्रा २ शोभनादन्तायस्याः सा पक्षे हस्तिदन्तनिर्भितालङ्कारवती. ३ अनुरक्तः पक्षे रक्तवर्णः ४ हेमन्तसबन्धी. ५ पङ्किलः ‘ बुळबुळित ’ इति लो. ६ पाणिग्रहो विवाहः पक्षे पाणौ धारणेन लालिता. ७ कुलं वेणुश्च. ८ कण्डूः ‘ खरुज ’ इतिलोके.

उत्सङ्गोचितया तया रहितया किं जीवनाऽपेक्षया
भिक्षो ते दयिताऽस्ति किं नहिनहि प्राणप्रिया तुम्बिका ॥२॥
आर्योता[1] गुरुतः[2] प्रयत्नबलतः[3] प्राप्ता[4] सुमेरुप्रभा[5]
संगोप्यैव रहो विधातुमुचितं यत्सङ्गसंशीलनम् ॥
प्रौढो यद्गुणचारिमा[6] सतु रसीमय्येव[7] लभ्येत चे-
द्भाग्यं भिक्षुकि वल्लभो नहिनहि श्रीजाप्यमाला[8] मम ॥१॥

## कूटश्लोकाः ।

श्रीः ॥ [9]विषं भुङ्क्ष्व महाराज स्वजनैः परिवारितः ॥
विना केन[10] विना नाभ्यां[11] कृष्णाजिनमकण्टकम्[12] ॥ १ ॥
[14]अहिरिपुपतिकान्तातातसंबद्धकान्ता-
हरतनयनिहन्तृप्राणदातृध्वजस्य ॥
सखिसुतसुतकान्तातातसंपूज्यकान्ता-
पितृशिरसि पतन्ती जाह्नवी नः पुनातु ॥ ३ ॥

---

१ समीपे स्थातुं योग्यया. पक्षे अङ्कमारोढुं योग्यया २ आगमनशीलः पक्षे प्राप्ता च ३ इदं प्रयत्नविशेषण पक्षे गुरोः सकाशात् ४ प्रापणशीलः पक्षे प्राप्तवती५ स्वर्णपर्वतप्रभा गौरामित्यर्थः पक्षे शोभनो मरुर्मालोपरिस्थमणिस्तत्प्रभा ६ यस्यगुणाना चारिमा पक्षे गुणस्य=सूत्रस्य चारुत्वं ७ मय्येव रसीमक्षे तुलसीमयी रलयो सावर्ण्यात् ८ श्रीयुक्ता जपे. जपस्य माला ९ विगतः षकारो यस्मात्. १० केन विना ककाररहितम् ११ नाभ्या विना नकारद्वयरहितम् १२ कृष्णाजिनम् अत्र ककारषकारणकारनकाराणा निष्कासने कृ आ जि अ इति स्थिते उभयत्र सन्धौ कृते राज्यम् १३ शत्रुरहिताम् १४ अहिः सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तातः समुद्रः सम्यक् बद्धो येनैतादृशो रामस्तत्कान्ता जानकी तस्या हरो हर्ता रावणस्तत्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमान् स ध्वजे यस्यैतादृशोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतो मदनस्तत्सुतः प्रद्युम्नस्तत्कान्ता उषा तत्तातो बाणासुरस्तस्य सम्यक् पूज्यः शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जान्हवी भागीरथीत्यर्थः

अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः ॥
सीदन्ति मम गात्राणि माघमासेगवा[1] इव ॥ ३ ॥
वायुमित्रसुतबन्धुवाहनाऽरातिभूषणाशिरोऽवलम्बिनी ॥
तज्जवैरिभगिनीपतेः सखा[2] पातु मां कमललोचनो हरिः ॥ ४ ॥
कैति[3] ते कबरीभारः सुमनःसंगात्[4]प्रियेऽति[5]नीलत्वात् ॥
भवति[6] च कलापवत्त्वा[7]न्निर्जरसेव्यः[8] कथं न स्यात् ॥ ५ ॥
अतनु[9]ज्वरपीडिताऽसि बाले तव सौख्याय मतो ममोपवासः ॥
रसं[11]समर्पय वैद्यनाथ नाऽहं भवदावेदितलङ्घने[12]समर्था ॥ ६ ॥
यामि विधा[13]वभ्युदिते पुनरेष्यामीति यदुदितं भवता ॥
जानात्युदन्त[14]मेतं नेदन्तत्त्वेन[15] मुग्धवधूः ॥ ७ ॥
पानीयं पातुमिच्छामि त्वत्तः कमललोचने ॥
यदि दास्यसि[16] नेच्छामि नो दास्यसि पिबाम्यहम् ॥ ८ ॥
यस्य षष्ठी चतुर्थी च विहस्य च विहाय च ॥
अहं कथं द्वितीया स्याद्द्वितीया[17] स्यामहं कथम् ॥ ९ ॥
समरे हेमरेखाऽङ्कं बाणं मुञ्चति राघवे ॥
सरावणोऽपि मुमुचे मध्ये रीतिधरं[18] शरम् ॥ १० ॥

---

१ माघमा 'माघमा कर्कटी प्रोक्ता तदपत्यानि सेगवा' इत्युक्तेः कर्कट्या अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य बहिर्यान्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थः २ वायुमित्रमग्निस्तत्सुतः षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहन मूषकस्तदारातिस्सर्पस्तद्भूषणः शिवस्तच्छिरोऽवलम्बिनीगङ्गा तज्जो भीष्मस्तद्वैरी शिखण्डी तद्भगिनी द्रौपदी तस्याः पतिरर्जुनस्तस्य सखा कृष्णः ३ क इव ब्रम्हेवाचरति कति आचारे क्विप्. ४ सुमनसा पुष्पाणामन्यत्र देवानां सगात् ५ अ इव विष्णुरिवाचरति अति ६ भव इव शिव इवाचरति भवति. ७ कलापो भूषणं तद्वत्त्वात् पक्षे कलापश्चन्द्रस्तद्वत्त्वात्. ८ जरारहितैस्तरुणैः सेव्यः पक्षे निर्जरैर्देवैः सेव्य· ९ महान् पक्षे कामः १० लङ्घनं समीपस्थितिश्च ११ भेषज प्रीतिश्च १२ उपवासे उल्लङ्घने च. १३ दैवे चन्द्रे च १४ वृत्तान्तं उकारान्त च. १५ इद तत्त्वेन सत्यत्वेन तत्वेनेति भिन्न पद इदन्तत्त्वेन इकारान्तत्वेन च. १६ दासी असीति पदच्छेदः १७ सहधर्मिणी. १८ मध्यभागे रीतिः पित्तलं तद्विशिष्ट अथ च मध्ये रीकारविशिष्ट शर शरीरमित्यर्थः

[1]शिलार्पितपदद्वन्द्वा [2]नासाऽर्पितकरद्वया ॥
अभूद्दृच्चकस्तनी नारी कथमेतद्भविष्यति ॥ ११ ॥
[3]सुवर्णस्य [4]सुवर्णस्य [5]सुवर्णस्य च जानकि ॥
प्रेषिता तव रामेण [6]सुवर्णस्य च मुद्रिका ॥ १२ ॥
[7]के [8]शवं पतितं दृष्ट्वा [9]पाण्डवा हर्षनिर्भराः ॥
रुरुदुः [10]कौरवाः सर्वे हाहा केशवकेशव ॥ १३ ॥
[11]अंकुबेरपुरीविलोकनं न [12]धरासूनुकरं कदाचन ॥
अथ तत्प्रतिकारहेतवेऽर्द[13]भयन्तीपतिलोचनं भज ॥ १४ ॥
अयि कान्त [14]पश्यै मेघ नहिनाहि पापं तवाऽतिपुण्यायाः॥
नहिनाहि पश्य [15]पयोधरमपसारय कञ्चुकीमुरसः ॥ १५ ॥
निश्चितं [16]ससुरःकोऽपि न [17]कुलीनः [18]समे मतिः ॥
सर्वथा[19]सुरसं बद्धं [20]काव्यं योनाऽभिनन्दति ॥ १६ ॥
येनाऽकारि [21]पराभूति[22]र्दिनेनायकसूनवे ॥
यद्[23]गोत्रात्मभवाकान्तं तन्[24]महः श्रेयसेऽस्तु वः ॥ १७ ॥

---

१ अधस्ताद्दारुणिशिला. २ नासादारूपरिस्थितम् ३ हेम्नः ४ शोभनाक्षरस्य ५ शोभनवर्णस्य ६ स्तुलस्य ७ के उदके. ८ प्रेतम् ९ मत्स्यविशेषाः अत्र द्रोणो हर्षसमन्वित इत्यपि पाठः द्रोणः 'डोमकावळा' इति प्रसिद्धः अत्राद्यः पाठ एव श्रेयान्. १० काकाः. ११ अनलका विधवेत्यर्थः. १२ मङ्गलकारकम् १३ अनललोचनं शिवम् १४ मेघ अभ्र पक्षे मे अघामिति छेदः अघ पापं. १५ मेघ स्तन च. १६ सुरया सहितः मद्यप इत्यर्थः पक्षे सः सुर इति पदच्छेदः सुरो देवः १७ सत्कुलप्रसूतः पक्षे कौ लीनः १८ समे साधौ अमतिः श्रद्धारहित इति यावत् पक्षे समे विष्णौ मतिर्यस्य सः. तत्पुरुषे कृतीत्यत्र बहुलग्रहणाद्बहुव्रीहावप्यत्र सप्तम्या अलुक् १९ शोभनरसविशिष्टं. बद्ध रचित. पक्षे असुरैः सबद्ध युक्तम्. २० कविकृति पक्षे शुक्रम् २१ पराजय· परा उत्कृष्टा भूतिरैश्वर्य च. २२ कर्णाय सुग्रीवाय यमाय च. २३ गास्त्रायन्ते ते गोपास्तेषामात्मभवा गोपिकास्तासा कान्त मनोहरम् अथ च गोत्रायाः पृथ्व्या आत्मभवा सीता सा कान्ता यस्य तत् अथ च गोत्रस्य हिमालयस्यात्मभवा पार्वती सा कान्ता यस्यतत्. २४ महः श्रीकृष्णाख्य रामाख्य शिवाख्य च.

अनेकसुषिरं वाद्यं कान्तं च ऋषिसंज्ञितम् ॥
चक्रिणा च सदाऽऽराध्यं यो जानाति स पण्डितः ॥१८॥
सुकपरिविन्दः शब्दः सुब्रह्मण्यस्य वाचकः केन ॥
स्तनभरनमिता नारी केनोपायेन रञ्जयत्कान्तम् ॥ १९ ॥
शंकरं पतितं दृष्ट्वा पार्वती हर्षनिर्भरा ॥
रुरुदुः पन्नगाः सर्वे हाहा शंकरशंकर ॥ २० ॥
अट्टशूला जनपदाः शिवशूला द्विजातयः ॥
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥ २१ ॥
अधुना मधुकरपतिना गिलितोऽप्यर्यपंकारदम्पती येन ॥
त्रातः स पालयेत्त्वां त्रिकाररहितो विनायको लक्ष्म्याः ॥२२॥
कुन्दकुञ्जममुं पश्य सरसीरुहलोचने ॥
अमुना कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ॥ २३ ॥
राजन् कमलपत्राक्ष तत्ते भवतु चाऽक्षयम् ॥
आसादयति यद्रूपं करेणुः करणैर्विना ॥ २४ ॥

---

( १९ ) इयं वहिर्लापिका. अत्र प्रश्नद्वयस्यैकमुत्तरं उपरिविहरणेनेति. आद्ये सुकपरिविन्दशब्दे उ प रि वि इत्येतेषां वर्णानां हरणेन निष्कासनेन स्कन्द इति शब्द. सुब्रह्मण्यस्य षडाननस्य वाचको भवति द्वितीये उपरिविहरणेनेत्यस्य विपरीतरतेनेत्यर्थः

१ विल २ वकारः आद्यो यस्य. ३ ककारः अन्ते यस्य. ४ सर्पेण उत्तरं वल्मीकम् ५ शङ्करः श्वेतचन्दनः ६ पर्वतवासिनी स्त्री भिल्ली. ७ अट्टमन्नमिति प्रोक्तं शिवो वेद उदाहृतः, केशो भगमिति प्रोक्तं शूलो विक्रय उच्यते ८ अपगतः धुकारो यस्मात् तेन ९ मधुकरपतिर्मकरपतिस्तेन. १० पकारशून्यो दम्पती दन्तीत्यर्थः ११ त्रि इत्यक्षरेण रहितः विनायकः नायक इत्यर्थः १२ अमुना मुकाररहितेन १३ करेणु करणैर्विना क् र् ण् एतत् व्यञ्जनत्रयं विना यद्रूपमासादयति प्राप्नोति तत्तेऽक्षय भवत्वित्यन्वयः उक्तव्यञ्जनत्रयरहितं अ ए उः इति स्वरत्रयं तत्र अ ए इत्यत्र वृद्धौ ऐ उ. इत्यत्र आयादेशे आयुरिति सिद्धम्

स्तनमण्डलमाश्रित्य नखस्य वरयोषिताम्
कदाकर्णयते गीतं रमया सह रङ्गराट् ॥ २५ ॥
उपरिगतं हि सवर्णं हृत्वा करतो ददासि रन्तुं मे ॥
धन्यः सरोजयुगलं त्यक्त्वा स्तनयुगमथाऽस्पृशत्कृष्णः ॥ २६ ॥
अच्युतभक्तिवशादिह समभावस्तत्प्रसङ्गेन ॥
सारमतेरभ्युदयति रतिरिति नैवाद्भुतं किंचित् ॥ २७ ॥
मञ्जुलघौ संभावितगुणे क्वचिन्नापदाधारे ॥
अयि सखि तत्रोपपतौ मम चेतो नत्वनीदृशेपत्यौ ॥ २८ ॥
अयि सखि शस्तः सखिवत्पतिरिति किं त्वं न जानासि ॥
शस्तोऽति सखिवदुपपति रित्यालि कथं त्वयाऽपि नाऽबोधि॥२९

(२८)क्वापि विदुषितरा नायिका सखीं प्रति वदति अयि सखि तत्र तस्मिन्नुपप तौ मम चेतः अस्तीति शेषः कीदृशे मञ्जुलघौ मञ्जुः सुन्दरः सचासौ लघुश्चेति विशेषणोभयपदः कर्मधारयः पुनःकी० संभावितगुणे संभाविता गुणाः सौन्दर्यादयो यत्र. क्वचित्कदाचिदपि न आपदाधारे आपद्रहिते इत्यर्थः अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति व्याकरणपक्षे. उपपतौ उपपतिशब्दे मम मनोस्ति. की० मञ्जुला घिसंज्ञा यस्मिन्. संभावितः 'घेर्ङिती' ति गुणो यस्य. ना इति पदस्य आङो नास्त्रियामिति सूत्रविहितस्याऽऽधारे आश्रये अनीदृशघिसंज्ञागुणनादेशरहिते केवले पतिशब्दे. (२९) अयि सखि पतिः सखिवत् शस्तः मित्रवद्विश्वसनीयः इति त्वं कि न जानासि. सखी प्रत्याह

१ नखस्य मण्डलमाश्रित्य हे कद मेघ मा स्तन गर्जित माकुरु यतोरङ्गराट् रङ्गनाथः रमया सहवरयोषितां गीतं आकर्णयते इत्यन्वयः २कृष्णो राधिका पृच्छति उपरिगतं सवर्णं समानवर्णं सरोजयुगलं करतो हृत्वा स्वहस्तेन आहृत्य मे रन्तुं ददासि ततो राधया तस्मिन् दातुं गृहीते सति उवर्णेन परिगतं युक्तं सवर्णरहितं एतादृशं सरोजयुगल उरोजयुगलमेव इति धिया कमलयुगं त्यक्त्वा स्तनयुगलमेव कृष्णोऽस्पृशत्. ३ इह संसारे अच्युतभक्तिवशात् समभावः समत्वं शत्रुमित्रादिषु. तत्प्रसंगेन भक्तिप्रसंगेन सारमतेः श्रेष्ठबुद्धेः पुंसः रतिः प्रीतिः अभ्युदयतीति न किंचिदत्राऽद्भुत, व्याकरण पक्षे भो अच्युतम अच्युता अहीना भा प्रतिभा यस्य क्तिवशात् क्तिप्रत्ययवशात् स प्रसिद्धो मभावः मकारस्याभावो लोपो भवति इति शेषः तत्प्रसंगेन क्तिप्रत्ययप्रसंगेन रमतेर्धातोः सा रतिः अभ्युदयतीत्यपि नाद्भुत रमु क्रीडायामित्यस्माद्धातो. क्तिनि अनुदात्तोपदेशेति मलोपे रतिरिति रूपं सिध्यति.

एको नो विंशतिः स्त्रीणां स्नानार्थं शरयूं गता ॥
विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥ ३० ॥
श्रुत्वा प्रदग्धं तनयं सशोका पुनर्निशम्याऽऽप्तशरीरभावम् ॥
पश्यत्सु देवेषु च धावमाना रमा मुदा शङ्करमालिलिङ्ग ॥ ३१ ॥
रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् ॥
अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक् ३२
गोकर्णराडाभरणं यदीयं यद्गव्यहव्येडजमाददाह ॥
कुंभेनचूडामणिरादिगन्तात् पायादपायादुरगात्मजार्धः ॥ ३३ ॥
त्रैलोक्ये नोपमैतस्याः सखे किमिति भाषसे ॥
अनन्तरा सा नादिर्वा न तृतीयेति मे मतिः ॥ ३४ ॥

---

हे आलि उपपतिः जारः अतिसखिवत् अतिशयितमित्रवत् शरत इति त्वयाऽपि कथं नाऽवोधि. व्याकरणपक्षे. पतिशब्दः शस्तः शस इति शस्त. पञ्चम्यन्तात्तसिः द्वितीयावहुवचनात्परः सखिवत् सखितुल्यरूपो ज्ञेयः नादेशाभावेन कार्यैक्यात्. उपपतिशब्द. शस्तः द्वितीयावहुवचनात्परं अतिसखिशब्दवत् नादेशभाक् (३२) जीविकार्थे चापण्ये इत्यत्र अपण्ये इत्युक्तत्वात् हस्तिकान्विक्रीणीते इत्यत्रेव रामकं, सीतका, लक्ष्मणकं, इतिप्रयोगा एव साधवः ( ३३ ) यदीयं आभरणं गोकर्णराट् गावावेव नेत्रे एव कर्णौ येषा चक्षुःश्रवस इत्यर्थः तेषु राजते इति. यद्गव्यहव्येट् यस्य गवि नेत्रे भवः उत्पन्नः हव्येट् हव्यस्वामी अग्निः अज मदन आददाह. भेनचूडामणिः भाना इनः स्वामी चन्द्र इत्यर्थः स चूडामणिः शिरोरत्नं यस्य. अगात्मजार्धः उः शिवः अपायात् आदिगन्तात् कु पृथ्वी पायात् रक्षतु. ( ३४ ) कश्चित्स्वनायिका स्तौति तं प्रति अन्यः प्रतिभाषते हेसखे एतस्याः त्रैलोक्ये उपमा नास्तीति किमिति कुतो भाषसे यतः सा उपमैव अनन्तरा मध्यवर्णरहिता उमेति यावत्. अथवा सैवोमा नादिः आद्यवर्णरहिता लक्ष्मीरिति यावत् उपमा उपमान अस्तीति भावः तृतीया नास्ति इति मे वुद्धिः ।

१ एकोना इति विंशतेर्विशेषणेन विरोधः एक. ना नरः इति पदच्छेदेन परिहारः २ श्रेष्ठचन्दनम्.

सुवर्णालंकृता कन्या हेमाऽलंकारवर्जिता ॥
सा कन्या विधवा जाता गृहे रोदिति तत्पतिः ॥ ३५ ॥
द्वन्द्वोहं द्विगुरपि चाऽहं मद्गेहे नित्यमव्ययीभावः ॥
तत्पुरुष कर्म धारय येनाऽहं स्यां बहुव्रीहिः ॥ ३६ ॥
अहं च त्वं च राजेन्द्र लोकनाथावुभावपि ॥
बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ॥ ३७ ॥
काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं
सा तन्मूले समयमलिखद्व्यालमस्योपरिष्टात् ॥
गौरीनाथं पवनतनयं चम्पकं चाऽस्यभावं
पृच्छत्यार्यान् प्रति कथमिदं मल्लिनाथः कवीन्द्रः ॥३८ ॥
विलासिनीं काञ्चनपट्टिकायां पाटीरपङ्कैर्विरही विलिख्य ॥
तस्याः कपोले व्यलिखत् पवर्गं तवर्गमोष्ठे चरणे टवर्गम् ॥३९ ॥

---

१ सुष्ठु वर्णेन कान्त्या अलङ्कृतेति विरोधपरिहार. २ विविधा धवाः पतयो यस्याः जारिणीत्यर्थः ३ यतः स्त्रीपुरुषरूपव्यक्तिद्वयात्मकः ४ द्वौ गावौ यस्य 'गोस्त्रियो'रिति ह्रस्वः ५ भावो वस्तुमात्रं अव्ययी व्ययाभाववान् मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थः यद्वा अव्ययीभवनं अव्ययीभावः ६ तत्तस्मात् हे पुरुष येनाहं बहुव्रीहिर्बहुधान्यविशिष्टः स्यां तत्कर्म धारयेत्यन्वयः समासषट्कप्रतिपादनमत्र चित्रम् ७ लोका जना नाथा. स्वामिनो यस्यैवंविधो-ऽहं याचकत्वात्. लोकानां जनानां नाथस्त्वं राजत्वेन पालकत्वात् उत्तरार्धे बहुव्रीहिरित्यस्य बहुव्रीहिप्रतिपाद्यार्थभूत इत्यर्थः तत्पुरुष इत्यस्य तत्पुरुषप्रतिपाद्यार्थभूत इत्यर्थः ८ प्रियनिवासम्. ९ करण्डस्थितपुष्पसौरभ गन्धवाहो हरेदिति तद्रक्षकं सर्पम् १० पुष्पबाणो बाणार्थं हरेदिति तद्वैरिणं शिवम् ११ सूर्यः पुष्प स्वकरैः शोषयेदिति जन्मकाले एव भक्ष्यबुद्ध्या हर्तुं प्रवृत्त भयजननाय हनूमन्तम् १२ तन्मकरन्द भृङ्गो हरेदिति चम्पकमलिखदिति भावः चम्पके भृङ्गा न गच्छन्तीति प्रसिद्धेः १३ चन्दनद्रवैः १४ गल्ले १५ पवर्गस्योष्ठस्थानीयत्वात् ओष्ठाभ्यां तव चुम्बनं करिष्यामीति सूचितम् १६ तवर्गस्य दन्तस्थानत्वात् दन्तैस्तवौष्ठौ खण्डयिष्यामीति सूचितम् १७ टवर्गस्य मूर्धस्थानत्वाद्यदि त्वं रुष्टासि तर्हि त्वां शिरसा नमामीति सूचितम्

काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितुं लिलेख ॥
बाह्वोर्भुजङ्गं हृदि राहुबिम्बं नाभौ च कर्पूरमयं महेशम् ॥ ४० ॥

अपः पिबन् प्रपापालीमनुरक्तो विलोकयन् ॥
अगस्त्यं चिन्तयामास चतुरः सोऽपि सागरान् ॥ ४१ ॥

रामं वानरवाहिनीं पुररिपुं राहुं रवेः सारथिं
कुम्भीगर्भसमुद्भवं मुररिपुं मारस्य मौर्वीरवम् ॥
तन्वी नूतनपल्लवैर्विरचिते शय्यातले शायिनी
सख्या वीजिततालवृन्तपवना बाला मुहुर्निन्दति ॥ ४२ ॥

नेतुः प्रयाणोन्मुखतां समीक्ष्य नक्षत्रमुक्तावलिमस्य कण्ठे ॥
अधारयत्सा स तु वासराणां सख्यापरोऽभूत्सखि कोऽत्र भावः ॥ ४३

त्वद्विरहमसहमाना निन्दति बाला दिवानिशं शम्भुम् ॥
राहुमपि रामचन्द्रं रामानुजमपि च पन्नगारातिम् ॥ ४४ ॥

सर्वज्ञः सन् वदसि बहुधा दीयतेदीयते वै
दाधातूनां भवति सदृशं रूपमेषां चतुर्णाम् ॥

---

(४०) सर्पत्रासभीत्या प्राणाः स्वतो न निर्गमिष्यन्तीत्याशयेन बाह्वोर्भुजङ्गं लिलेख चन्द्रश्च स्वभागतया श्रुतिसिद्धं मृतानां मनोग्रहीतुमागच्छेदित्याशङ्केन हृदि राहुं मन्मथत्रासाय शिवं च लिलेखेति भावः (४१) समुद्रमपि करे चुलकयतो मुनेः सामर्थ्यं मम चेत्स्यात्तर्हि झटिति तृट्शान्त्यभावाच्चिरमेनां पश्यामीति पान्थाभिप्रायः यदि सागराः सन्निहिताः स्युस्तदानवरतं जलधारां विसृजन्ती चिरमेतद्दर्शनसुखमनुभवेयमिति प्रपापाल्यभिप्रायः (४२) कोकिलरक्षककाकावशेषकत्वाद्रामं मलयाद्र्यवशेषणाद्वानरवाहिनीं मन्मथावशेषणात्पुररिपुं चन्द्रावशेषणाद्राहुं रवेः शीघ्रमस्ताद्रिप्रापणेन रात्रिसंपादनादनूरुं चन्द्रोत्पादकसमुद्रावशेषणादगस्त्यं मन्मथोत्पादनान्मुररिपुं निनिन्देति भावः कोकिलादीनां कामोद्दीपकत्वं रसशास्त्रे प्रसिद्धम् (४३) नक्षत्रमालाधारणेन नक्षत्रोदयवेलायामागमनं कर्तव्यमिति तया सूच्यते वासरसंख्याकरणेन सप्तविंशतिदिनमध्य एव मयाऽऽगम्यत इति तेन सूचितम् (४४) मन्मथावशेषणाच्छम्भुं चन्द्रावशेषणाद्राहुम् मलयाद्र्यवशेषणाद्रामचन्द्रं मन्मथजनकत्वाद्बलरामानुजं वायुभक्षिसर्पहननात्पन्नगारातिं गरुडं निन्दितवतीति भावः

द्वौ दानार्थौ भवति च तथा पालने खण्डने वा
नो जानीमः कथयति भवान् कस्य धातोः प्रयोगम् ॥ ४५ ॥

ब्रह्म नान्तमपि क्लीबं मनः सान्तं न पश्यति ॥
किं चित्रं लोकजनकं वाक् कान्ता नैत्यकान्तकम् ॥ ४६ ॥

## क्रियागुप्तकारकगुप्तादि ।

प्रातः प्रातः समुत्थाय द्वौ मुनी च कमण्डलू ॥
अत्र क्रियापदं वक्तुमवधिर्ब्रह्मणो वयः ॥ १ ॥

ललाटतिलकोपेतः कृष्णः कमललोचनः ॥
गोकुलेऽत्र क्रियां वक्तु यो जानाति स पण्डितः ॥ २ ॥

पम्पासरसि रामेण सस्ने हंसविलासया ॥
सीतया किं कृतं सार्धमत्रैवोत्तरमीक्ष्यताम् ॥ ३ ॥

राजन्नैव घनश्याम निस्त्रिंशाऽऽकर्ष दुर्जय ॥
आकल्पं वसुधामेनां विद्विषो द्यै रणे बहून् ॥ ४ ॥

कान्तया कान्तसंयोगे किमकारि नवोढया ॥
अत्रापि चोत्तरं वक्तुमवधिर्ब्रह्मणो वयः ॥ ५ ॥

---

(४५) त्वं सर्वज्ञः सन् बहुधा वारंवारं दीयते दीयते इति वदसि दीयते इति रूपं चतुर्णामपि दा धातूना सदृशं भवति तन्मध्ये द्वौ दानार्थौ दाण दाने डुदाञ् दाने इति एकः पालने देङ् रक्षणे इति. एक· खण्डने दोऽवखनेइति. एतन्मध्ये भवान् कस्य धातो प्रयोगं कृत्वा वदति तं न जानीमः (४६) न विद्यते अन्तो यस्य तन्नान्तम् अथ च नकारान्तं ब्रह्म अन्तेन सहितं सान्त अथ च सकारान्तं सान्त मनो नान्त ब्रम्ह न पश्यतीति युक्तमेव. ककारोन्ते यस्याः अथ च कान्ता रमणी अकस्य दुःखस्यान्तकं नाशक अथ च ककारान्तं न भवतीत्यकान्तक स्वार्थे कः स्वय कान्ता वाक् अकान्तकमपि लोकजनकत्वात्कान्त ब्रह्म नैतीति चित्रमिति भावः

१ प्रात इति क्रिया प्रा पूरणे लट् प्रथमपुरुषद्विवचनम् २ ललाट, लट् वाल्ये. लिट् ३ सस्ने, ष्णा शौचे. कर्मणि लिट्. ४ अव, अव रक्षणे. ५ द दोऽवखण्डने. लोट् ६ अत्रापि त्रपूष् लज्जाया कर्मणि लुङ्.

आगत: पाण्डवा: सर्वेऽदुर्यो धनसमीहया ॥
तस्मै गांच सुवर्णं च रत्नानि विविधानि च ॥ ६ ॥
दामोदराय पुण्यात्मन्पुष्पमूलफलान्यपि ॥
अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ ७ ॥
विराटनगरे राजन् कीचकादुपकीचकम् ॥
अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ ८ ॥
कान्तं विना नदीतीरं मदमालोक्य केकिनी ॥
अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ ९ ॥
अम्लानपङ्कजा माला कण्ठे रामस्य सीतया ॥
मुधा वुधा भ्रमन्त्यत्र प्रत्यक्षेपि क्रियापदे ॥ १० ॥
नारसिंहाऽऽकृतिं वीक्ष्य वने मत्तमतङ्गजः ॥
अत्र क्रिया पदं गुप्तं मर्यादा दशवार्षिकी ॥ ११ ॥
सन्ध्यावन्दनवेलायां तडागे च द्विजोत्तमैः ॥
अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १२ ॥
गौरीनखरसाद्दश्यश्रद्धया शशिनं दधौ ॥
इहैव गोप्यते कर्ता वर्षेणाऽपि न लभ्यते ॥ १३ ॥
अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च ॥
ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ १४ ॥

---

( ६ ) धनसमीहया धनेच्छया य आगतस्तस्मै सर्वे पाण्डवा गा सुवर्णं विविधानि रत्नानि च अदुरित्यन्वयः ( ७ ) हे दामोदर पुष्पमूलफलानि आय आनय इटकिटकटीत्यत्र प्रश्लिष्टस्य ईधातोराङ्पूर्वस्य लोटो रूपमिद. उपसर्गसमभिव्याहारेण आनयनार्थकत्व.८ विः पक्षी कीचकाद्वेणोः कीचकान्तरमाट वभ्राम ( ९ ) केकिनी मयूरी इरमद मेघज्योतिर्विद्युतामिति यावत्. आलोक्य विनानदीति विशेषेण पुनःपुनर्वा शब्दं करोतीत्यर्थः ( १० ) प्रत्यक्षेपि क्षिप्ता. ( ११ ) गजः सिंहस्याकृतिं वीक्ष्य नार न जगाम. ऋ गतौ. कर्तरि लिट् ( १२ ) हे द्विजोत्तम ऐः आगच्छ. ( १३ ) इः कामस्त हन्तीति इहा शिवः ( १४ ) हे ब्राह्मण कश्चित् इभ्यः धनिकः ।

राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ ॥
अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ १५ ॥

न करोति नाम रोषं न वदति परुषं न हन्त्ययं शत्रून् ॥
रञ्जयति महीमखिलां तथाऽपि धीरस्य वीरस्य ॥ १६ ॥

शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम् ॥
यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ १७ ॥

एहि हे रमणि पश्य कौतुकं धूलिधूसरतनुं दिगम्बरम् ॥
सापि तद्वदनपङ्कजं पपौ भ्रातरुक्तमपि किं न बुध्यते ॥ १८ ॥

शीकराऽऽसारसंवाही सरोजवनमारुतः
प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ १९ ॥

सुभग तवाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः ॥
शमयति कुर्वन् दिवसः पुण्यवतः कस्य रमणीयः ॥२०॥

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी ॥
दुर्वारा मानसं हंसा गमिष्यन्ति घनाऽऽगमे ॥ २१ ॥

अहं महानसा यातः कल्पितो नरकस्तव ॥
मया मांसादिकं भुक्तं भीमं जानीहि मां बक ॥ २२ ॥

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ॥
ददाति भक्तिसंपन्ना पुष्पं सौभाग्यकाम्यया ॥ २३ ॥

---

(१५) राक्षसाना इभ्यः स्वामी रावण. जनकस्य सुता हृत्वा पुरी लङ्का ययौ (१६) अयं पुरुषो रोषं न करोति, परुषं कठोरं न वदति शत्रून्न हन्ति नामेति प्रसिद्ध तथापि अस्य वीरस्य धी अखिला मही रञ्जयति. (१७) यैरनिशं सुकृतं कृतं तेषामेव मन शरदिन्द्वित्यादिविशेषणविशिष्ट देव हरं प्रसादयति. (१८) हे रमणि एहि कौ पथिव्या तुक बाल धूलीत्यादिविशेषणविशिष्टं पश्य कर्म गुप्तम्(१९)पान्थस्त्रीनिःश्वासैर्मांसलः पुष्ट इवेत्युत्प्रेक्षा. शीकरेत्यादिविशेषण विशिष्टो जवनमारुत· वेगवान् वायुः सरः प्रक्षोभयति कर्म गुप्तम् (२०) दिवसः शं सुखं कुर्वन् अयति गच्छति. कर्म गुप्तम् (२१) दुष्टं वाः जल तेन दुर्वारा कलुषितजलवत्त्वेन हेतुनेत्यर्थः हेतुगुप्तं (२२) महानसा महता शकटेन आयातः आगतः नरको मृत्युः करणगुप्तम्. (२३) अम्भोरुहं अये इति पदच्छेद इः का-

प्रशस्त्याशुक्तमार्गस्य तव संमानितां श्रिताः ॥
स्पृहयन्ति न के नाम गुणरत्नालयप्रभो ॥ २४ ॥
शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः ॥
बिभेत्यत्यन्तमलिनो वनेऽपि कुसुमाऽऽकुले ॥ २५ ॥
या कटाक्षच्छटापातैः पवित्रयति मानवम् ॥
एकान्ते रोपितप्रीतिरस्ति सा कमलालया ॥ २६ ॥
विपद्यमानता सिद्धा सर्वस्यैव निरूष्मणः ॥
यथाऽत्र भस्म पङ्क्त्यां च निर्वाणं हन्त्ययं जनः ॥ २७ ॥
तूर्णेव मधुमासेऽस्मिन् सहकारद्रुमञ्जरी ॥
इयमुन्निद्रमुकुलैर्भाति न्यस्तशिलीमुखा ॥ २८ ॥
भा नुर्वै जायते लक्ष्म्या सरस्वत्याऽथ वा मता ॥
अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी ॥ २९ ॥
भवानि शकरोमेशं प्रति पूजापरायणः ॥
कर्तृकर्मक्रियागुप्तं मर्यादा दशवार्षिकी ॥ ३० ॥
कमले कमले नित्यं मधूनि पिबतस्तव ॥
भविष्यति न संदेहः कुष्ठं दोषाकरोदये ॥ ३१ ॥
सर्वज्ञेन त्वया किंचिन्नास्त्यविज्ञातमीदृशम् ॥
मिथ्यावचस्तथा च त्वमसत्यं वेत्सि न क्वचित् ॥ ३२ ॥

---

मस्तस्मै अये कामाय. सम्प्रदानगु० (२४) प्रशस्त्यै उक्तमार्गस्येति पदच्छेदः प्रशस्त्यै कल्याणाय. सम्प्रदानगुप्तम् (२५) अलिनः भ्रमरात्. अपादानगुप्तम् (२६) ए कृष्णे कान्ते भर्तरि. सप्तमीगुप्तम् (२७) विपदि अमानता इति पदच्छेदः निर्गतः ऊष्मा द्रव्यरूपो यस्मात्तस्य अमानता आदराभावः शान्तमूष्मरहितमित्यर्थः सप्तमी गु० (२८) उन्निद्रमुकुला एः इति पदच्छेदः एः कामस्य. (२९) भा कान्तिः नु. मनुष्यस्य. (३०) हे कर उमेश प्रति अनिश पूजापरायणः भव (३१) क अले इतिपदच्छेदः कमिति सुखे. सुख यथास्यात्तथा पिबतः सम्बुद्धिगुप्तिः (३२) सर्वज्ञाना इनः स्वामी तत्सबोधनं. संबुद्धिगुप्तिः

विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति ॥
रुष्टेनाऽपि त्वया वीर शम्भुनाऽरिः समः कृतः ॥ ३३ ॥
पिबतस्ते शरावेण वारि कह्लारशीतलम् ॥
केनेमौ दुर्विदग्धेन हृदये सन्निरोपितौ ॥ ३४ ॥
वटवृक्षो महानेष मार्गमावृत्य तिष्ठति ॥
तावत्त्वया न गन्तव्यं यावन्नाऽन्यत्र गच्छति ॥ ३५ ॥
न मयागोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि ॥
अस्थानरुदितैरेतैरलमालोहिते क्षणे ॥ ३६ ॥

## अन्तर्लापिका।

श्रीः॥का शंभुकान्ता किमु चन्द्रकान्तं कान्तामुखं किं कुरुते भुजङ्गः॥
कः श्रीपतिः का विषमा समस्या गौरीमुखं चुम्बति वासुदेवः ॥१॥
का लोकमाता किमु देहमुख्यं रतेः किमादौ कुरुते मनुष्यः ॥
को दैत्यहन्ता वद वै क्रमेण गौरीमुखं चुम्बति वासुदेवः ॥२॥
व्रजन्ति पद्मानि कदा विकासं प्रिया गते भर्तरि किं करोति ॥
रात्रौ च नित्यं विरहाऽऽकुला का सूर्योदये रोदिति चक्रवाकी॥३॥
संतश्च लुब्धाश्च महर्षिसङ्घा विप्राः कृषिष्ठाः खलु माननीयाः ॥
किंकिं समिच्छन्ति तथैव सर्वे नेच्छन्ति किं माधवदाघयानम् ॥४॥

---

(३३) विषादी खिन्नः पक्षे विषमत्तीति विषादी सदा सर्वदा रोगं व्याधिं न मुञ्चति. पक्षे सदारः सस्त्रीकः अगं शैलं न मुञ्चति. (३४) हे एण मृग कह्लारशीतलं वारि उदकं पिबतः ते हृदये केन दुर्विदग्धेन इमौ शरौ सन्निरोपितौ इत्यन्वयः अत्रापि सम्बुद्धिगुप्तिः. (३५) वटो वबयोरैक्यात् वटो ऋक्षः अच्छभल्लः आवृत्य रुद्ध्वा. सधिगुप्तमेतत्. (३६) नमे आगोरसाभिज्ञं इति च्छेदः मे चेतः आगोरसाभिज्ञं अपराधरसाभिज्ञं नेत्यर्थः. सन्धिगुप्तमेतत् (१) शंभुकान्ता का उ० गौरी. एवमेव अन्यत्र ऊह्यं. भुजगो जारः (४) सन्तः मानं, लुब्धाः धनं, महर्षिसंघाः वनं, विप्राः दानं, कृषिष्ठाः घनं, माननीयाः यानं इच्छन्ति. सर्वेपि माधवे वैशाखे दाघः ऊष्मा तस्मिन् यानं गमनं नेच्छन्ति ।

कः खे चरति का रम्या का जप्या किं विभूषणम् ॥
को वन्द्यः कीदृशी लङ्का वीर मर्कटकम्पिता ॥ ५ ॥
के भूषयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतः श्रीः ॥
किमाह सीता दशकण्ठनीता हा राम हा देवर तात मातः ॥ ६ ॥
रवेः कवेः किं समरस्यसारं कृषेर्भयं किं किमुशन्ति भृङ्गाः ॥
खलाद्भयं विष्णुपदं च केषां भागीरथीतीरसमाश्रितानाम् ॥ ७ ॥
किं कुर्वन्त्युषसि द्विजाः प्रतिदिनं के माननीयाः प्रभोः
का वा साहसिकी निशासु सततं द्यौः कीदृशी वर्तते ॥
कुत्राऽऽस्ते मधु नारिकेरजफले कैः स्यात्पिपासाशमः
संध्यावन्दनमाचरन्ति विबुधानारीभगान्तर्जलैः ॥ ८ ॥
किं तृष्णाकारि कीदृग्रथचरणमहो रौति कः काऽब्धिकाञ्चिः
कोऽपस्मारी भुजङ्गे किमु कलिशमनं त्वार्यसंबोधनं किम् ॥
का सुन्दर्यामपीन्दुः कथमचलभृतः का च सम्बुद्धिरग्रे–
र्बीजं किं काऽवनीजारमणमतिहरा हेमसारङ्गलीला ॥ ९ ॥

---

( ५ ) खे कः चरति. विः पक्षी. रम्या रमा. जप्या ऋक्. विभूषणं कटकं. वन्द्यः पिता. लंका-वीरमर्कटैर्हनुमदादिभिः कम्पिता नाशितेत्यर्थः ( ६ ) हाराः स्तनमण्डलानि भूषयन्ति. उमा-महादेवरता तमातः रात्रितः ( अयं प्रयोगो विचारणीयः ) सीता किमाह हाराम, हादेवर, हातात, हामातः ( ७ ) रवेः सार-भा कान्तिः कवेः सार-गीः समरस्य सार-रथी योद्धा. कृषे. भयं इतिः अनावृष्ट्यादिः भृङ्गाः किं उशन्ति इच्छन्ति-रस खलाद्भय केषा- आश्रितानां विष्णुपद केषा- भागीरथीतीरसमाश्रितानाम् ( ८ ) उषसि द्विजाः प्रतिदिनं कि कुर्वन्ति-सध्यावन्दन. एवमग्रेप्यूह्यम्. ( ९ ) किं तृष्णाकारि-हेम. रथचरण-सारं अराभिः सहितं. को रौति-गली प्रशस्तकण्ठः रौति गायति. अब्धिकाञ्चिः इला पृथ्वी. अपस्मारी-लाली लालावान्. भुजगे कि-गर विष. कलिशमनं सामसान्त्वं 'तह' इति लोके आर्यसबोधन-हे. सुन्दर्या का-हेला लीला. इन्दुः कथ मली मलवान् कलङ्कीति यावत् अचलभृतः सबुद्धिः-साग अगैर्वृक्षैः सहित. अग्रेर्बीज-रं. अवनिजा सीता तद्रमणो रामस्तन्मतिहरा-हेमसारङ्गलीला हेम्नः सुवर्णस्य सारङ्गो मृगस्तस्य लीला.

को निर्दग्धस्त्रिपुररिपुणा कश्च कर्णस्य हन्ता
नद्याः कूलं विघटयति कः कः परस्त्रीरतश्च ॥
कः सन्नद्धो भवति समरे भूषणं किं कुचानां
किं दुःसंगाद्भवति महतां मानपूजापहारः ॥ १० ॥

सीमन्तिनीषु का शान्ता राजा कोऽभूद्गुणोत्तमः ॥
विद्वद्भिः का सदा वन्द्या अत्रैवोक्तं न बुध्यते ॥ ११ ॥

कंसञ्जघानकृष्णः काशीतलवाहिनी गङ्गा ॥
केदारपोषणरताः कंबलवन्तं न बाधते शीतम् ॥ १२ ॥

युधिष्ठिरः कस्य पुत्रो गङ्गा वहति कीदृशी ॥
हंसस्य शोभा का वाऽस्ति धर्मस्य त्वरिता गतिः ॥ १३ ॥

लङ्काभूपनिशाचरो रघुपतिं युद्धे कथं दृष्टवान्
दीनं पाति पितेव यः पशुपतिः कस्तस्य वाहः प्रियः ॥
केनाऽपूर्वफलं नरैः सुकृतिभिः कस्मिन् स्थले भुज्यते
जारा ये भुवि तान् प्रशास्ति कतमो ह्येषामिहैवोत्तरम् ॥ १४ ॥

का पाण्डुपत्नी गृहभूषणं किं को रामशत्रुः किमगस्त्यजन्म ॥
कः सूर्यपुत्रो विपरीतपृच्छा कुन्तीसुतो रावणकुम्भकर्णः ॥ १५ ॥

करोति शोभामलके स्त्रियाः कोऽदृश्या न कान्ता विधिना च कोक्ता॥
अङ्गे तु कस्मिन् दहनः पुरारेः सिन्दूरबिन्दुर्विधवाललाटे ॥ १६॥

भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः ॥
कथं विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् ॥ १७ ॥

---

(१०) त्रिपुररिपुणा को निर्दग्धः- मारः मदनः एवमग्रेपि. दुःसगात् महता किं-मानपुजापहारः मानपूजयोः अपहारः नाश. (११) सीमन्तिनीषु का शान्ता-सीता एवमग्रेपि चरणाद्यन्ताक्षरयोर्मेलनेनोत्तरम् (१२) कृष्णः क पुरुष सजघान मारितवान्-कंस. एवमग्रेपि (१३) चतुर्थपादस्थपदत्रयेण प्रश्नत्रयस्योत्तरं (१४) अत्र पादाद्याक्षरद्वयविपर्यासेन उत्तर यथालङ्काभूपे इत्यत्र कालमित्यादि उत्तरार्धे केनेत्यस्य सुखेनेत्यर्थः (१५) अत्र चतुर्थपादस्थैः पञ्चभि पदैरुत्तर. रावणेन सहितः कुम्भकर्ण. इय विपरीतपृच्छा (१६) चतुर्थपादस्थसिन्दूरबिन्दुरित्यादि पदत्रयेणोत्तरम् (१७) तक्रमित्यादि पदत्रयेण प्रश्नत्रयस्योत्तरम्

क्व वसति लघुजन्तुः किं निदानं हि वान्ते-
झटिति वद पशुं कं लम्बकण्ठं वदन्ति ॥
प्रसवसमयदुःखं वेत्ति का कामिनीनां
तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता ॥ १८ ॥

गच्छन्ति क्वाऽऽजिवह्नौ हुतनिजतनवः का भिनत्ति स्वकूलं
किं स्याद्योज्यं विकल्पे क्रकचनखचयैः किं नृसिंहेन भिन्नम् ॥
कीदृग् दित्याः प्रसूतिः किमनलशमनं का नृपैः पालनीया
को वन्द्यः कः प्रमार्ष्टि त्रिभुवनकलुषं स्वर्धुनीवारिपूरः॥१९॥

कः प्रार्थ्यते मदनविह्वलया युवत्या
भाति क्व पुण्ड्रकमुपैति कथं बताऽऽयुः ॥
क्वाऽनादरो भवति केन च रज्यतेऽब्जं
बाह्याऽस्थि किं फलमुदाहर नालिकेरम् ॥ २० ॥

कस्य मरौ दुराधिगमः कः कमले कथय विरचिताऽऽवासः ॥
कैस्तुष्यति चामुण्डा रिपवस्ते वद कुतो भ्रष्टाः ॥ २१ ॥

पृथ्वीसम्बोधनं कीदृक् कविना परिकीर्तितम् ॥
केनेदं मोहितं विश्वं प्रायः केनाऽऽप्यते यशः ॥ २२ ॥

---

(१८) तिलतुषेत्यादिपदचतुष्टयेन प्रश्नचतुष्टयस्योत्तरम् (१९) आजिवह्नौ समरामग्नौ हुतनिजतनवस्त्यक्तनिजदेहाः क्व गच्छन्ति—स्वः स्वर्गम् स्वकूलं का भिनत्ति—धुनी नदी. विकल्पे किं योज्य—वा इत्यव्ययं. क्रकचनखचयैः करपत्रसदृशनखसमूहै. नृसिंहेन किं भिन्न.—रिपूरः रिपोः उरःस्थल. दित्या' प्रसूतिः कीदृक्—स्वर्धुनी स्वः स्वर्ग धूनयतीति स्वर्धुनी. धूञ्कंपने इतिचौरादेः अचइरिति औणादिक इ प्रत्यय. धूञ्प्रीञोरिति नुगागम'. अनलशमन—वारि नृपैः पालनीया—पू..वन्द्यः अ विष्णु.. त्रिभुवनकलुष स्वर्धुनीवारिपूरः प्रमार्ष्टि (२०) ना, अलिके, अर, इति आद्यप्रश्नत्रयस्य त्रीण्युत्तराणि. रके, अलिना, नालिकेर, इति उत्तरार्धस्थप्रश्नोत्तराणि अलिके भाले, अर शीघ्र. रके क्षुद्रे, बाह्ये अस्थि यस्यैवविधम् (२१) अत्र प्रश्नार्थकसर्वनामवाचकशब्द एवोत्तर. यथा मरौ मरुदेशे कस्य दुरधिगमः दुःखेन प्राप्तिः उ० कस्य उदकस्य एव कः ब्रह्मा. कैः मस्तकैः कुतः पृथिव्याः (२२) पृथ्वीसम्बोधन- को इना कामेन. कविना यशः आप्यते.

कुत्रोदेत्युदयाचलस्य तरणी रम्या गतिः कस्य खे
कान्याभान्ति च किं करोति गणको याष्टिं विभूत्यैति कः ॥
कस्मिन् जाग्रति जन्तवो न च कदा सूते च का कः प्रियः
शृङ्गाऽग्रे तुरगस्य भानि गणयत्यन्धोऽह्नि वन्ध्यासुतः ॥ २३ ॥
विवाहे पुरन्ध्रीजनैर्लिप्यते का न के मानमायान्ति गर्वोन्नता का॥
घने वारिधौ रामतः कम्पते का हरिद्रा दरिद्राः सरिद्रावणश्रीः२४

कस्तूरी जायते कस्मात्को हन्ति करिणां शतम् ॥
किं कुर्यात्कातरो युद्धे मृगात्सिंहः पलायनम् ॥ २५ ॥
अन्यस्त्रीस्पृहयाऽलवो जगति के पङ्क्त्यामगम्या च का
को धातुर्दशने समस्तमनुजैः का प्रार्थ्यतेऽहर्निशम् ॥
दृष्ट्वैकां यवनेश्वरो निजपुरे पद्मानानां कामिनीं
मित्रं प्राह किमादरेण सहसा यारानदीदंशमा ॥ २६ ॥

कस्मिन् शेते मुरारिः क्व नु खलु वसतिर्वायसी को निषेधः
स्त्रीणां रागस्तु कस्मिन् क्व नु खलु सितिमा शौरिसंबोधनं किम् ॥
सम्बुद्धिः काऽहिमांशोर्विधिहरवयसां चाऽपि सम्बुद्धयः का
ब्रूते लुब्धः कथं वा कुरुकुलहननं केन तत्केशवेन ॥ २७ ॥
पुंसः संबोधनं किं विदधति करिणां के रुचोऽग्नेर्द्विषत् किं
का शून्या ते रिपूणां नरवरनरकं कोऽवधीद्रामकं किम् ॥

---

( २३ ) अत्र शृङ्गाग्रे इत्यादिभिरष्टभिः पदैः क्रमेणाष्टावुत्तराणि यथा- उदयाचलस्य कुत्र कस्मिन् प्रदेशे तरणिः. सूर्यः उदेति- शृङ्गाग्रे. एवमग्रेप्यूह्यं. ( २४ ) अत्र चतुर्थपादस्थचतुर्भिः पदैः क्रमेण चत्वारि उत्तराणि (२५) अत्रचतुर्थ- पादस्थैस्त्रिभिः पदैस्त्रीण्युत्तराणि. ( २६ ) अत्र पूर्वार्धस्थप्रश्नचतुष्टयस्य चतुर्थ- पादस्थ यारा नदी दंश मा इत्येतानि चत्वारि उत्तराणि. याराः जारा उत्तरार्ध- स्थपञ्चमप्रश्नस्य हे मित्र एतादृशी दीपकलिका मया कदापि न दृष्टेत्यर्थक यारानदीदंशमेति यावनीभाषया उत्तर. ( २७ ) मुरारिः के उदके शेते. वायसी वसतिः शवे. निषेधः न. स्त्रीणा रागः-नवे. सितिमा श्वेतत्व क- शेके यवन विशेषे. शौरिसंबोधनं- केशव अहिमाशोः सूर्यस्य सम्बुद्धिः—इन. विधिहर- वयसा संबुद्धयः-क्रमेण- क, ईश, वे. लुब्ध. कथ ब्रूते- नेति.

के वा वर्षासु न स्युर्विसमिव हरिणा किं विदीर्णं नखाग्रै-
र्विन्ध्याद्रेः को विसर्पन् विघटयति तरून्नर्मदावारिपूरः ॥ २८ ॥
अस्य कांता तिथिः कांत्या के सेवते न सेवकैः ॥
को मोहयति लोकांस्त्रीन् मामामामीनकेतनः ॥ २९ ॥

## बहिर्लापिका ।

श्रीः ॥ किमिच्छति नरः काश्यां भूपानां को रणे हितः ॥
को वन्द्यः सर्वदेवानां दीयतामेकमुत्तरम् ॥ १ ॥
विराजराजपुत्राऽरेर्यन्नाम चतुक्षरम् ॥
अर्धं वसतु शत्रूणामुत्तरं तव मन्दिरे ॥ २ ॥
कः खे भाति हतो निशाचरपतिः केनाऽम्बुधौ मज्जति
कः कीदृक् तरुणीविलासगमनं किं कार्यते सज्जनैः ॥

---

( २८ ) कश्चिद्राजानं प्रति कवेरुक्तिरियं पुंस सम्बोधन—न., करिणा रुचः शोभा. के विदधति —मदाः, अग्नेर्द्विषत्—वारि. रिपूणा शून्या का-पूः नगरी, नरवरेति सबोधन. नरक असुरं क. अबभीत्-अ विष्णु , रामक रमणीय किं- नर्म. वर्षासु के न स्यु.—दावाः, विसमिव हरिणा किं विदीर्णं-रिपूरः हिरण्यकशिपोरुरःस्थल. विन्ध्याद्रे. को विसर्पंस्तरूंन्विघटयति-नर्मदावारि-पूर.(२९)मा लक्ष्मी., अमा अमावास्या, अमाः अभाग्या', मीनकेतनः मदन । ( १ ) उ० मृत्युञ्जयः अत्र पूर्वार्धस्थप्रश्नद्वयस्य पदद्वयेनोत्तरम् उत्तरार्धस्थ-प्रश्नस्य एकपदेनोत्तरम् ( २ ) वयः पक्षिणस्तेषा राजा गरुडस्तद्राजा विष्णु-स्तत्पुत्रो मदनस्तच्छत्रु. शिवस्तस्य. चतुरक्षरं नाम-मृत्युजय इति. तदर्धं मृत्यु-रिति तव शत्रूणा मन्दिरे उत्तरमर्धं जय इति तव मन्दिरे वसत्विति कस्यचित्पु-रुषस्य राजानं प्रत्याशीर्वादः

पत्रं किं नृपतेः किमर्जुनधनुः को रामरामाहरो
मत्प्रश्नोत्तरमध्यमाऽक्षरपदं यत्तत्तवाशीर्वचः ॥ ३ ॥
प्राप्ते वसन्तसमये वद किं तरूणां किं क्षीयते विरहिणामुरगः किमेति
किं कुर्वते मधुलिहो मधुपानमत्ताः कीदृग्वनं मृगगणास्त्वरितं त्यजन्ति
भागीरथी कथम्भूता कामिनी प्राह किं प्रियम् ॥
एकमेवोत्तरं देहि शास्त्रलौकिकभाषया ॥ ५ ॥
बुधः कीदृग्वचो ब्रूते को रोगी कश्च नास्तिकः ॥
कीदृक् चन्द्रं नमस्यन्ति किं सूत्रं पाणिनेर्वद ॥ ६ ॥
किं त्राणं जगतां न पश्यति च कः के देवताविद्विषः
किं दातुः करभूषणं निरुदरः कः किं पिधानं दृशाम् ॥
के खे खेलनमाचरन्ति सुदृशां किं चारुताभूषणं .
बुद्ध्या ब्रूहि विचार्य सूक्ष्ममतिमंस्त्वेकं द्वयोरुत्तरम् ॥ ७ ॥

---

( ३ ) प्रश्नोत्तराणि—
प्र हे शः
रा मे ण,
मै ना कः,
मं थ रं,
रु चि र,
सा र गः,
गा जी व,
रा व णः

एतदुत्तरमध्यमाक्षरघटितं वाक्यं ( हेमेनाथ चिर जीव ) इतिराजानं प्रत्याशीर्वचन. सारङ्गो गजः ।

( ४ ) अत्र दवेन वनवन्हिना विकल व्याकुलमित्यर्थकेन ( दवविकलम् ) इति समुदितान्तोत्तरे प्रथमाद्यक्षराणामन्त्याक्षरेण योजने पूर्वेषा चतुर्णा प्रश्नानामुत्तराणि भवन्ति. यथा प्रथमे किं भवतीति प्रश्ने दलमिति. एवमेवोत्तरत्र ववि इत्यत्र ववयोः सावर्ण्यात् ( वलं, विलं ) इति फल अव्यक्तमधुरं इति. ( ५ ) ' मलापहा ' इत्युत्तरम् ( ६ ) अर्थवदधातुरप्रत्ययःप्रातिपदिक, बुधः कीदृक्वचोब्रूते अर्थवत् एवमग्रेपि. ( ७ ) अन्धः अन्नं दृग्विहीनश्च. दानवाः दानवारि च दानोदकमित्यर्थः । तमः राहुः अन्धकारश्च । वयः पक्षिणः तारुण्य च. एतानि चत्वारि उत्तराणि प्रत्येकं प्रश्नद्वयस्य.

गता सा किं स्थानं पथि सह तया का स्थितवती
नृपेणेत्थं पृष्टा सखि चतुरदूती स्थितवती ॥
विलोक्याऽलंकारं निजमथ च शाकं नरपतिं
निराकाङ्क्षं चक्रे कथय कथमेतत्प्रभवति ॥ ८ ॥
गतक्लेशाऽऽयासा विमलमनसः कुत्र मुनय–
स्तपस्यन्ति स्वस्थाः सुररिपुरिपोः का च दयिता ॥
कविप्रेयः किं स्यान्नलघुयुतैरष्टगुरुभि–
र्बुधा वृत्तं वर्णैः स्फुटघटितबन्धं कथयत ॥ ९ ॥
उरसि मुरभिदः का गाढमालिङ्गिताऽऽस्ते
सरसिजमकरन्दाऽऽमोदिता नन्दने का ॥
गिरिसमलघुवर्णैरर्णवाख्यातिसङ्ख्यै–
र्गुरुभिरपि कृता का छन्दसां वृत्तिरस्ति ॥ १० ॥
नीचेषु यावनी वाणी का कः स्याच्छुभदो जने ॥
शंभोरावरणं किं कं भजन्ते व्याधयो जनम् ॥ ११ ॥

---

८ कश्चिद्राजा काचिन्नायिका स्वगृहमानयत् ततश्च तद्भर्तारमागतं दृष्ट्वा ता स्वगृहं प्रापयितु दूतीमाज्ञापयति स्म. सा च दूती ता स्वगृह प्रापय्य पुना राजनिकटे आगत्य स्थितवती ता प्रत्याह राजा सा किं स्वस्थान गता ? गतवत्या तया सह पथि मर्गे का स्थितवती. एव राज्ञा पृष्टा चतुरा दूती स्थितवती सती निजमलकार ‘पोह्योची’ति भाषाप्रसिद्ध तथा शाक ‘मेथी’ति भाषाप्रसिद्ध शाकविशेष च अवलोक्य तावन्मात्रेणैव नरपतिं निराकाक्षमुत्तरविषये आकाक्षारहित चक्रे एतदलकारशाकावलोकन कथ प्रभवति राज्ञो नैराकाङ्क्ष्यसंपादने कथ समर्थ भवतीति कथयेति कविप्रश्नः अत्र प्रथमप्रश्नस्य प्राप्तेत्यर्थक पोहोंचीति भाषयोत्तर. द्वितीयप्रश्नस्य तु अहमास्तमित्यर्थक भाषया मेथीत्युत्तरमिति तात्पर्य बोध्यम् ( ९ ) मुनयः कुत्र तपस्यन्तीति प्रश्ने शिखरिणि पर्वते इत्युत्तर सुराणा रिपुर्हिरण्यकशिपुस्तस्य रिपुर्विष्णुस्तस्य दयिता केति प्रश्ने ई लक्ष्मीरित्युत्तरम् कविप्रेयः कवीना प्रियवृत्त किमितिप्रश्ने शिखरिणीत्युत्तरम् ( १० ) मुरभिदः विष्णोरुरसि आलिङ्गिता मा लक्ष्मीः, अलिनी भ्रमरी, मालिनी. इति त्रीण्युत्तराणि क्रमेण ( ११ ) अवे, लाभः, अजिनम्, अवेलाभोजिन, इतिचतुर्णां प्रश्नाना चत्वारि उत्तराणि.

को नयति जगदशेषं क्षयमथ विभराम्बभूव कं विष्णुः ॥
नीचः कुत्र सगर्वः पाणिनिसूत्रं च कीदृक्षम् ॥ १२ ॥
न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते ॥
लादेशानां नवानां च तिङां किं नाम कथ्यताम् ॥ १३ ॥
सततं श्लाघते कस्मै नीचो भुवि किमुत्तमं ॥
कर्तर्यपि रुचादीनां धातूनां किं पदं भवेत् ॥ १४ ॥
कः कर्णाऽरिपिता गिरीन्द्रतनया कस्य प्रिया कस्य तुक्
को जानाति परेङ्गितं विषमगुः कुत्रोद्भूत्कामिनाम् ॥
भार्या कस्य विदेहजा तुदति का भौमेह्नि निन्द्यश्च क-
स्तत्प्रत्युत्तरमध्यमाऽक्षरपदं सर्वार्थसंपत्करम् ॥ १५ ॥
लावण्यं क्व नु योषितां नभसि के संचारमातन्वते
केषामुच्चतरा भवन्ति निनदाः क्व क्रीडतो दम्पती ॥
केषु स्वं प्रकटीचकार भगवान् सीतापतिः पौरुषं
तत्प्रश्नोत्तरमध्यवर्णघटितो देवोऽस्तु वः श्रेयसे ॥ १६ ॥
कः स्यादम्बुदयाचको युवतयः कं कामयन्ते पतिं
लज्जा केन निवार्यतेऽतिनिकटे दासे कथं यावनी ॥

---

( १२ ) यम., अग पर्वतं, धने, यमोगधने. इति चत्वारि उत्तराणि क्रमेण ज्ञेयानि. ( १३ ) परस्मै, पदं, परस्मैपद इति त्रीण्युत्तराणि. ( १४ ) आत्मने, पदं, आत्मनेपद इति त्रीण्युत्तराणि.

( १५ ) उत्तराणि —

| | |
|---|---|
| वा स वः<br>ह र स्य<br>ह्र स्व स्य<br>म ति मान्.<br>म न सि<br>रा म स्य.<br>कु स्तु तिः<br>अ भ्यं गः | एतन्मध्याक्षरैः संजातं पदं वाक्यं ( सरस्वति नमस्तुभ्यमिति. ) अत्र तुकागमो ह्रस्वस्य पिति कृति तुगिति सूत्रेण विहितः अत्र विषमा पञ्चगावो बाणा यस्येति विषमगुः कामः |

( १६ ) उ० वपुषि अण्डजा. भेरीणा एकान्ते रक्षस्सु इति पञ्च प्रश्नोत्तराणि तन्मध्यवर्णघटितः पुण्डरीकाक्षः

भाषा दर्शयतेति वस्तुनि महाराष्ट्री कथं वा भवे-
दाद्यन्ताक्षरयोगलोपरचनाचातुर्यतः पूर्यताम् ॥ १७ ॥
वदेह सुमते मतेर्विलसितेन पृच्छाम्यहं
कुतूहलवशात्परं कपटनाटनान्नैव तु ॥
स्मराकुलितया स्त्रिया रहसि संगतोपि ध्रुवं
युवा परमसुन्दरः किमिति दूरतो वर्जितः ॥ १८ ॥

## सूर्यान्योक्तयः ।

श्रीः ॥ रवेरेवोदयः श्लाघ्यः कोऽन्येषामुदयग्रहः ॥
न तमांसि न तेजांसि यस्मिन्नभ्युदिते सति ॥ १ ॥
खद्योतो द्योतते तावद्यावन्नोदयते शशी ॥
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ २ ॥
तस्यैवाऽभ्युदयो भूयाद्भानोर्यस्योदये सति ॥
विकासभाजो जायन्ते गुणिनः कमलाकराः ॥ ३ ॥
करान् प्रसार्य रविणा दक्षिणाऽऽशाऽवलम्बिना ॥
न केवलमनेनाऽऽत्मा दिवसोऽपि लघूकृतः ॥ ४ ॥
न मीलनाय पद्मानामुदयायाऽल्पतेजसाम् ॥
तमसामवकाशाय व्रजत्यस्तमसौ रविः ॥ ५ ॥
करस्फोटोऽम्बरत्यागस्तेजोहानिः सरागता ॥
वारुणीसंगताऽवस्था भानुनाऽप्यनुभूयते ॥ ६ ॥

---

(१७) दाववासससारङ्गाः । अत्रप्रथमप्रश्नोत्तर सारङ्गः चातकः तत्रान्त्याक्षर लोपपूर्वकं माद्याक्षरयोगे ससारं सबलमिति द्वितीयप्रश्नोत्तरं एवं सर्वत्रोह्यम् (१८) दुष्ट रत यस्य सः रतसामर्थ्याभावाद्वर्जित इत्यर्थः

१ ज्योतिरिङ्गणः (काजवा इति लोके.) २ सूर्ये. ३ किरणान्. पक्षे हस्तान् ४ दक्षिणदिक् पक्षे दक्षिणाया. आशा स्पृहा. ५ आकाशं पक्षे वस्त्र. ६ वरुण-दिक्. पक्षे मद्यविशेषः

यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यत-
स्तस्मिन्भास्वति राहुणा कवलिते लोकत्रयीचक्षुषि ॥
खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृम्भितं
घूकैरुत्थितमाः किमत्र करवै किं किं न कैश्चेष्टितम् ॥ ७॥

पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सार्य नैशं तमः
कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा ॥
मध्याह्ने सरितां पयः प्रविततैरापीय दीप्तैः करैः
सायान्हे रविरस्तमेति विवशः किं नाम शोच्यं भवेत्॥८॥

र्क्षपां क्षामीकृत्य प्रसभमुपहृत्याऽम्बुसरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरा-
स्तडिद्दीपाऽऽलोकैर्दिशिदिशि चरन्तीह जलदाः ॥ ९ ॥

देवो हरिर्वहतु वक्षसि कौस्तुभं त-
मन्यैव काचन पुनर्द्युमणेः प्रतिष्ठा ॥
तत्पादसंगतितरङ्गितसौरभाणि
धत्ते स एव शिरसा सरसीरुहाणि ॥ १० ॥

उद्यन्त्वमूनि सुबहूनि महांसि लोके
चन्द्रोऽप्यलं भुवनमण्डलमण्डनाय ॥
सूर्यादृते न समुदेति न चास्तमेति
येनोदितेन दिनमस्तमितेन रात्रिः ॥ ११ ॥

येनोन्मथ्य तमांसि मांसलघनस्पर्धानि सर्वं जग-
च्चक्षुष्मत्परमार्थतः कृतमिदं देवेन तिग्मत्विषा ॥

---

१ किरणाः चरणाश्च. २ शैलाना राज्ञां च ३ सूर्ये. ४ अस्ते. ५ दिवान्धैः ६ उन्निद्राणि कृत्वा. ७ निशासंबन्धि. ८ रात्रिम् ९ कृशां कृत्वा. १० तडिदेव दीपस्तस्याऽऽलोकाः प्रकाशास्तैः

तस्मिन्नस्तमिते विवस्वति कियान् क्रूरो जनो दुर्जनो
यद्भ्राति धृतिं शशाङ्कशकलालोके प्रदीपेऽथवा ॥ १२ ॥
यातः पूषा भवति महते नोपतापाय यस्मा-
त्कालेनास्तं क इह न गतो याति यास्यन्ति चान्ये ॥
एतावत्तु व्यथयति यदालोकबाह्यैस्तमोभि-
स्तस्मिन्नेव प्रकृतिमहति व्योम्नि लब्धोऽवकाशः ॥ १३ ॥

## चन्द्रवर्णनम् ।

श्रीः ॥ आलोकवन्तः[1] सन्त्येव भूयांसो[2] भास्करादयः ॥
चन्द्रमा एव तु ग्रावद्रावकर्मणि[3] कर्मठः[4] ॥ १ ॥
नक्षत्राणि बहूनि सन्ति परितः पूर्णोदयान्यम्बरे
किं तैः शान्तिमुपैति दीर्घतिमिरं किं वार्धिरुज्जृम्भते ॥
किं स्यादार्तचकोरपारणविधिर्भ्रातः सुधादीधिते
तन्नूनं भुवनैकतापशमनः श्लाघ्यस्तवैवोदयः ॥ २ ॥
निष्पीडितो यद्यपि दैवयोगान्निशाकरश्चाऽपि विधुंतुदेन[6] ॥
तथाऽपि पीयूषविशेषवर्षी सुधाकरः कैरवकाननेषु[7] ॥ ३ ॥
वक्रोऽस्तु बाल्ये तदनु प्रवृद्धः कलङ्कवानस्तु जडोऽस्तु चन्द्रः ॥
महेशमौलौ च पदं दधातु जायेत वन्द्यो विविधोपकारात् ॥ ४ ॥
तारागणाश्चन्द्रमसं भजन्ते न जातु नाथं नलिनाऽऽकराणाम्[8] ॥
एतावता तस्य किमस्ति हानिर्ज्ञाता तयोरन्तरमेष लोकः ॥ ५ ॥
किमत्रेर्नो पुत्रः किमु न हरचूडामणिरसौ
न किं हन्ति ध्वान्तं[9] जगदुपरि किं वा न वसति ॥
यदेतस्यान्तःस्था विलसति लघुर्लक्ष्म[10]कणिका
विधातुर्दोषोऽयं न तु गुणनिधेस्तस्य किमपि ॥ ६ ॥

---

१ प्रकाशवन्तः २ बहवः ३ पाषाणः ४ समर्थः ५ समुद्रः ६ राहुणा. ७ कुमुदवनेषु. ८ नलिनाऽऽकराणा नाथं सूर्यम् ९ अन्धकारम् १० लाञ्छनम्

मारस्य[1] मित्रमसि किं च सुधामयूख
शंभावपि प्रणयितां[2] प्रकटीकरोषि ॥
विश्वासपात्रमसि यद्द्विषतोस्तयोर-
प्येतत्तव प्रकृतिशुद्धतनोश्चरित्रम् ॥ ७ ॥

यस्योदयेनैव दिशां प्रसादस्तापाऽपनोदोऽपि जगत्त्रयस्य ॥
चकोरचञ्चुपुटपारणे तु चन्द्रस्य तस्याऽस्ति कियान्प्रयासः ॥ ८ ॥

ध्माता[3] फालतलाऽनलैः कवलिता कण्ठस्थहालाहलै-
रालीढाऽथ जटाऽटवीविलुठितैराशीविषाणां[4][5] गणैः ॥
छन्ना भस्मभिराहताऽस्थिपटलैः क्लिन्नाऽऽर्द्रचर्माम्बरैः[6]
स्वीयां मुञ्चति माधुरीं हरशिरोरत्नं किमिन्दोःकला ॥ ९ ॥

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना[7] ॥
नेत्राऽऽनन्देन चन्द्रेण माहेन्द्रीदिगलंकृता[8] ॥ १० ॥

पश्योदेति[9] वियोगिनीदिनमणिश्चण्डीशचूडामणि-
स्तारामौक्तिकहारनायकमणिः शृङ्गाररक्षामणिः ॥
प्रौढाऽनङ्गभुजङ्गमस्तकमणिः कन्दर्पसीमन्तिनी
काञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥ ११ ॥

आकाशवापीसितपुण्डरीकं[10] शाणोपलं[11] मन्मथसायकानाम् ॥
पश्योदितं सादरमायताक्षि संध्याऽङ्गनाकन्दुकमिन्दुविम्बम् ॥ १२ ॥

ॐकारो मदनद्विजस्य गगनक्रोडैकदंष्ट्राऽङ्कुर-[12]
स्तारामौक्तिकशुक्तिरन्धतमसस्तम्बेरमस्याऽङ्कुशः ॥

---

१ मदनस्य. २ प्रीतिम् ३ तापिता 'फुकली'. ४ जटारूपा या अटवी अरण्य तस्मिन् विलुठितैः ५ सर्पाणाम् ६ क्लेदयुक्ता. ७ विरहिणीकपोलवत्पाण्डुरेण. ८ प्राची दिक् ९ विरहिणीना सूर्यवत्तापकः १० आकाश एव वापी तस्याः श्वेतकमलम् ११ शाणपाषाणः शस्त्रादितीक्ष्णीकरणार्हः पाषाण इति यावत्. 'साहाण' इतिलोके. १२ वराह

शृङ्गाराऽर्गलकुञ्चिका[1]विरहिणीमर्मच्छिदा कर्तरी
सायं वारवधूनखक्षतमियं चान्द्री कला राजते ॥ १३ ॥

कृष्णवर्णहृदयं सितदीप्तिं दुर्धियः किल कलङ्किनमाहुः ॥
कृष्णवर्णसमुदीरणमात्रादेव यद्गलति दृश्यकलङ्कः ॥१४॥

कलानिधिरवेरियं[2] समुपलभ्य रूपं स्वयं
दिनाऽन्तसमयेऽस्पृशत्सपदि पद्मिनीं रागवान् ॥
धवोऽन्यकरसङ्गमान्मुकुलितेति[3] पूर्वाऽऽकृतिं[4]
समीक्ष्य जहसुः प्रियो ध्रुवमभूदतः पाण्डुरः ॥ १५ ॥

दैवाद्यद्यपि तुल्योऽभूद्भूतेशस्य परिग्रहः ॥
तथाऽपि किं कपालानि तुलां यान्ति कलानिधेः ॥१६॥

अहो नक्षत्रराजस्य साऽभिमानं विचेष्टितम् ॥
परिक्षीणस्य वक्रत्व संपूर्णस्य सुवृत्तता ॥ १७ ॥

हरमुकुटे सुरतटिनी निकटस्थितिलाभतो द्विजेन्द्रेण ॥
अपि गरलं फणिफूत्कृतिरीक्षणतीक्ष्णाऽऽशुशुक्षणिः क्षान्तः॥१८॥

शिरसा धार्यमाणोऽपि सोमः सौम्येन शंभुना ॥
तथाऽपि कृशतां धत्ते कष्टः खलु पराऽऽश्रयः ॥ १९ ॥

नयनमसिनार्दनस्य शंभोर्मुकुटमणिः सुदृशां त्वमादिदेवः ॥
त्यजसि न मृगमात्रमेकमिन्दो चिरमिह येन कलङ्किनं वदन्ति॥२०

वरमेका कला रम्या ययाऽधःक्रियते भवैः ॥
बह्वीभिरपि किं ताभिः कलङ्को यासु दृश्यते ॥ २१ ॥

क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ॥
उपैति मित्रा[10]द्यश्चन्द्रो युक्तं तन्मलिना[11]त्मनः ॥ २२ ॥

---

१ उद्घाटनसाधनम् 'किल्ली' तिलो २ अवेः सूर्यात् ३ पतिः ४ पूर्ववदाकृतिः स्वरूपं यस्य तथाविध प्रथम पद्मिनीदर्शनेन विकृताकृति पश्चात्तन्मुकुलीभावेन निराशतया विकारापगमेन स्वरूपस्थिति प्राप्तमित्यर्थः ५ कैरविण्यः ६ कपालास्थीनि. ७ तृतीयनेत्रस्थितस्तीक्ष्णाग्निः ८ षोडशोभागः चतुःषष्टिकलानामन्यतमा च. ९ रुद्र. ससारश्च १० सूर्यात् पक्षे स्निग्धात् ११ कलङ्किनः

शुक्ले पक्षे शीतरश्मिर्बलीयान् न प्राधान्यं तारकायास्तु दृष्टम् ॥
शक्त्या युक्ते विद्यमानेऽपि कान्ते न प्राधान्यं योषितां क्वाऽपि दृष्टम् ॥

उच्चैः स्थानकृतोदयैर्बहुविधैर्ज्योतिर्भिरुद्यत्प्रभैः
शुक्राद्यैः किममीभिरत्र वितथां प्रौढिं दधानैरपि ॥
यावल्लोकतमोऽपहेन भवता लक्ष्मीर्न विस्तार्यते
तावच्चन्द्र कथं प्रयाति परमां वृद्धिं स रत्नाकरः ॥ २४ ॥

आस्ते विधुःपरमनिर्वृत एव मौलौ शंभोरिति त्रिजगतीजनचित्तवृत्तिः ॥
अन्तर्निगूढनयनाऽनलदाहदुःखं जानाति कः परमृते बत शीतरश्मेः

दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
मित्रावसानसमये विहितोदयोऽपि ॥
चन्द्रस्तथाऽपि हरवल्लभतामुपैति
नैवाऽऽश्रितेषु महतां गुणदोषशङ्का ॥ २६ ॥

आननानि हरिणीनयनानामद्भुतानि च समीक्ष्य जगत्याम् ॥
लज्जयैव घनमण्डललीनो मन्दमन्दमहहेन्दुरुदेति ॥ २७ ॥

वीथीषुवीथीषु विलासिनीनां मुखानि संवीक्ष्य शुचिस्मितानि ॥
जालेषुजालेषु करं प्रसार्य लावण्यभिक्षामटतीव चन्द्रः ॥ २८ ॥

कपाले मार्जारः पय इति करान् लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति ॥
रतान्ते तल्पस्थं हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥ २९ ॥

निजकरनिकरसमृद्ध्या धवलय भुवनानि पार्वणशशाङ्क ॥
सुचिरं हन्त न सहते विधिरिह सुस्थं स्थितं कमपि ॥३०॥

---

१ नक्षत्रै २ गुप्तः ३ दोषा रात्रिस्तस्याः करः पक्षे दोषाणा आकरः खनिरित्यर्थः ४ सूर्यास्तसमये पक्षे मित्रव्यसनकाले. ५ शिवप्रियताम् ६ सौन्दर्यस्य भिक्षा याचनाम्

यज्जातोसि पयोनिधौ हरजटाजूटे प्रसिद्धोसि य-
द्विश्वस्योदरदीपकोसि विधिना सृष्टोसि यच्चामृतैः ॥
भ्रातः शीतमयूख सर्वमधुना म्लानीकृतं यत्त्वया
राजीवं यदपास्य कैरवकुलं नीतं प्रकाशास्पदम् ॥ ३१ ॥

## मेघाऽन्योक्तयः ।

श्रीः ॥ गर्जन्नम्बु ददाति तच्च कणिकारूपेण यत्र क्वचि-
द्वर्षाकालमपेक्ष्य दानसमये कार्ष्ण्यं[1] विधत्ते मुखे ॥
पश्चात्पाण्डुरतामुपैति लघुतामप्येति भूयस्ततः
श्रीमद्रामनृपालशेखरविभो दाता कियान्वारिदः ॥ १ ॥
मुञ्चमुञ्च सलिलं दयानिधे नास्तिनास्ति समयो विलम्बने ॥
अद्य चातककुले मृते पुनर्वारि वारिधर किं करिष्यसि ॥ २ ॥
वितर वारिद वारि दवातुरे[2] चिरपिपासितचातकपोतके ॥
प्रचलिते मरुति[3] क्षणमन्यथा क्व च भवान्क्व पयः क्व च चातकः॥३॥
त्वमेव चातकाऽऽधार इति केषां न गोचरः ॥
किमम्भोद वदाऽस्माकं कार्पण्योक्तिं प्रतीक्षसे ॥ ४ ॥
एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य ॥
विश्वं सशैलकाननमाननमवलोकते यस्य ॥ ५ ॥
प्रावृषेण्यस्य[4] मालिन्यं[5] दोषः कोऽभीष्टवर्षिणः ॥
शारदाऽभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते ॥ ६ ॥
जलधर जलभरनिकरैरपहर परितापमुद्धतं जगतः ॥
नोचेदपसर दूरं हिमकरकरदर्शनं वितर ॥ ७ ॥
चातकः स्वाऽनुमानेन जलं प्रार्थयतेऽम्बुदात् ॥
स स्वोदारतया सर्वां प्लावयत्यम्बुना महीम् ॥ ८ ॥

---

१ कृष्णताम् २ दावानलपीडिते. ३ वायौ. ४ प्रावृट्कालिकस्य. ५ मालिनताम्

शैलेयेषु शिलातलेषु च गिरेः शृङ्गेषु गर्तेषु च
श्रीखण्डेषु बिभीतकेषु च तथा पूर्णेषु रिक्तेषु च ॥
स्निग्धेन ध्वनिनाऽखिलेऽपि जगतीचक्रे समं वर्षतो
वन्दे वारिद सार्वभौम भवतो विश्वोपकारि व्रतम् ॥ ९ ॥

अयि जलद न दास्यसि कतिचित्त्वं चातकाय जलकणिकाः ॥
तदयमचिरेण भविता सलिलाञ्जलिदानयोग्यस्ते ॥ १० ॥

आसन् यावन्ति याच्ञासु चातकाऽश्रूणि चाऽम्बुद ॥
तावन्तोऽपि त्वया मेघ न मुक्ता वारिबिन्दवः ॥ ११ ॥

अमुं कालक्षेपं त्यज जलद गम्भीरमधुरैः
किमेभिर्निर्घोषैः सृज झटिति झांकारिसलिलम् ॥
अये पश्याऽवस्थामकरुणसमीरव्यतिकर-
ज्वलद्दावज्वालावलिजटिलमूर्तेर्विटपिनः ॥ १२ ॥

शोषं गते सरसि शैवलमञ्जरीणामन्तस्तिमिर्लुठति तापविशीर्णदेहः ॥
अत्राऽन्तरे यदि न वारिद वारिपूरैराप्लावयेस्तदनु किं मृतमण्डनेन ॥

आपो विमुक्ताः क्वचिदाप एव क्वचिन्न किंचिद्गरलं क्वचिच्च ॥
यस्मिन् विमुक्ताः प्रभवन्ति मुक्ताः पयोद तस्मिन्विमुखः कुतस्त्वम् ॥

दवदहनजटालज्वालजालाऽऽहतानां
परिगलितलतानां म्लायतां भूरुहाणाम् ॥
अयि जलधर शैलश्रेणिशृङ्गेषु तोयं
वितरसि बहुकोऽयं श्रीमदस्तावकीनः ॥ १५ ॥

शृण्वन् पुरः परुषगर्जितमस्य हन्त
रे पान्थ विह्वलमना न मनागपि स्याः ॥
विश्वाऽर्तिवारणसमर्पितजीवनोऽयं
नाऽऽकर्णितः किमु सखे भवताऽम्बुवाहः ॥ १६ ॥

१ व्योमोत्थितैर्मोघगर्जितैः २ शीघ्रम् ३ व्याप्तदेहस्य. ४ वृक्षस्य. ५ मत्स्यविशेषः ६ शोभया. ७ दावाग्निः ८ ग्लानिं प्राप्नुवताम्

नोपेक्षा न च दाक्षिण्यं न प्रीतिर्न च सङ्गतिः ॥
तथाऽपि हरते तापं लोकानामुद्यतो घनः ॥ १७ ॥
धीरैर्ध्वनिभिरलं[1] ते नीरद मे मासिको गर्भः ॥
उन्मद[2]वारणबुद्ध्या मध्येजठरं समुच्छलति[3] ॥ १८ ॥
नाऽहं जलद कदाचिच्चातक इव जीवनं याचे ॥
अहमस्मि नील[4]कण्ठस्तुष्येऽहं शब्दमात्रेण ॥ १९ ॥
जलदः समुद्रसेवामाचरति समग्रभुवनभरणाय ॥
कुरुते तामपि[5] हत[6]मतिरात्मंभरि[7]रानिश[8]मौर्वाग्निः[9] ॥ २० ॥
नीहाराकरसारसागरसरित्कासारतीराश्रमं
त्यक्त्वा तोयद चातकेन महती सेवा समालम्बिता ॥
तस्मै तत्फलितं समुज्झसि शिलासंताडनं मस्तके
गाढं गर्जसि वज्रमुज्झसि तडिल्लेखाभिरातर्जसि ॥ २१ ॥
अन्योपि चन्दनतरोर्महनीयमूर्तेः
सेकार्थमुत्सहति तद्गुणबद्धतृष्णः ॥
शाखोटकस्य पुनरस्य महाशयोय-
मम्भोद एव शरणं बत निर्गुणस्य ॥ २२ ॥
अये हेलावेलाकुलितकुलशैले जलनिधौ
कुतो वारामोघं बत जलद मोघं वितरसि ॥
समन्तादुत्तालज्वलदनलकीलाकवलन-
क्लमोपेतानेतानुपचर पयोभिर्विटपिनः ॥ २३ ॥
आश्वास्य पर्वतकुलं तपनोपतप्तं
दुर्दाववह्निविधुराणि च काननानि ॥
नानानदीनदशतानि च पूरयित्वा
रिक्तोसि यज्जलद सैव तवोत्तमश्री. ॥ २४ ॥

---

१ गम्भीरशब्दैः २ मत्तहस्तिबुद्ध्या. ३ उड्डानं करोति. ४ मयूरः. ५ समुद्रसेवाम् ६ मन्दमतिः ७ स्वोदरपूरक. ८ अहोरात्रम् ९ वाडवाग्निः

कालातिक्रमणं कुरुष्व नितरां विस्फूर्जितैस्त्रासय
स्फारैर्भीषय गर्जितैरतितरां कार्श्यं मुखे दर्शय ॥
अस्यानन्यगतेः पयोदमनसो जिज्ञासया चातक-
स्याधेहि त्वमिहाखिलं तदपि न त्वत्तः परं याचते ॥ २५

तवैव प्रावीण्यं जलद जगदानन्दकमिदं
यदम्भःपालीराहरसि खलु सत्वाज्जलनिधेः ॥
निसर्गात्क्षारास्तानयसि च कथंचिन्मधुरता-
मथासामासारैर्युगपदुपकर्तासि जगतः ॥ २६ ॥

यदम्बुकणमादाय प्राप्नोषि जलदोन्नतिम् ॥
तस्योपर्यम्बुधेर्गर्जन्मलिनस्योचितं च ते ॥ २७ ॥

त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः
अस्माकमर्कवृक्षाणां पूर्वपत्रेषु संशयः ॥ २८ ॥

## वाय्वन्योक्तयः ।

श्रीः ॥ हेमाम्भोरुहपत्तने परिमलस्तेनो वसन्तानिल-
स्तत्रत्यैरिव यामिकैर्मधुकरैरारब्धकोलाहलः ॥
निर्यातस्त्वरया व्रजन्निपतितः श्रीखण्डपङ्कद्रवै-
र्लिप्ते केरलकामिनीकुचतटे खञ्जः शनैर्गच्छति ॥ १ ॥

लतां पुष्पवतीं स्पृष्ट्वा सुस्नातश्च महार्णवे ॥
पुनस्तत्स्पर्शभीत्येव वायुर्याति शनैःशनैः ॥ २ ॥

वायुरेव महाभूतं वदन्तु निखिला जनाः ॥
आयुरेवैष भूतानामिति मन्यामहे वयम् ॥ ३ ॥

अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम् ॥
मृगमदपरिमललहरीं समीर किं पामरेषु रे किरसि ॥ ४ ॥

---

१ द्वारपाले. २ इतीति शेष महाभूतमिति. ३ वायुरित्यत्र वाशब्दस्यैवकारार्थत्वादेषभूतानामायुरेवेति भावः

ये जात्या लघवः सदैव गणनां याता न ये कुत्रचित्
पद्भ्यामेव विमर्दिताः प्रतिदिनं भूमौ विलीनाश्चिरम् ॥
उत्क्षिप्ताश्च पलाश येन मरुता पश्याऽन्तरिक्षे सखे
तुङ्गानामुपरि स्थितिं क्षितिभृतां कुर्वन्त्यमी पांसवः ॥ ५ ॥
हंहो दग्धसमीर सर्पति भवत्यस्मिन्वने शाखिनां
शाखाघर्षणजः सकोपि सुचिरं जज्वाल दावानलः ॥
येनाऽऽशाहि पलायमानहरिणं भस्मीभवद्भूरुहं
शुष्यन्निर्झरमुत्पतत्खगकुलं चेष्टं भुजङ्गं वनम् ॥ ६ ॥
कोयं भ्रान्तिप्रकारस्तव पवनपदं कोकपादाहतानां
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांशुपूरं प्रतिष्ठाम् ॥
अस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां
केनोपायेन सह्यो वपुषि कलुषतादोष एषस्तवैव ॥ ७ ॥
अहह चण्डसमीरण दारुणं किमिदमाचरितं चरितं त्वया ॥
यदिह चातकचञ्चुपुटोदरे पतति वारि तदेव निवारितम् ॥८॥

## सिंहान्योक्तयः ।

श्रीः॥क्षुत्क्षामो[1]ऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि[2] प्राणेषु गच्छत्स्वपि ॥
मत्तेभेन्द्रविभिन्नकुम्भदलनग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ १ ॥
स्वल्पस्नायुवसाऽवशेषमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधः शान्तये ॥
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वा[3]ऽनुरूपं फलम् ॥२॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ॥
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३ ॥

---

१ क्षुधया कृशः २ क्षीणतेजाः ३ बलानुरूपम्

एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः[1] ॥
स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ ४ ॥
मृगेन्द्रं वा मृगाऽरिं वा सुखं व्याहरतां जनः ॥
तस्योभयमपि श्लाघ्यं क्रीडादलितदन्तिनः ॥ ५ ॥
मृगेभ्यो रक्ष्यते क्षेत्रं नरैस्तृणमयैरपि ॥
सिंहाऽऽक्रान्तं पुनर्मूढ न हयैर्न च दन्तिभिः ॥ ६ ॥
हरिरलसविलोचनः सहेलं वकमवलोक्य पुनर्जगाम निद्राम् ॥
अधिगतपतिविक्रमाऽस्तभीतिर्न तु वनिताऽस्य विलोकनं चकार॥७॥
एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे ॥
सत्त्वोच्छ्रिते[2] मृगपतौ राजेति गिरः परिणमन्ति ॥ ८ ॥
नाऽस्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घः करैः
सत्यं वारण नैष केसरिशिशुस्त्वाडम्बरैः स्पर्धते ॥
तेजोवीजमजेयमस्य हृदये न्यस्तं पुनर्वेधसा
तादृक् तादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥ ९ ॥
येनाऽनर्गलबालकेलिकलितप्रत्यग्रकादम्बिनी
धाराधोरणिधौतधातुषु पुरा शैलेषु लीलायितम् ॥
सोऽयं शृङ्गनिपातभग्नचरणः स्फारस्फुरत्फेरवी—
फूत्कारैः कुपितोऽद्य खादति मुहुः पाणी मृगग्रामणीः ॥ १० ॥
अनिशं मतङ्गजानां बृंहितमाकर्ण्यते यथा विपिने ॥
मन्ये तथा न जीवति गजेन्द्रपलकवलनः सिंहः ॥ ११ ॥
एकेनाऽपि सुपुत्रेण सिंही स्वपिति निर्भयम् ॥
सहैव दशभिः पुत्रैर्भारं वहति रासभी ॥ १२ ॥
किमपेक्ष्य फलं पयोधरान्ध्वंनतः प्रार्थयते मृगाधिपः ॥
प्रकृतिः खलु सा महीयसः सह ते नाऽन्यसमुन्नतिं यया ॥१३॥

---

१ परिवारहीनः २ राजचिन्हरहिते. ३ वलोन्नते. ४ शुण्डादण्डः ५ नूतन-मेघमाला. ६ जम्बुकी. ७ करिगर्जितम् ८ हस्तिमांसग्रासकः ९ गर्दभी. १० शब्दान् कुर्वतः ११ स्वभावः १२ उत्कर्षम्

उत्तुङ्गशैलशिखरस्थितपादपस्य
काकोऽपि पक्कफलमालभते सपक्षः ॥
सिंहो बली गजविदारणदारुणोऽपि
सीदत्यहो तरुतले खलु हीनपक्षः ॥ १४ ॥

जीर्णोऽपि क्रर्महीनोऽपि कृशोऽपि यदि केसरी ॥
तथाऽपि यूथनाथस्य शङ्काऽऽतङ्काय कल्पते ॥ १५ ॥

खनन्नाखुबिलं सिंहः पाषाणशकलाऽऽकुलम् ॥
प्राप्नोति नखभङ्गं वा पलं वा मौषिकं लभेत् ॥ १६ ॥

एणः क्रीडति मूषिकश्च खनति द्वीपी च गर्वायते
क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्द्रुतं धावति ॥
निःशङ्कं करिपोतकस्तरुलतामुन्मोटते लीलया
हंहो सिंह विना त्वयाऽद्य विपिने कीदृग् दशा वर्तते ॥ १७ ॥

यस्याऽवैन्ध्यरुषः प्रतापवसतेर्नादेन धैर्यद्रुहा
शुष्यन्ति स्म मदप्रवाहसरितः सद्योऽपि दिग्दन्तिनाम् ॥
दैवात्कष्टदशावशं गतवतः सिंहस्य तस्याऽधुना
कर्षन्त्येव करेण केसरसटाभारं जरत्कुञ्जराः ॥ १८ ॥

नाऽभिषेको न संस्कारः सिंहस्य क्रियते वने ॥
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ १९ ॥

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्याऽऽस्पदमसमशीलाः खलु मृगाः ॥
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥ २० ॥

न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना
गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः ॥

---

१ पराक्रमरहितः २ सफलकोपस्य. ३ वृद्धगजाः ४ गजाः ५ स्थिरताम्

लुठन्मुक्ताहारे भवति परलोकं गतवतो
हरेरद्य[1] द्वारे शिवशिव शिवानां[2] कलकलः ॥ २१ ॥
वेतण्ड[3]गण्डकण्डूतिपाण्डित्यपरिपन्थिना ॥
हरिणा हरिणा[4]ऽऽलीषु कथ्यतां कः पराक्रमः ॥ २२ ॥
यद्यपि च दैवयोगात्सिंहः पतितोऽतिदुस्तरे कूपे ॥
तदपि च वाञ्छति सततं करिकुम्भविदारणं मनसि ॥ २३ ॥
जठरज्वलनज्वलताप्यपगतशङ्कं समागतापि पुरः ॥
करिणामरिणा हरिणा हरिणाली हन्यतां न कथम् ॥ २४ ॥
पिब स्तन्यं पोत त्वमिह मददन्तावलधिया
दृगन्तां नाधत्से किमिति हरिदन्तेषु परुषान् ॥
त्रयाणां लोकानामपि हृदयतापं परिहर-
न्नय धीरंधीरं ध्वनति नवनीरो जलनिधिः ॥ २५ ॥

## गजान्योक्तयः ।

श्रीः ॥ दाना[6]ऽर्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदाऽन्धबुद्ध्या ॥
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकच[7]पद्मवने वसन्ति ॥ १ ॥
नीवार[8]प्रसवाऽग्रमुष्टिकवलैर्यो वर्धितः शैशवे
पीतं येन सरोजपत्रपुटके होमाऽवशेषं पयः ॥
तं पश्चान्मदमन्थराऽलिवलयव्यालिप्तगण्डं गजं
साऽनन्दं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः ॥ २ ॥
कर्णे चामरचारुचञ्चुकलिका कण्ठे मणीनां गणः
सिन्दूरप्रकरः शिरःपरिसरे पार्श्वान्तिके किङ्किणी ॥

---

१ सिंहस्य. २ क्रोष्ट्रीनाम् ३ मत्तगजानाम् ४ वैरिणा ५ मृगपङ्क्तिषु ६ दानोदकार्थिनः ७ प्रफुल्लकमलवने. ८ तृणधान्यानि.

लब्धश्चेन्नृपवाहनेन करिणा बद्धेन भूषाविधि-
स्तत्किं भूधरधूलिधूसरतनुर्मान्यो न वन्यो गजः ॥ ३ ॥
केलिं[1] कुरुष्व परिभुङ्क्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि ॥
भावाऽनुरक्तकरिणीकरलालिताऽङ्ग
मातङ्ग मुञ्च मृगराजरणाऽभिलाषम् ॥ ४ ॥
पीतं यत्र हिमं पयः कवलिता यस्मिन्मृणालाऽङ्कुरा-
स्तापाऽऽर्तेन निमज्य यत्र सरसो मध्ये विमुक्तः श्रमः ॥
धिक् तस्यैव जलानि पङ्किलयतः पाथोजनिं मथ्नतः
कूलान्युत्खनतः[3] करीन्द्र भवतो लज्जाऽपि नो जागरा ॥ ५ ॥
रेवावारिणि[4] वारणेन विपुले राजीवराजीरजः-
पुञ्जाऽऽपिञ्जरितोर्मिणि प्रविगलद्दानाऽम्बुगन्धोत्कटे ॥
धौतं येन मृगादिरक्तमसकृद्दन्ताऽन्तरालस्थितं
कौपं[5] सोऽपि पपौ गजो हतविधेः को गोचरे नाऽऽगतः ॥ ६ ॥
तापो नाऽपगतस्तृषा न च कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ॥
दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी
प्राऽऽरब्धो मधुपैरकारणमहो झङ्कारकोलाहलः ॥ ७ ॥
लुलाये[6] गोमायौ[7] मृगपरिषदि श्वापदकुले
करिष्यन्कार्पण्यं किमिह महिमानं गमयसि ॥
निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राऽधिपदशा-
मभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ॥ ८ ॥
नाऽभूवन् भुवि यस्य कुत्रचिदपि स्पर्धाकराः कुञ्जराः
सिंहेनाऽपि न लङ्घिता किमपरं यस्योद्धता पद्धतिः ॥

१ क्रीडाम् २ मज्जन कुरु. ३ तटानि. ४ नर्मदोदके. ५ कूपसंबन्धि.
६ महिषे ७ मृगधूर्तके.

कष्टं सोऽपि कदर्थ्यते कविवरः स्फाराऽऽरवैः फेरवै-
रापातालगभीरपङ्कपटलीमग्नोऽद्य भग्नोद्यमः ॥ ९ ॥
भोभोः करीन्द्र दिवसानि कियन्ति ताव-
दस्मिन्मरौ समतिवाहय कुत्रचित्त्वम् ॥
रेवाजलैर्निजकरेणुकरप्रयुक्तै-
र्भूयः शमं गमयिताऽसि निदाघदाहम् ॥ १० ॥
न गृह्णाति ग्रासं न च कमलकिंजल्किनि जले
न पङ्कैर्वाऽऽल्हादं व्रजति बिसभङ्गार्धशबलैः ॥
ललन्तीं प्रेमार्द्रामपि विषहते नाऽन्यकरिणीं
स्मरन्दावभ्रष्टां हृदयदयितां वारणपतिः ॥ ११ ॥
पादाघातविचूर्णिता वसुमती त्रासाऽऽकुलाः पक्षिणः
पङ्काङ्कानि सरांसि गण्डकषणक्षोदक्षताः शाखिनः ॥
प्राप्यैतत्करिपोतकैर्विधिवशाच्छार्दूलशून्यं वनं
तत्तन्नाम कृतं विशृङ्खलधिया वक्तुं न यत्पार्यते ॥ १२ ॥
गले पाशस्तीव्रश्चरणयुगले गाढनिगडो
दृढं स्कन्धे बद्धः शिरसि सृणिपातः खरतरः ॥
नरः स्कन्धारूढो बत रमणयोग्येऽपि विषये
न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः ॥ १३ ॥
कौपे पयसि लघीयसि तापेन करः प्रसारितः करिणा ॥
सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥ १४ ॥
कौपं वारि विलोक्य वारणपते किं विस्मितेनाऽऽस्यते
प्रायोभाजनमस्य संप्रति भवांस्तत्पीयतामादरात् ॥
उन्मज्जच्छफरीपुलिन्दललनापीनस्तनास्फालन-
स्फारीभूतमहोर्मिनिर्मलजला दूरेऽधुना नर्मदा ॥ १५ ॥

१ धिक्क्रियते, २ हतप्रयत्न. ३ मरुदेशे. ४ यापय. ५ 'अंद्रू' इति लो०
६ अङ्कुशपातः ७ पात्रम् ८ शबरस्त्री.

नो मन्ये दृढबन्धनात्क्षतमिदं नैवाऽङ्कुशाऽऽघातनं
स्कन्धाऽऽरोहणताडनात्परिभवं नैवाऽन्यदेशागमम् ॥
चिन्तां मे जनयन्ति चेतसि यथा स्मृत्वा स्वयूथ्या वने
सिंहत्रासितभीतभीरुकलभा यास्यन्ति कस्याऽऽश्रयम् ॥ १६ ॥

पत्युर्यत्पतिताऽवशेषकवलग्रासेन वृत्तिः कृता
पीतं यच्च कराऽवगाहकलुषं तत्पीतशेषं पयः ॥
प्राणान्पूर्वतरं विहाय तदिदं प्राप्तं करिण्या फलं
यद्बन्धव्रणकातरस्य करिणः क्लिष्टं न दृष्टं मुखम् ॥ १७ ॥

यदि मत्तोऽसि मतङ्गज किममीभिरसारसरलतरुदलनैः ॥
हरिमनुसर खरनखरं व्यपनेष्यति ते स करटकण्डूतिम् ॥ १८ ॥

कलम तवाऽन्तिकमागतमलिमेनं मा कदाप्यवज्ञासीः ॥
अपि दानसुन्दराणां द्विपवर्याणामयं शिरोधार्यः ॥ १९ ॥

गिरिगह्वरेषु गुरुगर्वगुम्फितो गजराजपोत न कदाऽपि संचर ॥
यदि बुध्यते हरिशिशुः स्तनंधयो भविता करेणुपरिशेषिता मही ॥ २० ॥

लीलामुकुलितनयनं किं सुखशयनं समातनुषे ॥
परिणामविषमहरिणा करिनायक वर्धते वैरम् ॥ २१ ॥

## मृगान्योक्तयः ।

श्रीः ॥ दूर्वाऽङ्कुरतृणाऽऽहारा धन्यास्तात वने मृगाः ॥
विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥ १ ॥

एणीगणेषु गुरुगर्वनिमीलिताक्षः
किं कृष्णसार खलु खेलसि काननेऽस्मिन् ॥
सीमामिमां कलय भिन्नकरीन्द्रकुम्भ-
मुक्तामयीं हरिविहारवसुन्धरायाः ॥ २ ॥

---

१ अत्र कर्तृत्वेन यूथ्यानामेवान्वयः २ करिशावकाः ३ सिंहं. ४ हरिणीसङ्घेषु ५ जानीहि. ६ सिंहविहारस्थानस्य.

अयि कुरङ्गि[1] तपोवनविभ्रमादुपगताऽसि किरातपुरीमिमाम् ॥
इह न पश्यसि दारय मारय ग्रस पिबेति शुकानपि जल्पतः॥३॥

तृणमुखमपि न खलु त्वां त्यजन्ति हे हरिणवैरिणः शवराः ॥
यशसैव जीवितमिदं त्यज योजितशृङ्गसंग्रामः ॥ ४ ॥

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां[3]
पर्यन्ताऽग्निशिखाकलापजटिलान्निःसृत्य दूरं वनात् ॥
व्याधानां शरगोचरादतिजवेनोत्प्लुत्य[4] धावन्मृगः
कूपाऽन्तःपतितः करोति विमुखे किं वा विधौ पौरुषम् ॥५॥

इह किं कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि ॥
तृणधन्वा तृणबाणस्तृणघटितः कपटपुरुषोऽयम् ॥ ६ ॥

त्यक्तं जन्मवनं तृणाऽङ्कुरवती मातेव मुक्तास्थली
विश्रान्तिस्थितिहेतवो न गणिता बन्धूपमाः पादपाः ॥
बालाऽपत्यवियोगकातरमुखी त्यक्ताऽर्धमार्गे मृगी
मृग्यन्तःपदवीं तथाऽप्यकरुणाव्याधा न मुञ्चन्ति माम् ॥ ७ ॥

वसन्त्यरण्येषु चरन्ति दूर्वां पिबन्ति तोयान्यपरिग्रहाणि ॥
तथाऽपि वध्या हरिणा नराणां को लोकमाराधयितुं समर्थः ॥८॥
रोमन्थमारचय मन्थरमेत्य निद्रां मुञ्च श्रमं तदनु संचर रे यथेच्छम्॥
दूरे स पामरजनो मुनयः किलैते निष्कारणं हरिणपोत बिभेषि कस्मात्

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि ॥
काले बालतृणानि खादसि परं निद्रासि निद्राऽऽगमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥१०॥

नाऽत्र व्याधशराः पतन्ति परितो नैवाऽत्र दावानलो
नाऽप्युच्चावचभीतिरस्ति कुहचिन्नो वागुरा भङ्गुराः ॥

---

१ हरिणि. २ तपोवनभ्रान्त्या. ३ मृगबन्धिनी. ४ उड्डीय. ५ चर्वितस्य पुनश्चर्वण ' रवथ ' इतिलो०

पर्यालो  य कुरङ्गकेन विहितो नक्षत्रनाथाऽऽश्रयो
नो जानाति यदत्र दास्यति विधिः स्वर्भानुरन्तग्र गम् ॥ ११ ॥
अग्रे व्याधः करधृतशरः पार्श्वतो जालमाला
पृष्ठे वह्निर्दहति नितरां सन्निधौ सारमेयाः ॥
एणी गर्भादलसगमना बालकैरुद्धपादा
चिन्ताऽऽविष्टा वदति हि मृगं किं करोमि क्व यामि ॥ १२ ॥
मध्ये ज्या त्रुटिता शरासनमहो भग्नं दवाग्नेर्भया–
न्निर्यातः शबरः शुना सह गतो दग्धाश्च पाशास्ततः ॥
मेघस्त्वत्र समागतो विधिवशात्तेनाऽतिशान्तं वनं
श्रीकृष्णस्य कृपालवो यदि भवेत्कः कं निहन्तुं क्षमः ॥ १३ ॥

## करभान्योक्तयः ।

श्रीः ॥ वपुर्विषमसंस्थानं कर्णज्वरकरो रवः ॥
करभस्याऽऽशुगत्यैव छादिता दोषसंहतिः ॥ १ ॥
कुमुदशबलैः फुल्लाम्भोजैः सरोभिरलंकृतां
मरकतमणिश्यामां शष्पैर्विहाय वनस्थलीम् ॥
स्मरति करभो यद्वृक्षाणां चरन्मरुधन्वनां
परिचयरतिः सा दुर्वारा न सा गुणवैरिता ॥ २ ॥
करभदयिते योऽसौ पीलुस्त्वया मधुलुब्धया
व्यपगतघनच्छायस्त्यक्तो न सादरमीक्षितः ॥
चलकिसलयः सोऽपीदानीं प्ररूढनवाऽङ्कुरः
करभदयितावृन्दैरन्यैः सुखं परिभुज्यते ॥ ३ ॥
चिन्तां मुञ्च गृहाण पल्लवमिदं प्लक्षस्य शालस्य वा
गाङ्गस्याऽस्य जलस्य चन्द्रवपुषो गण्डूषमेकं पिब ॥

---

१ श्वानः २ उष्ट्रस्य ३ शीघ्रगमनेन. ४ बालतृणैः ५ पीलुवृक्षः. ६ पल्लवाः

जीवन्द्रक्ष्यसि ताः पुनः करभ हे दासेरकीया भुवो
रम्याः पीलुशमी[1]करीरबदरीकूजत्कपोताऽऽकुलाः ॥ ४ ॥
रूक्षं वपुर्न च विलोचनहारिरूपं
न श्रोत्रयोः सुखदमारटितं कदाऽपि ॥
इत्थं न साधु तव किंचिदिदं च साधु
तुच्छे रतिः करभ कण्टकिनि द्रुमे यत् ॥ ५ ॥
दुष्प्रापमम्बुपवनः परुषोऽतितापी
छायाभृतो न तरवः फलभारनम्राः ॥
इत्थं सखे करभ वच्मि भवन्तमुच्चैः
का संगतिः खलु मरौ रमणीयतायाः ॥ ६ ॥
करभदयिते यत्तत्पीतं सुदुर्लभमेकदा
मधुवनगतं तस्याऽलाभे विरौषि किमुत्सुका ॥
कुरुपरिचितैः पीलोः पत्रैर्धृतिं मरुगोचरै-
र्जगति सकले कस्याऽवाप्तिः सुखस्य निरन्तरम् ॥ ७ ॥

## रासभान्योक्तिः ।

श्रीः ॥ रेरे रा[2]सभ वस्त्रभारवहनात्कुग्रासमश्नासि किं
राजाऽश्वौ[3]ऽवसथं प्रयाहि चर्ण[4]काऽभ्यूषान् सुखं भक्षय ॥
सर्वान्पुच्छवतो हया इति विदन्त्यत्राऽधिकारे स्थिता
राजा तैरुपदिष्टमेव मनुते सत्यं तटस्थाः परे ॥ १ ॥

## वृषभान्योक्तयः ।

श्रीः ॥ नाऽस्य भारग्रहे शक्तिर्न च वाहगुणः क्वचित् ॥
देवाऽगारे बलीवर्दस्तथाऽप्यश्नाति भोजनम् ॥ १ ॥
[6]अनसि सीदति सैक[7]तवर्त्मनि प्रचुरभारभरक्षपितोदके ॥
गुरुभरोद्धरणोद्धुरकन्धरं स्मरति सारथिरेष धुरंधरम् ॥ २ ॥

---

१ 'नेपती' तिलोके. २ गर्दभ. ३ अश्वशाला ४ अपक्वचणकान् यद्वा चणकाः प्रसिद्धाः अभ्यूषाः पोलिका. तान् ५ उदासीनाः ६ शकटे. ७ वालुकामयमार्गे

मार्गे कर्दमदुर्गमे जलमृते गर्ताशतैराकुले
खिन्ने शाकटिके[2] भरेऽतिविषमे दूरंगते रोधसि ॥
शब्देनैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनी-
मीदृक्षे विषमे विहाय धवलं वोढुं क्षमः को धुरम् ॥ ३ ॥
केषाचिद्धवलश्चिरं निवसितश्चित्ते परेषां पुन-
र्नीलो वा कपिलोऽथ वा वरवृषो रक्तोऽथ वा मेचकः ॥
ग्रामीणैरवधीरितोऽपि शिथिलस्कन्धोऽप्यनुच्चैःश्रवाः
स्वान्ते मे परतन्त्रतुन्दिलतनुर्जागर्त्ययं कर्बुरः ॥ ४ ॥
न खनति खुरैः क्षोणीपृष्ठं न खादति सादरं
प्रकृतिपरुषं प्रेक्ष्याऽप्यग्रे न कुप्यति गोवरः ॥
वहति च धुरं धुर्यादन्यादनुद्धतकन्धरो
जगति गुणिनः कार्यौदार्यात्परानतिशेरते ॥ ५ ॥

## हंसान्योक्तयः ।

श्रीः ॥ कंसारिचरणोद्भूतासिन्धुकल्लोललालितम् ॥
मन्ये हंस मनो नीरे कुल्यानां रमते न ते ॥ १ ॥
अम्भोजिनीवनविलासविहारमेव
हंसस्य हन्ति नितरां कुपितो विधाता ॥
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ २ ॥
अपसरणमेव शरणं मौनं वा तत्र राजहंसस्य ॥
कटु रटति निकटवर्ती वाचालष्टिट्टिभो यत्र ॥ ३ ॥
वाताऽऽन्दोलितपङ्कजास्थितरजःपुञ्जाऽङ्गरागोज्ज्वलो
यः शृण्वन्कलकूजितं मधुलिहां संजातहर्षः पुरा ॥
कान्ताचञ्चुपुटाऽपवर्जितबिसग्रासग्रहेऽप्यक्षमः
सोऽयं संप्रति हंसको मरुगतः कौपं पयो याचते ॥ ४ ॥

१ श्वभ्रम्. २ शकटस्वामिनि. ३ कृष्णः ४ कृत्रिमसरिता. ५ चातुर्यम्

तरौ तीरोद्भूते क्वचिदपि दलाऽऽच्छादिततनुः
पतद्धारासारां गमय विषमां प्रावृषमिमाम् ॥
निवृत्तायां तस्यां सरसि सरसोत्फुल्लनलिने
स एव त्वं हंसः पुनरपि विलासास्त इह ते ॥ ५ ॥

रे राजहंस किमिति त्वमिहाऽऽगतोऽसि
योऽसौ बकः स इह हंस इति प्रतीतः ॥
तद्गम्यतामनुपदेन पुनः स्वभूमौ
यावद्वदन्ति न बकं खलु मूढलोकाः ॥ ६ ॥

यो दिव्याऽम्बुजलोलमत्तमधुपप्रोद्गीतरम्यं सर-
स्त्यक्त्वा मानसमल्पवारिणि रतिं बध्नाति कैदारिके ॥
तस्याऽलीकमुखाऽऽशया परिभवक्षेत्रीकृतस्याऽधुना
हंसस्योपरि टिट्टिभो यदि पदं धत्तेऽत्र को विस्मयः ॥ ७ ॥

कस्त्वं लोहितलोचनाऽऽस्यचरणो[1] हंसः कुतो मानसात्
किं तत्राऽस्ति सुवर्णपङ्कजवनान्यम्भः सुधासन्निभम् ॥
रत्नानां निचयाः प्रवाललतिका वैदूर्यरोहः क्वचि-
च्छम्बूका[2] नहि सन्ति नेति च बकैराकर्ण्य हीहीकृतम् ॥८॥

यः संतापमपाकरोति जगतां यश्चोपकारक्षमः
सर्वेषाममृतात्मकेन वपुषा प्रीणाति नेत्राणि यः ॥
तस्याऽप्युन्नतिमम्बुदस्य सहसे यन्न त्वमेतावता
वर्णेनैव परं मराल[3] धवलः कृष्णश्चरित्रैरसि ॥ ९ ॥

हंसोऽध्वगश्रममपोहयितुं दिनान्ते
कारण्डकाकबककोककुलं प्रविष्टः ॥
मूकोऽयमित्युपहसन्ति लुनन्ति पक्षा-
न्नीचाऽऽश्रयो हि महतामपमानहेतुः ॥ १० ॥

१ रक्त. २ जलशुक्तयः ३ हस.

यदि नाम दैवगत्या जगदसरोजं सदैव संजातम् ॥
अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥ ११ ॥

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् ॥
रमते न मरालस्य मानसं मानसं विना ॥ १२ ॥

पुरा सरसि मानसे विकचसारसाऽलिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः ॥
स पल्वलजलेऽधुना मिलदनेकभेकाऽऽकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥ १३ ॥

नीरक्षीरविवेके हंसाऽऽलस्यं त्वमेव तनुषे चेत् ॥
विश्वस्मिन्नधुनाऽन्यः कुलव्रतं पालयिष्यति कः ॥ १४ ॥

ये वर्धिताः कनकपङ्कजरेणुमध्ये
मन्दाकिनीविमलनीरतरङ्गभङ्गैः ॥
ते सांप्रतं विधिवशात्खलु राजहंसाः
शैवालजालजटिलं जलमाश्रयन्ति ॥ १५ ॥

हे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियत् भो विशालं
किं मद्धाम्नोपि बाढं तदपि शठ महापाप मा ब्रूहि मिथ्या ॥
इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं
नीचः प्रायः सगर्वो भवति हि विषया यैः परेषां न दृष्टाः ॥ १६ ॥

पीतं येन पुरा पुरन्दरपुरे रम्भोरुकलिस्खल-
न्मन्दाराङ्कुरकर्णपूरसुरभिस्वर्गापगायाः पयः ॥
सोयं मारववारिपामरवधूपादार्पणप्रोच्छल-
त्पङ्कातङ्कितभेकभिन्नमघृणो हंसः समासंसते ॥ १७ ॥

वहति बहलगर्वं क्षीरनीरप्रपन्न
प्रणयविघटनेन क्ष्मातलेऽयं मरालः ॥

---

१ संकरसचय. 'केर' इतिलो० २ ताम्रचूडः ३ मानससरोवरम् ४ अल्पजलाशयजले ५ दर्दुरव्याप्ते

निपुणमतिमहान्तं टङ्कणं हेम मन्ये
विघटितघटनं यः स्वाङ्गदानात्करोति ॥ १८ ॥
नद्यो नीचगता दुरापपयसः कूपाः पयोराशयः
क्षारा दुष्टबकोटसंकटतटोद्देशास्तडागादयः ॥
इत्थं भूतलमाकलय्य सकलानम्भोनिवेशानिति
त्वां भो मानस संस्मरन्पुनरसौ हंसः समभ्यागतः ॥ १९ ॥

## भ्रमरान्योक्तयः ।

श्रीः ॥ अलिरयं नलिनीदलमध्यगः कमलिनीमकरन्दमदाऽलसः ॥
विधिवशात्परदेशमुपागतः कुटजपुष्परसं वहु मन्यते ॥ १ ॥
मधुकर तव करनिकरैः किंकिं क्रान्तं वनं न कुसुमानाम् ॥
तद्वद सरसिजकमले लब्धं किंचिद्यदन्यतस्तात्किम् ॥ २ ॥
[1]गौरीं चम्पककलिकामपहाय भ्रान्तदुर्बुद्धे ॥
[2]शाल्मलिकुसुमदलेषु स्वैरं गुञ्जन्न लज्जसे मधुप ॥ ३ ॥
भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो गन्ध[3]फलीमजिघ्रत् ॥
सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ४
भ्रमर भ्रमता दिगन्तराणि क्वचिदासादितमीक्षितं श्रुतं वा ॥
वद सत्यमपास्य पक्षपातं यदि जातीकुसुमाऽनुकारि पुष्पम् ॥ ५ ॥
अभिनवनलिनीविनोदलुब्धो मुकुलितकैरविणीवियोगभीरुः ॥
भ्रमति मधुकरोऽयमन्तराले श्रयति न पङ्कजिनीं कुमुद्वतीं वा ॥ ६ ॥
नो मल्लीमयमीहते न भजते मत्तेभकुम्भस्थलीं
[5]वासन्तीं सह तेन चन्दनवनीमालम्बते न क्वचित् ॥
जातीमेव हृदीश्वरीमिव महाऽनन्दैककन्दाऽङ्कुरां
ध्यायन्निर्वृतिमेति षट्पदयुवा योगीव वीत[6]भ्रमः ॥ ७ ॥

---

१ पीतवर्णाम् २ 'काटेसेवती' तिलोके ३ चम्पककलिकाम् ४ इच्छा करोति
५ माधवीलताम् ६ गतभ्रमः

केतकीकुसुमं भृङ्गः खण्ड्यमानोपि सेवते ॥
दोषाः किं नाम कुर्वन्ति गुणा[1]ऽपहृतचेतसः ॥ ८ ॥
मदनमवलोक्य निष्फलमनित्यतां बन्धुजीवकुसुमानाम् ॥
वनमुपगम्य भ्रमरः संप्रति जातो दयासक्तः ॥ ९ ॥
फुल्लेषु यः कमलिनीकमलोदरेषु
चूतेषु यो विलसितः कलिकाऽन्तरस्थः ॥
पश्याऽद्य तस्य मधुपस्य शरद्व्यपाये
कृच्छ्रेण वेणुविवरे दिवसाः प्रयान्ति ॥ १० ॥

अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि ॥
गणयति न तिरस्कारं यद्दानाऽन्धविलोचनो नीचः ॥ ११ ॥

गन्धैराढ्या भुवनविदिता केतकी स्वर्णवर्णा
पुष्पभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात ॥
अन्धीभूतस्तदनु रजसा कण्टकैश्छिन्नपक्षः
स्थातुं गन्तुं क्षणमपि सखे नैव शक्तो द्विरेफः ॥ १२ ॥
किं काऽपि मलयानलैर्विटपिनो निर्दह्य भस्मीकृताः
किंस्विद्दैवगजेन पङ्कजवनं निष्कन्दमुन्मीलितम् ॥
किं वा हन्त कृ[3]तान्तकेसरिभयात्त्यक्तो मदः कुञ्जरै-
र्येनाऽस्मिन्विरसे करीरकुसुमे हा भृङ्ग विश्राम्यसि ॥ १३ ॥
गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूँ[4]थिकां
तां त्यक्त्वाऽऽशु गतः स चन्दनवनं पश्चात्सरोजं गतः ॥
बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः
संतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ १४ ॥
मधुकरगणश्चूतं त्यक्त्वा गतो नवमल्लिकां
पुनरपि गतो रक्ताऽशोकं कदम्बवनं ततः ॥

---

१ गुणाकृष्टान्तःकरणस्य. २ मदनवाणाख्यं पुष्पम् ३ कृतान्तः कालः स एव केसरी सिंहः ४ (जुई) शीतलोके

तदपि सुचिरं स्थित्वा तेभ्यः प्रयाति सरोरुहं
परिचितजनद्वेषी लोको नवंनवमीहते ॥ १५ ॥
यस्याः संगमवाञ्छया न गणिता वाप्यो विनिद्रोत्पला
यामालिङ्ग्य समुत्सुकेन मनसा यातः परां निर्वृतिम् ॥
भग्नां तामवलोक्य चन्दनलतां भृङ्गेण यज्जीव्यते
धैर्यं नाम तदस्तु तस्य न पुनः स्नेहाऽनुरूपं कृतम् १६
अपसर[1] मधुकर दूरं परिमलबहुलेऽपि केतकीकुसुमे ॥
इह नहि मधुलवलाभो भवति परं धूलिधूसरं वदनम् १७
दूरादुज्झति चम्पकं न च भजत्यम्भोजराजीरजो
नो जिघ्रत्यपि पाटलापरिमलं धत्ते न चूते रतिम् ॥
मन्दारे यदनादरो विचिकिलोपान्तेन संतृप्यते
तन्मन्ये क्वचिदङ्ग भृङ्ग तरुणेनाऽऽस्वादिता मालती॥१८॥
ये वर्धिताः करिकपोलमदेन भृङ्गाः
प्रोत्फुल्लपङ्कजरजःसुरभीकृताङ्गाः ॥
ते सांप्रतं प्रतिदिनं क्षपयन्ति कालं
निम्बेषु चाऽर्ककुसुमेषु च दैवयोगात् ॥ १९ ॥
कृत्वाऽपि कोशपानं भ्रमरयुवा पुरत एककमलिन्याः ॥
अभिलषति बकुलकलिकां मधुलिहि मलिने कुतः सत्यम् ॥२० ॥
इह सरसि सहर्षं मञ्जु[2] गुञ्जाऽभिरामं
मधुकर कुरु केलिं[3] सार्धमम्भोजिनीभिः ॥
अनुपममकरन्दाऽऽमोददत्तप्रमोदा
त्यजति बत न निद्रां मालती यावदेषा ॥ २१ ॥
येनाऽऽमोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया
नीता येन निशाः शशाङ्कधवलाः पद्मोदरे शारदीः[4] ॥

---

१ दूरं गच्छ २ मधुरम् ३ खेलं कुरु ४ शरत्सम्बन्धिनीः

भ्रान्तं येन मदप्रवाहमालिने गण्डस्थले दन्तिनां
सोऽयं भृङ्गयुवा करीरविटपे बध्नाति तुष्टिं कुतः ॥ २२ ॥
येनाऽ[1]मन्दमरन्दे द[2]लदरविन्दे दिनान्यना[3]यिषत ॥
कुटजे खलु तेने[4]हां [5]तेने हा मधुकरेण कथम् ॥ २३ ॥
[6]अमरतरुकुसुमसौ[7]रभसेवनसंपूर्णकामस्य ॥
पुष्पान्तरसेवेयं भ्रमरस्य विडम्बना महती ॥ २४ ॥
स[8]रजस्कां पाण्डुवर्णां कण्टकप्रक[9]राऽङ्कितां ॥
केतकीं सेवसे हन्त कथं रोल[10]म्ब निस्त्र[11]पः ॥ २५ ॥
अन्यासु तावदु[12]पमर्दसहासु भृङ्ग
लोलं[13] विनोदय मनः सुमनोलतासु ॥
बालाम[14]जातरजसं कलिका[15]मकाले
व्यर्थं क[16]दर्थयसि किं नवमल्लिकायाः ॥ २७ ॥
माकन्दद्रुममञ्जरी मधुमदामोदैकमेदस्विना
येनालम्भि पयोजनीषु मुकुलक्रीडाविनोदोत्सवः ॥
सोयं संप्रति पर्यटन् मरुभुवि ग्रीष्मातपैस्तापिते
दुर्दैवात्समयं नयत्यविरतो भृङ्गोऽर्कपुष्पोदरे ॥ २८ ॥

## कोकिलान्योक्तयः।

श्रीः ॥ अस्यां सखे बधिरलोकनिवासभूमौ
किं कूजितेन किल कोकिल कोमलेन ॥
एते हि दैवहतकास्त[17]दभिन्नवर्णं
त्वां काकमेव कलयन्ति कलाऽनभिज्ञाः ॥ १ ॥

---

१ प्रचुरपुष्परसे २ विकासितकमले ३ नीतानि ४ इच्छा ५ विस्तारिता कृतोति यावत् ६ कल्पवृक्षः ७ सौगन्ध्यम् ८ रजोयुक्ताम् ९ समूहः १० भ्रमर ११ निर्लज्जः १२ उपमर्दं सहन्ते ताः १३ सतृष्णं लुब्धमिति यावत्. १४ अनुत्पन्नपरागाम् १५ अयोग्ये काले. १६ दूषयसि. १७ काकसमानवर्णम्.

रेरे कोकिल मा भज मौनं किंचिदुदञ्चय पञ्चमरागम् ॥
नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ २ ॥
समुद्गिरसि किं वाचः पुंस्कोकिल सुकोमलाः ॥
श्वभ्रेऽस्मिन् जडपाषाणगुरुनिर्घोषभैरवे ॥ ३ ॥
कोकिलकलमालापैरलमलमालोकसे रसालं किम् ॥
शरनिकरभरितशरधिः शवरः सरतीह परिसरे सधनुः ॥ ४ ॥
अविश्वसन्धूर्तधुरन्धरोऽपि नरः पुरन्ध्रीपुरतोऽन्ध एव ॥
अशेषशिक्षाकुशलोऽपि काकः प्रतार्यते किं न पिकाऽङ्गनाभिः ॥५॥
तवैतद्वाचि माधुर्यं जाने कोकिल कृत्रिमम् ॥
प्रपोषितो यैस्तानेव जातपक्षो जहासि यत् ॥ ६ ॥
येनाऽऽनन्दमये वसन्तसमये सौरभ्यहेलामिल-
द्भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः ॥
आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वादिशः
खेलद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्धावति ॥ ७ ॥
क्वचिज्झिल्लीनादः क्वचिदतुलकाकोलकलहः
क्वचित्कङ्काऽऽरावः क्वचिदपि कपीनां कलकलः ॥
क्वचिद्घोरः फेरुध्वनिरयमहो दैवघटना-
त्कथं कारं तारं रसति चकितः कोकिलयुवा ॥ ८ ॥
यस्याऽऽकर्ण्य वचः सुधाकवलितं वाचंयमानामपि
व्यग्राणि व्यथयन्ति मन्मथकथाश्चेतांसि चैत्रोत्सवे ॥
रेरे काकवराक साकममुना पुंस्कोकिलेनाऽधुना
स्पर्धाबन्धमुपेयुषस्तव तु किं लज्जाऽपि नो जागरा ॥९॥
रे बाल कोकिल करीरमरुस्थलीषु
किं दुर्विदग्धमधुरध्वनिमातनोषि ॥

---

१ 'भाता' इतिलोके २ संचरति. ३ आसमताद्भागे ४ वञ्च्यते. ५ कोकिलाभिः ६ त्यजसि. ७ काकोलो द्रोणकाकः 'डोमकावळा' इतिलो. ८ जम्बुकध्वनिः ९ अत्युच्च यथातथा १० कूजति. ११ मौनिनाम् १२ सह

अन्यः स कोऽपि सहकार[1]तरुप्रदेशो
राजन्ति यत्र तव विभ्रमभाषितानि ॥ १० ॥
रसालशिखराऽऽसीनाः शतं सन्तु पतत्रिणः ॥
तन्मञ्जरीरसाऽऽमोदविन्दुरेव कुहूमुखः ॥ ११ ॥
तत्किं स्मरसि न भुक्तं यत्पिक[2] रे काकमन्दिरे पूर्वम् ॥
सहकारकुसुमकाले हठेन कुरुषेऽधुना रावम् ॥ १२ ॥
दात्यूहा[3]ः सरसं रसन्तु सुभगं गायन्तु केकीभृतः[4]
कादम्बाः[5] कलमालपन्तु मधुरं[6] कूजन्तु कोयष्टयः[7] ॥
दैवाद्यावदसौ रसालविटपिच्छायामनासादयन्
निर्विण्णः कुटजेषु कोकिलयुवा संजातमौनव्रतः ॥ १३ ॥
तावत्कोकिल विरसान् यापय[8] दिवसान् वनान्तरे निवसन् ॥
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ १४ ॥
एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः ॥
साजात्यशङ्कयाऽमी न त्वां निघ्नन्तु निर्दयाः काकाः ॥ १५ ॥

## चातकान्योक्तयः ।

श्रीः ॥ रेरे चातक सावधानमनसा मित्र क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः ॥
केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा
यंयं पश्यसि तस्यतस्य पुरतो मा ब्रूहि दीनं वचः ॥ १ ॥
एक एव खगो मानी चिरं जीवतु चातकः ॥
म्रियते वा पिपासायां याचते वा पुरन्दरम् ॥ २ ॥
चातकस्य खलु चञ्चुसंपुटे नो पतन्ति किल वारिबिन्दवः ॥
सागरीकृतमहीतलस्य किं दोष एव जलदस्य दीयते ॥ ३ ॥

---

१ आम्रः २ कोकिल. ३ कालकण्टकः 'जलकाक' इतिप्रसिद्धः ४ मयूराः ५ कलहंसाः ६ अव्यक्तमधुरम् ७ टिट्टिभाः ८ नय

सत्यंसत्यं मुनेर्वाक्यं नाऽदत्तमुपतिष्ठति ॥
अम्बुभिः पूरिता पृथ्वी चातकस्य मरुस्थली ॥ ४ ॥
बीजैरङ्कुरितं लताभिरुदितं वल्लीभिरुज्जृम्भितं
कन्दैः कन्दलितं जनैः प्रमुदितं धाराधरे वर्षति ॥
भ्रातश्चातक पातकं किमपि ते सम्यङ् न जानीमहे
येनाऽस्मिन्न पतन्ति चञ्चुपुटके छिन्नाः पयोबिन्दवः॥ ५ ॥
चातक धूमसमूहं दृष्ट्वा मा धाव वारिधरबुद्ध्या ॥
इह हि भविष्यति भवतो नयनयुगादेव वारिणां पूरः ॥ ६ ॥
रक्ताऽब्जपुञ्जरजसाऽरुणितान् विमुच्य
स्वच्छान्सुधासमरसानपि वारिराशीन् ॥
यच्चातकः पिबति वारिधरोदबिन्दून्
मन्ये तदानतिभयाच्छिरसोऽभिमानी ॥ ७ ॥
कूपे पानमधोमुखं भवति मे नद्यो वराक्यः स्त्रियः
सामान्यं बकटिट्टिभैः सह सरस्येवं समालोकयन् ॥
शुष्यत्तालुगलोपि कम्पिततनुः श्रुत्वा गभीरध्वनिं
धैर्यादुद्धृतकन्धरो जलधर त्वां याचते चातकः ॥ ८ ॥
गर्जितबधिरीकृतककुभा किमनेन कृतं हि घनेन ॥
इयती चातकचञ्चुपुटी सापि भृता नैव जलेन ॥ ९ ॥
अन्येऽपि सन्ति बत तामरसाऽवतंसा
हंसाऽवलीवलयिनो जलसन्निवेशाः ॥
कोऽप्याग्रहो गुरुरयं बत चातकस्य
पौरन्दरीं[2] यदभिवाञ्छति वारिधाराम् ॥ १० ॥
अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नन्ति ये
भ्रातश्चातक किं वृथा विरुदितैः खिन्नोऽसि विश्राम्यताम् ॥

---

१ नमनभयात् २ ऐन्द्री मेघोत्पन्नामित्यर्थः

मेघः शारद एव काशधवलः पानीयरिक्तोदरो
गर्जत्येव हि केवलं भृशतरं नो बिन्दुमप्युज्झति ॥ ११ ॥

धिग्वारिदं परिहृताऽन्यजलाशयस्य
यच्चातकस्य कुरुते न तृषाप्रशान्तिम् ॥
धिक् चातकं तमपि योर्थितयाऽस्तलज्ज-
स्तं तादृशं च समुपैति पिपासितोऽपि ॥ १२ ॥

## मयूरान्योक्तयः।

श्रीः ॥ एतस्मिन्मलयाचले बहुविधैः किं तैरकिंचित्करैः
काकोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः ॥
केकी कूजति चेत्तदा विघटितव्यालावलीबन्धनः
सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ १ ॥

नाहं जलधर भवतश्चातक इव जीवनं याचे ॥
अहमस्मि नीलकण्ठो तव खलु तुष्यामि शब्दमात्रेण ॥२

अस्मान् विचित्रवपुषस्तव पृष्ठलग्नान्
कस्माद्विमुञ्चति भवान् यदि वा विमुञ्च ॥
रे नीलकण्ठ पुरुहानिरियं तवैव
मौलौ पुनः क्षितिभृतो भविता स्थितिर्नः ॥ ३ ॥

यत्नादपि कः पश्यति शिखिनामाहारनिर्गमस्थानम् ॥
यदि जलदनिनदमुदितास्त एव मूढा न नृत्येयुः ॥ ४ ॥

## शुकान्योक्तयः।

श्रीः ॥शुक तव पठनं व्यसनं न गुणः किं तु स गुणाऽऽभासः ॥
समजनि येनाऽऽमरणं शरणं ते पञ्जरे वासः ॥ १ ॥

---

१ काशपुष्पवत्पाण्डुरः २ परिहृतास्त्यक्ताः अन्ये जलाशयाः समुद्रादयो येन. ३ गतलज्जः निर्लज्ज इत्यर्थः ४ मयूरः ५ विघटित व्यालावलीना वन्धनं यस्य ६ गुदद्वार. ७ मेघनादेन सजातानन्दाः ८ दोषः ९ मरणपर्यन्तम्

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ॥
शुकपञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ २ ॥
माणिक्यद्रवलिप्तमौक्तिकतुलां बिभ्रन्ति नो दाडिमी
बीजान्येष निरीक्षते न रमते हैमेऽप्यहो पञ्जरे ॥
तत्ताद्दग्वनवाससम्मदमहामोदैकमेदस्विनी
वृत्तिर्मे गलिताऽनया हतगिरेत्येवं शुकः शोचति ॥ ३ ॥
इदमपटु कपाटं जर्जरः पञ्जरोऽयं
विरमति न गृहेऽस्मिन् क्रूरमार्जारयात्रा ॥
शुकमुकुलितजिह्व स्थीयतां किं वचोभि–
स्तव वचनविनोदेनाऽऽदरःपामराणाम् ॥ ४ ॥
अमुष्मिन्नुद्याने विहगखल एष प्रतिकलं
विलोलः काकोलः क्वणति खलु यावत्कटुतरम् ॥
सखे तावत्कीर द्रढय हृदि वाचं च सकलां
न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥ ५ ॥
किंशुके शुक मा तिष्ठ चिरं भाविफलेच्छया ॥
बाह्यरङ्गप्रसङ्गेन केके नाऽनेन वञ्चिताः ॥ ६ ॥
पालाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ॥
सोपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥ ७ ॥
सुभाषितस्याध्ययनानुरक्तं
शुकं वराकाः प्रहसन्ति काकाः ॥
तमेव संसत्सु गिरं किरन्तं
दृष्ट्वा भवन्ति त्रपया नतास्याः ॥ ८ ॥
द्राक्षां प्रदेहि मधु वा वदने निधेहि
देहे विधेहि किमु वा करलालनानि ॥

---

१ द्रोणकाकः

जातिस्वभावचपलः पुनरेष कीर-
स्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥ ९ ॥

याते यातमधःस्थिते स्थितमुपर्यालोकिते लोकितं
यद्यद्राजशुकोयमाकलयते शुद्धान्तहस्ते स्थितः ॥
तत्सर्वं मणिभित्तिमेत्य भवता छायाशुकाङ्गीकृतं
तस्मिन्कर्णसुधां वितन्वति गिरं तूष्णीं किमु स्थीयते ॥ १० ॥

येनाजस्रं क्षितिपरमणीपाणिपद्मोपनीता
श्रश्वद्द्राक्षामधुरिमगुणाः सावहेलं निरस्ताः ॥
सोयं दैवादहह गमने याचते केलिकीरो
भिल्लीलोकान्मधुरवचनैः सादरं तिन्दुकानि ॥ ११ ॥

अये कीर श्रेणीपरिवृढ वृथा वासरशतं
किमर्थं त्वं व्यर्थं क्षपयसि पलाशे रभसतः ॥
यदा पुष्पारम्भे मुखमलिनिमा किंशुकतरो-
स्तदैवेदं ज्ञातं फलपरिचयो दुर्लभतरः ॥ १२ ॥

वासः काञ्चनपिञ्जरे नृपकराम्भोजैस्तनूमार्जनं
भक्ष्यं स्वादुरसालदाडिमफलं पेयं सुधाभं पयः ॥
पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे
हाहा हन्त तथापि जन्म विटपिक्रोडं मनो धावति ॥ १३ ॥

## बकान्योक्तयः ।

श्रीः ॥ नालेनेव स्थित्वा पादेनैकेन कुञ्चितग्रीवम् ॥
जनयति कुमुदभ्रान्तिं वृद्धबको बालमत्स्यानाम् ॥ १ ॥

नैर्मल्यं वपुषस्तवाऽस्ति वसतिः पद्माकरे जायते
मन्दं याहि मनोरमां वद गिरं मौनं न संपादय ॥
धन्यस्त्वं बकराज हंसपदवीं प्राप्तोऽसि किं तैर्गुणै-
र्नीरक्षीरविभागकर्मनिपुणा शक्तिः कथं लभ्यते ॥ २ ॥

जातिस्तस्य न मानसे न शुचिभिर्वृत्तिर्मृणालाऽङ्कुरै-
र्न ब्रह्मोद्वहनेन निर्मलयशः प्राप्ता न वाचः कलाः ॥
जीवत्सत्त्वधनेन बाह्यधवलो भ्राम्यन् सगर्वं पुन-
र्मिथ्यैवोन्नतकन्धरः शठबको हंसैः सह स्पर्धते ॥ ३ ॥
उभौ पक्षौ श्वेतौ वियति भुवि चाऽवारितगतिः
सदा मीनान् भुङ्क्ते वसति सकलस्थाणुशिरसि ॥
बके सर्वश्चान्द्रो गुणसमुदयः किंचिदधिको
गुणाः स्थाने मान्या न तु नरवरस्थानरहिताः ॥ ४ ॥
न भ्रूप्रस्फुरणं न चञ्चुचलनं नो चूलिकाकम्पनं
न ग्रीवाचलनं मनागपि न यत्पक्षद्वयोत्क्षेपणम् ॥
नासाग्रे क्षणमेकपादनिवसत्काष्ठैकनिष्ठः परं
यावल्लुण्ठति पीनमीननिवहस्तावद्बकस्तापसः ॥ ५ ॥
रेरे शिष्ट बकोटनाकतटिनीतीरे तपस्विव्रतं
ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम् ॥
एवं यत्किल मानसस्य पदवीं काङ्क्षस्ययुक्तं हि त-
न्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य सा ॥ ६ ॥

## खद्योतान्योक्तयः ।

श्रीः ॥ जर्जरतृणाऽग्रमदहन् सर्षपकणवत्प्रकाशयन्नूनम् ॥
कीटत्वमात्मनस्त्वं खद्योत ख्यापयस्यवनौ ॥ १ ॥
इन्दुः प्रयास्यति विनश्यति तारकश्रीः
स्थास्यन्ति लीढतिमिरा न मणिप्रदीपाः ॥
अन्धंसमग्रमपि कीटमणे भविष्य-
त्युन्मेषमेष्यति भवानपि दूरमेतत् ॥ २ ॥

१ जन्म २ शुभ्रैः ३ जीवनम् ४ ब्रह्मणः उद्वहनेन वाहनतया पृष्ठे धारणेन ५ जीवन्तो ये सत्त्वा मत्स्यादयस्तद्रूपेण धनेन हेतुना. ६ मत्स्यान् मीनराशिं च. ७ तरुशैलादयः शिवश्च

अदृष्टव्यापारं[1] गतवति दिनानामधिपतौ
यशःशेषीभूते[2] शशिनि गतधाम्नि[3] ग्रहगणे ॥
तथा ध्वान्तं जातं जगदुपगते मेघसमये
यथाऽमी गण्यन्ते तमसि पटवः कीटमणयः ॥ ३ ॥
घनसन्तमसमलीमस दशदिशि निशि यद्विराजसि तदन्यत् ॥
कीटमणे दिनमधुना तरणिकराऽन्तरितासितकिरणम् ॥ ४ ॥

## काकान्योक्तयः ।

श्रीः ॥ गात्रं ते मलिनं तथा श्रवणयोरुद्वेगकृत्केंकृतं
भक्ष्यं सर्वमपि स्वभावचपलं दुश्चेष्टितं ते सदा ॥
एतैर्वायस सङ्गतोऽस्य विनयैर्दोषैरमीभिः परं
यत्सर्वत्र कुटुम्बवत्सलमतिस्तेनैव धन्यो भवान् ॥ १ ॥
आमरणादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः ॥
किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ २ ॥
वयं काका वयं काका[4] जल्पन्तीति प्रगे[5] द्विकाः[6] ॥
तिमिरारिस्तमोहन्यादिति शङ्कितमानसाः ॥ ३ ॥
तुल्यवर्णच्छदः कृष्णः कोकिलैः सह संगतः ॥
केन विज्ञायते काकः स्वयं यदि न भाषते ॥ ४ ॥
तत्काक त्वयि युक्ताः कटुवाग्वैवर्ण्यधूर्तताऽशुचिताः ॥
यदि विष्ठाकृमिपुष्टे तत्र न दोषा हि तच्चित्रम् ॥ ५ ॥
रूक्षस्याऽमधुरस्य चाऽतिमलिनच्छायस्य धृष्टस्य च
क्षुद्रस्य क्षतकारिणोऽतिचपलस्याऽऽह्लादविच्छेदिनः ॥
येयं निम्बफलेषु काक भवतस्तिक्तेषु नैसर्गिकी
प्रीतिस्तत्सदृशं विधेर्विलसितं निष्पन्नमेतच्चिरात् ॥ ६ ॥

---

१ दर्शनव्यापाररहितं यथा स्यात्तथा यद्वा स्थानमितिशेषः २ यशोमात्राव-शिष्टे. ३ गततेजसि. ४ 'काव्काव्' शब्दः ५ प्रातःकाले. ६ द्वौ ककारौ नाम्नि विद्येते येषान्ते

विधिरेव विशेषगर्हणीयः करट त्वं रट कस्तवाऽपराधः ॥
सहकारतरौ चकार यस्ते सहवासं सरलेन कोकिलेन ॥ ७ ॥

कृष्णं वपुर्वहतु चुम्बतु सत्फलानि
रम्येषु संवसतु चूतवनान्तरेषु ॥
पुंस्कोकिलस्य चरितानि करोतु कामं
काकः कलध्वनिविधौ स तु काक एव ॥ ८ ॥

किं केकीव शिखण्डमण्डिततनुः किं कीरवत्पाठकः
किं वा हंस इवाऽङ्गनागतिगुरुः शारीव किं सुस्वरः ॥
किं वा हन्त शकुन्तबालपिकवत्कर्णाऽमृतं स्यन्दते
काकः केन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ ९ ॥

अहो मोहो वराकस्य काकस्य यदसौ पुरः ॥
सरीसर्ति नरीनर्ति यदयं शिखिहंसयोः ॥ १० ॥

कर्णाऽरुंतुदमन्तरेण रणितं गाहस्व काक स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम् ॥
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालफालपतिते पङ्के न शङ्केत कः ॥ ११ ॥

## समुद्रान्योक्तयः ।

श्रीः ॥ आस्तां तावदहो समुद्रमहिमा दूरेऽपि कर्णप्रिय-
स्तीरे यस्य पिपासयैव मरणं प्राप्नोति शीघ्रं जनः ॥
तस्मादम्बुनिधेर्वरं लघुसरः कूपोऽथ वा वापिका
यत्र स्वात्मकरद्वयेन सलिलं पेपीयते स्वेच्छया ॥ १ ॥

प्रबलतरतङ्गैर्दूरमुत्सारितोऽपि
प्रथयति तव कीर्तिं दक्षिणाऽऽवर्तशङ्खः ॥

---

१ निन्द्यः २ काक ३ रट शब्दं कुरु. ४ पक्षिविशेषः 'साळुंखी मैना' इति लोके ५ दक्षिणभागे आवर्तो यस्य एतादृशः शङ्खः

पॅरिकलय पयोधे पद्मनाभाऽर्ध्ययोग्यं
तव निकटनिषण्णैः क्षुद्रकैः श्लाघ्यता का ॥ २ ॥
नाऽवज्ञा नाऽप्यवैदग्ध्यमुदधेर्महिमैव सः ॥
यत्तीरपङ्कमग्नानि महारत्नानि शेरते ॥ ३ ॥
यद्यपि बद्धः शैलैर्यदपि च गिरिमथनमुषितसर्वस्वः ॥
तदपि च विभीतभूधररक्षायां दीक्षितो जलधिः ॥ ४ ॥
यद्यपि स्वच्छभावेन दर्शयत्युदधिर्मणीन् ॥
तथाऽपि जानुदघ्नोऽयमिति चेतसि मा कृथाः ॥ ५ ॥
रत्नैरापूरितस्याऽपि मदलेशोऽपि नाऽम्बुधेः ॥
मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥ ६ ॥
अधः करोषि यद्रत्नं मूर्ध्ना धारयसे तृणम् ॥
दोषस्तवैव जलधे रत्नं रत्नं तृणं तृणम् ॥ ७ ॥
वातोल्लासितकल्लोल धिक् ते सागरगर्जनम् ॥
यस्य तीरे तृषाक्रान्तः पान्थः पृच्छति वापिकाम् ॥ ८ ॥
इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनः शिखरिपत्रिणः शेरते ॥
इतोऽपि वडवानलः सहसमस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ९ ॥
साकं ग्रावगणैर्लुठन्ति मणयो बालाऽर्कबिम्बोपमा
नीरे नीरचरैः समं स भगवान्निद्राति नारायणः ॥

---

१ जानीहि. २ विष्णुपूजायोग्यम् ३ क्षुद्रशङ्खैः ४ अवमानः ५ अचतुरत्वम् ६ गिरिमथनेन हृतं सर्वस्व चतुर्दशरत्नात्मकं धनं यस्य ७ विशेषेण भीतो भूधरो मैनाकस्तद्रक्षायां रक्षणे. इन्द्राद्भीतो मैनाको जलधिं प्रविष्ट इति प्रसिद्धम् ८ जानुप्रमाणः ९ वायुना उल्लासिताः उत्पादिताः कल्लोला महोर्मयो यस्य १० शिखरिणः पर्वतास्त एव पत्रिणः पक्षिणः ११ संवर्तकैसज्ञकैर्मेघैः १२ पाषाणसमूहैः

एवं वीक्ष्य तवाऽविवेकमथ च प्रौढिं परामुन्नतेः
किं निन्दाम्यथवा स्तवीमि कथय क्षीरार्णव त्वामहम् ॥ १० ॥
किं खलु रत्नैरेतैः किं खलु रत्नायितेन वपुषा ते ॥
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥ ११ ॥
मा कुरु गुरुतागर्वं लघुरन्यो नाऽस्ति सागर त्वत्तः ॥
जडसंग्रहमन्यस्मात्त्वयि सति कुर्वन्ति पोतस्थाः[1] ॥ १२ ॥

## पर्वतान्योक्तयः ।

श्रीः ॥ विन्ध्यमन्दरसुमेरुभूभृतां यत्पतिस्तुहिनपर्वतोऽभवत् ॥
ईश्वरश्वशुरताप्रभावतस्तद्ध्रुवं जगति जृम्भते यशः ॥ १ ॥
ये संतोषसुखप्रबोधमनसस्तेषामभिन्ना मुदो
येऽप्यन्ये धनलोभसंकुलधियस्तेषां तु दूरे नृणाम् ॥
इत्थं कस्य कृते कृतः स विधिना तादृक्पदं संपदां
स्वाऽऽत्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ २ ॥
आचक्ष्महे नव किमद्यतनीमवस्थां
तच्चाऽद्य विन्ध्यशिखरस्य मनोहरस्य ॥
यत्रैव सप्तमुनयस्तपसा निषेदुः
सोऽयं विलासवसतिः [2]पिशिताशनानाम् ॥ ३ ॥
कि तेन हेम[3]गिरिणा [4]रजताद्रिणा वा
यत्र स्थिता हि तरवस्तरवस्त एव
मन्यामहे मलयमेव यदाश्रयेण
शाखोटनिम्बकुटजा अपि चन्दनाः स्युः ॥ ४ ॥
शक्रादरक्षि यदि पक्षयुगं तथाऽपि
मैनाक सन्ति तव नेह गतागतानि ॥

१ नौकास्थिताः नाविका इत्यर्थः २ राक्षसाना ३ मेरुणा ४ कैलासेन.
५ ‘साहोडा’ इति लोके

निःसत्त्वता च निरपत्रपता च किंतु
पाथोनिधौ निवसता भवताऽर्जिता च ॥ ५ ॥

## अगस्त्यान्योक्ती ।

श्रीः ॥ कम्पन्ते गिरयः पुरंदरभिया मैनाकमुख्याः पुनः
क्रन्दन्त्यम्बुधराः स्फुरन्ति वडवावक्त्रोद्गता वह्नयः ॥
भोः कुम्भोद्भव मुच्यतां जलनिधिः स्वस्त्यस्तु ते सांप्रतं
निद्रालुश्लथबाहुवल्लिकमलाऽऽश्लेषो हरिः सीदति ॥ १ ॥
अल्पीयसैव पयसा यत्कुम्भः पूर्यते प्रसिद्धं तत् ॥
ब्राह्मं तेजः पश्यत कुम्भोद्भूतः पपौ वार्धिम् ॥ २ ॥

## नद्यन्योक्तयः ।

श्रीः॥यद्यपि दिशिदिशि सरितः परितः परिपूरिताऽम्भसः सन्ति॥
तदपि पुरन्दरतरुणीसंगतिसुखदायिनी गङ्गा ॥ १ ॥
छायां प्रकुर्वन्ति नमन्ति पुष्पैः फलानि यच्छन्ति तटद्रुमा ये ॥
उत्मूल्य तानेव नदी प्रयाति तरङ्गिणां किं प्रतिपन्नमस्ति॥ २ ॥
कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते ॥
तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ३ ॥
कुरु गम्भीराशयतां कल्लोलैर्जनय लोकविश्रान्तिम् ॥
वीतपयोधरलक्ष्मीः कस्य न चरणैर्विलङ्घ्यासि ॥ ४ ॥
तटिनि चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः ॥
शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकाऽऽदानम् ॥ ५ ॥

---

१ निर्बलत्वम्. २ निर्लज्जत्वम् ३ इन्द्रभयेन. ४ ब्राह्मणतासम्बन्धि ५ समुद्रम् ६ इन्द्रस्त्रीणां रम्भोर्वश्यादीनां समागमसुखदात्री ७ पुष्पैः सह फलानि. ८ ददति. ९ तरङ्गवच्चपलस्वभावानाम् १० गम्भीरत्वम्

## तडागान्योक्तयः ।

श्रीः॥ क्रौञ्चः क्रीडतु कूर्दतां च कुररः कङ्कः परिष्वज्जतां
मद्गुर्वाञ्चतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः ॥
भेकाः सन्तु बका वसन्तु चरतु स्वच्छन्दमाटिस्तटे
हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ॥ १ ॥

अयमवसरः सरस्ते सलिलैरुपकर्तुमर्थिनामनिशम् ॥
तदिदमतिसुलभमम्भो भविता जलपूर्णजलधराऽभ्युदये॥ २ ॥

रे पद्माकर यावदस्ति भवतो मध्ये पयः पूरितं
तावच्चक्रचकोरकङ्ककुररश्रेणीं समुल्लासय ॥
पश्चात्त्वं समटद्बकोटचटुलत्रोटीपुटव्याहति-
त्रुट्यत्कर्पटकर्परव्यतिकरैर्निन्दास्पदं यास्यसि ॥ ३ ॥

याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थ सन्ततिरसौ संतापमालाऽऽकुला ॥
एवं यस्य निरन्तराऽधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसोधिग्वारिधीनां जनुः ॥ ४ ॥

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ति ॥
संकोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ ५ ॥

इयत्यां सम्पत्तावपि च सलिलानां त्वमधुना
न तृष्णामार्तानां हरसि यदि कासार सहसा ॥
निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरं
कृशीभूतः केषामहह परिहर्ताऽसि खलु ताम् ॥ ६ ॥

---

१ शब्दं करोतु. २ जलकाकः 'पाणकावळा', ३ गच्छतु पूजयतु वा ४ सूर्यः ५ गमिष्यति. ६ मनोव्यथापरंपराभिः ७ मार्गे यत्सरस्तस्य. ८ आकाशमार्गम् ९ प्राप्नुवति सति. १० हे सरः ११ ग्रीष्मे १२ सूर्ये

## कमलान्योक्तयः ।

श्रीः ॥ रे पद्मिनीदल तवाऽत्र मया चरित्रं
दृष्टं विचित्रमिव यद्विदितं ध्रुवं तत् ॥
यैरेव शुद्धसलिलैः परिपालितस्त्वं
तेभ्यः पृथग्भवासि पङ्कभवोऽसि यस्मात् ॥ १ ॥
पङ्कजेजलेषु वासः प्रीतिर्मधुपेषु कण्टकैः संगः ॥
यद्यपि तदपि तवैतच्चित्रं मित्रोदये हर्षः ॥ २ ॥
कुसुमं कोशातक्या विकसति रात्रौ दिवा च कूश्माण्ड्याः ॥
अलिकुलनिचयै रुचिरं किंतु यशः कुमुदकमलयोरेव ॥ ३ ॥
वरमश्रीकता लोके नाऽसमानसमानता ॥
इतीव कुमुदोद्भेदे कमलैर्मुकुलायितम् ॥ ४ ॥
नालस्य प्रसरो जलेष्वपि कृताऽऽवासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखेऽतिमृदुता मित्रे महान् प्रश्रयः ॥
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ५ ॥
प्रसारितकरे मित्रे जगदुद्द्योतकारिणि ॥
किं न कैरव लज्जा ते कुर्वतः कोशसंवृतिम् ॥ ६ ॥
लक्ष्मीसंपर्कजातोऽयं दोषः पद्मस्य निश्चितम् ॥
यदेतद्गुणसंदोहधाम्नि चन्द्रे पराङ्मुखम् ॥ ७ ॥
रत्नाकरतनुजनुषि द्विजराजे राजति श्रियो मित्रे ॥
अमृतकरे च कलावति पद्मिनि वासाकुलीभवति ॥ ८ ॥
उदितवति द्विजराजे कस्य न हृदयं मुदं परां धत्ते ॥
संकुचासि कमल यदयं हरहर वामो विधिर्भवतः ॥ ९ ॥

---

१ कर्दमोत्पन्नः २ डलयोः सावर्ण्यात् जडेषु वास. ३ भ्रमरेषु, पक्षे मद्यपेषु. ४ खड्गरहै. दुष्टैश्च ५ सूर्यः स्निग्धश्च. ६ दोषाणामाकरे, चन्द्रे च. ७ कोशसंवरणम्

अन्तश्छिद्राणि भूयांसि कण्टका बहवो वहिः ॥
कथं कमलनालस्य नाऽभूवन् भङ्गुरा गुणाः ॥ १० ॥

अपि दलदरविन्दस्यन्दमानं मरन्दं
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ॥
दिशिदिशि निरपेक्षस्तावकीनं वितन्वन्
परिमलमयमन्यो बान्धवो गन्धवाहः ॥ ११ ॥

स्वच्छन्दं दलदरविन्द ते मरन्दं
विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः[1]
आमोदानथ हरिदन्तराणि[2] नेतुं
नैवाऽन्यो जगति समीरणात्[3]प्रवीणः ॥ १२ ॥

समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं
निवासः पद्मायाः[4] सुरहृदयहारी परिमलः ॥
गुणैरेतैरन्यैरपि च ललितस्याऽम्बुज तव
द्विजोत्तंसे[5] हंसे यदि रतिरतीवोन्नतिरियम् ॥ १३ ॥

नीरान्निर्मलतोजनिर्मधुरता रामा मुखस्पर्धिनी
वासो यस्य हरेः करे परिमलो गीर्वाणचेतोहरः[6] ॥
सर्वस्वं तदहो महाकविगिरां कामस्य चाऽम्भोरुह
त्वं चेत्प्रीतिमुरीकरोषि[7] मधुपे किं त्वां प्रति ब्रूमहे ॥ १४

पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि न हि किं ते ॥
हरहर विस्मृत्योक्तं क्व नु लज्जा सवितरक्तायाः[8] ॥ १५ ॥

## कूपान्योक्तयः ।

श्रीः ॥ चित्रं न तद्यदयमम्बुधिरम्बुदौघ
सिन्धुप्रवाहपरिपूर्णतया महीयान् ॥

१ भ्रमराः २ दिगन्तराणि. ३ वायोः ४ लक्ष्म्याः ५ पक्षिश्रेष्ठे ६ देवमनोहरः ७ अङ्गीकरोषि. ८ सूर्यानुरक्तायाः पक्षे सविता पिता तस्मिन् रक्तायाः पितृगामिन्या इत्यभिप्रायः

त्वं त्वर्थिनामुपकरोषि यदल्पकूप
निष्पीड्य कुक्षियुगलं हि महत्त्वमेतत् ॥ १ ॥
भीम[1]श्याम प्रतनुवदनक्रूरपातालकुक्षि-
क्रोड प्रान्तोपहितविभवस्याऽथ किं ते ब्रवीमि ॥
येन त्वत्तः समभिलषितं वाञ्छितुं क्षुद्रकूप
क्षाम्यन्मूर्तेर्भवति सहसा कस्य नाऽधोमुखत्वम् ॥ २ ॥
सेगुणैः[2] सेवितोपान्तो विनतैः प्राप्तदर्शनः ॥
नीचोऽपि कूपः सत्पात्रैर्जीव[3]नार्थं समाश्रितः ॥ ३ ॥
यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य ॥
जयति तथाऽपि विवेको दानं पात्राऽनुमानेन ॥ ४ ॥
नि[4]तरां नीचो[5]ऽस्मीति त्वं खेदं कूप मा कदाऽपि कृथाः॥
अत्यन्तसरस[6]हृदयो यतः परेषां गुणग्रहीताऽसि ॥ ५ ॥

## दावानलान्योक्तयः ।

श्रीः ॥ यस्यां महत्त्वभाजो भवन्ति गुणिनोऽमि[7]ता धनुर्दण्डाः॥
दहतस्तां वंशा[8]लिं को वनवह्ने विवेकस्ते ॥ १ ॥
हे दावाऽनल शैलाऽग्रवासिनः साधुशाखिनः ॥
मुग्ध व्यर्थं त्वया दग्धाः प्रेरितेन प्रभ[9]ञ्जनैः ॥ २ ॥
दुर्दैवप्रभवप्रभञ्जनजवादुद्धूतभूमीरुहा-
नेतान्सत्त्वगुणाश्रयानकरुणः शुष्यन्न किमुन्माद्यसि ॥
ब्रूमस्त्वां व[10]नहव्यवाह यदमी दग्धार्धदग्धा अपि
द्रष्टव्यास्तव मूर्छनाद्विलयिनो नामाऽपि न ज्ञायते ॥ ३॥
विध्वस्ता मृगपक्षिणो विधुरतां नीता स्थलीदेवता
धूमैरन्तारिताः स्वभावमलिनैराशामही तापिता ॥

---

१ भीम भयंकरं श्याम अन्धकारयुक्तत्वात्प्रतनुसकुचित मुख यस्य २रज्जुसहितैः ३ उदकार्थम् ४ अत्यन्तम् ५ निम्नः ६ रसयुक्त हृदय यस्य, ७ असख्याः ८ वेणुपङ्क्तिम्, ९ वायुभिः १० वनानल

भस्मीकृत्य सुपुष्पपल्लवफलैर्नम्रान्महापादपा-
नुद्वृत्तेन दवानलेन विपिनं वल्मीकशेषं कृतम् ॥ ४ ॥

## रत्नान्योक्तयः ।

यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचयः ॥
करोति तत्र किं नाम नारी नखविलेखनम् ॥ १ ॥
सोमकान्तो मणिः स्वच्छः सूर्यकान्तस्तथा न किम् ॥
उद्गारे तु विशेषोऽस्ति तयोरमृतवह्नयः ॥ २ ॥
स्फटिकस्य गुणो योऽसौ स एवाऽऽयाति दोषताम् ॥
धत्ते स्वच्छतया छायां यतो मलवतामपि ॥ ३ ॥
सुधाकरकरस्पर्शाद्बहिर्द्रवसि सर्वतः ॥
चन्द्रकान्तमणे तेन मृदुत्वं लोकविश्रुतम् ॥ ४ ॥
वपुःपरीणाहगुणेन तेभ्यो यशस्विनः किं मणयो भवन्ति ॥
तथाऽपि चूडासु महीपतीनां त एव खेलन्ति न गण्डशैलाः ॥५ ॥
त्यज निजगुणाऽभिमानं मरकत पतितोऽसि पामरे वणिजि ॥
काचमणेरपि मौल्यं लभसे यत्तदपि ते श्रेयः ॥ ६ ॥
भ्रष्टं नृपतिकिरीटाद्भूमौ पतितं तिरोहितं रजसा ॥
विधिविलसितेन रत्नं जनचरणविडम्बनं सहते ॥ ७ ॥
आघ्रातं परिचुम्बितं परि मुहुर्लीढं पुनश्चर्वितं
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः ॥
हे सद्रत्न तवैतदेव कुशलं यद्वानरेणाऽऽदरा-
दन्तःसारविलोकनव्यसनिना चूर्णीकृतं नाऽश्मना ॥ ८ ॥

## शङ्खान्योक्तयः ।

श्रीः ॥ कीटगृहं कुटिलोऽन्तःकठिनः क्षाराऽम्बुसंभवः शून्यः ॥
शङ्खः श्रीपतिनिकटे केन गुणेन स्थितिं लेभे ॥ १ ॥

---

१ (वारूळ) २ हीरकमणेः ३ विशालता ४ 'पाच' इतिलो० ५ नीचे ६ छादितं ७ दैवदुर्विपाकेन. ८ हनूमता

तातः क्षीरनिधिः स्वसा[१] जलधिजा[२] भ्राता सुरेशद्रुमः
सौजन्यं सह कौस्तुभेन शुचिता यस्य द्विजेशादपि ॥
धिक्कर्माणि स एव कम्बुरधुना पांखण्डकान्ताकरे[३]
विश्रान्तः प्रतिवासरं प्रतिगृहं भैक्ष्येण कुक्षिंभरिः ॥ २ ॥
क वाऽम्भोधौ जन्म क च वपुरिदं कुन्दधवलं[४]
क चाऽऽवासस्थानं कृतमहह विष्णोः करतलम् ॥
क नीचानामास्ये परिणतिरियं चुम्बनविधा-
वितीवायं शङ्खः करुणकरुणं रोदिति मुहुः ॥ ३ ॥

## सामान्यवृक्षान्योक्तयः।

श्रीः ॥ किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया
छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं सन्नतः ॥
हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षण
क्षोभाऽऽमोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ १ ॥
छायासुप्तमृगः शकुन्तनिवहैर्विष्वावलिप्तच्छदः
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः ॥
विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एकस्तरु-
र्यत्राऽङ्गीकृतसत्त्वसंप्लवभरे भग्नाऽऽपदोऽन्ये द्रुमाः ॥ २॥
शाखाशतचितवियतः सन्ति कियन्तो न कानने तरवः ॥
परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः ॥ ३ ॥
इहोद्याने संप्रत्यहह परिशिष्टाः क्रमवशा-
दमी वल्मीकास्ते भुजगकुललीलावसतयः ॥
गतास्ते विस्तीर्णस्तबकभरसौरभ्यलहरी-
परीतव्योमानः[६] प्रकृतिगुरवः[७] केऽपि तरवः ॥ ४ ॥

---

१ भगिनी २ लक्ष्मीः ३ 'जङ्गम' इति लो० ४ कुन्दपुष्पवच्छुभ्रम्
५ 'चह्वाटा' इतिलो० ६ व्याप्तम् ७ स्वभावतो महान्तः

तीव्रो निदाघसमयो बहुपथिकजनश्च मौरवः[1] पन्था ॥
मार्गस्थिततरुरेकः कियतां संतापमपहरति ॥ ५ ॥
प्रत्यग्रैः[2] पत्रनिचयैस्तरुर्यैरेव शोभितः ॥
जहाति जीर्णांस्तानेव किं वा चित्रं कुजन्मनः[3] ॥ ६ ॥

रोलम्बैर्न[4] विलम्बितं[5] विघटितं धूमाऽऽकुलैः कोकिलै-
र्मायूरैश्चलितं पुरैव रभसात्कीरैरधीरैर्गतम्[6] ॥
एकेनाऽपि सपल्लवेन तरुणा दावानलोपप्लवः
सोढः केन विपत्सु मुञ्चति जनो मूर्ध्नाऽपि यो लालितः ॥७॥

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ॥
धन्या महीरुहा येभ्यो निराशा यान्ति नाऽर्थिनः ॥ ८ ॥

छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः ॥
मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ ९ ॥

भुक्त्वा स्वादुफलं कृतं च शयनं शाखाऽग्रजैः पल्लवै-
स्त्वच्छायापरिशीतलं सुसलिलं पीतं व्यपेतश्रमैः ॥
विश्रान्ताः सुचिरं परं सुमनसः प्रीतिः किमत्रोच्यते
त्वं सन्मार्गतरुर्वयं च पथिका यामः पुनर्दर्शनम् ॥ १० ॥

भुक्तानि यैस्तव फलानि पचेलिमानि[9]
क्रोडस्थितैरहह वीतभयैः प्रसुप्तम् ॥
ते पक्षिणो जलरयेण विकृष्यमाणं
पश्यन्ति पादप भवन्तममी तटस्थाः ॥ ११ ॥

शाखोटशाल्मलिपलाशकरीरकाद्याः
शृण्वन्तु पुण्यनिलयो यदसौ वसन्तः ॥

---

१ मरुदेशसम्बन्धी २ नूतनैः ३ कुः पृथ्वी तस्याः जन्म यस्य पक्षे कुत्सितं जन्म यस्य. ४ भ्रमरैः ५ विलम्बो न कृतः ६ शुकैः ७ पलायितानां मध्ये एकेनाऽपि तरुणा सह दावानलोपप्लवः केन सोढ इति काकुः ८ उपद्रवः ९ पक्वानि

युष्मभ्यमर्पयति पल्लवपुष्पलक्ष्मीं
सौरभ्यसंभवविधिस्तु विधेरधीनः ॥ १२ ॥
पान्थाऽधार इति द्विजाऽऽश्रय इति श्लाघ्यस्तरूणामिति
स्निग्धच्छाय इति प्रियोदश इति स्थानं गुणानामिति ॥
पर्यालोच्य महातरो तव घनच्छायां वयं संश्रिता-
स्तत्त्वत्कोटरवासिनो द्विरसना दूरी करिष्यन्ति नः ॥ १३ ॥
हिमसमयो वनवह्निर्जवनः पवनस्तडिल्लताऽभिभवः ॥
हंत सहन्ते यावत्तावद्द्रुम कुरु परोपकृतिम् ॥ १४ ॥
मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला
वासो दुर्गमहीधरे तरुपते कुत्राऽस्ति भीतिस्तव ॥
एकः किंतु मनागयं जनयति स्वान्ते ममाऽधिज्वरं
ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः ॥ १५ ॥
धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च ॥
यो देहमर्पयति चाऽन्यसुखस्य हेतो-
स्तस्मै वदान्यगुरवे तरवे नमस्ते ॥ १६ ॥

## अथ वृक्षविशेषान्योक्तयः ।

## तत्र पूर्वं कल्पवृक्षान्योक्तयः ।

श्रीः ॥ कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ॥
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥ १ ॥
स्वर्णैः स्कन्धपरिग्रहो मरकतैरुल्लासिताः पल्लवा
मुक्ताभिस्तबकश्रियो मधुलिहां वृन्दानि नीलोत्पलैः ॥
संकल्पाऽनुविधायि यस्य फलितं कस्तस्य धत्ते तुलां
धिग्जातु द्रुमसत्कथासु यदयं कल्पद्रुमोऽपि द्रुमः ॥ २ ॥

१ सर्पाः पक्षे पिशुनाः २ पुष्टा. ३ दानशौण्डाना गुरवे

औदार्यं भुवनत्रयेऽपि विदितं सम्भूतिरम्भोनिधे-
र्वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः ॥
एवं दातृगुणोत्करः सुरतरोः सर्वोऽपि लोकोत्तरः
स्यादर्थिप्रवराऽर्थितार्पणविधावेको विवेको यदि ॥ ३ ॥
परिमलसुरभितनभसो बहवः कनकाद्रिपरिसरे तरवः ॥
तदपि सुराणां चेतसि निरुषितमिह पारिजातेन ॥ ४ ॥

## चन्दनान्योक्तयः ।

लोकानन्दन चन्दन द्रुमसखे नाऽस्मिन्वने स्थीयतां
दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् ॥
ते ह्यन्योन्यनिघर्षजातदहनज्वालाऽवलीसंकुला
न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम् ॥ १ ॥
सन्त्येव गिलिताऽऽकाशा महीयांसो महीरुहः ॥
तथाऽपि जनताचित्ताऽऽनन्दनश्चन्दनद्रुमः ॥ २ ॥
कान्ताकेलिं कलयतु तरुः कोपि कश्चित्प्रभूणा-
मत्यानन्दं जनयतु फलैः कोऽपि लोकान् धिनोतु ॥
धन्यं मन्ये मलयजमहो यः प्रभूतोपतापं
संसारस्य द्रुतमपनयत्यात्मदेहव्ययेन ॥ ३ ॥
भ्रातश्चन्दन किं ब्रवीमि विकटस्फूर्जत्फणाभीषणा
गन्धस्याऽपि महाविषाः फणभृतो गुप्त्यै पदे ये कृताः ॥
दैवात्पुष्पफलान्वितो यदि भवांस्तत्राऽभविष्यत्तदा
नो जाने किमकल्पयिष्यदधिकं रक्षार्थमस्याऽऽत्मनः ॥४॥
यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः ॥
निजवपुषैव परेषां तथाऽपि संतापमपनयति ॥ ५ ॥

---

१ संभवः २ वसतिः ३ इन्द्रवने. ४ आमोदः ५ दुष्टवेणुभिः ६ यूथानि ७ गिलितं ग्रस्तं आकाशं यैः ८ जनसमूहः ९ प्रीणयतु १० संसारे स्थितस्य जनस्य.

मूलं भुजङ्गैः शिखरं विहङ्गैः शाखाः प्लवङ्गैः[1] कुसुमानि भृङ्गैः ॥
नाऽस्त्येव तच्चन्दनपादपस्य यन्नाऽऽश्रितं सत्त्वभरैः समन्तात् ॥६॥

अयि मलयजमहिमाऽयं कस्य गिरामस्तु विषयस्ते ॥
उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ ७ ॥

पाटीर[2] तव पटीयान्[3] कः परिपाटीमिमामुरीकर्तुम्[4][5] ॥
यत्पिंषतामपि[6] नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥८॥

यैस्त्वं गुणगणवानपि सतां द्विजिह्वैरसेव्यतां[7] नीतः ॥
तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥ ९ ॥

## अगुर्वन्योक्ती।

अगुरुरिति[8] वदतु लोको गौरवमत्रैव पुनरहं मन्ये ॥
दर्शितगुणैव वृत्तिर्यस्य जने जनितदाहेऽपि ॥ १ ॥

आरामाऽऽभरणस्य[9] पल्लवचयैरापीततिग्मत्विषः
पाथोद प्रशमं नयाऽगुरुतरोरेतस्य दावज्वरम् ॥
ब्रूमस्त्वामुपकारकातरगतप्रायाः पयःसंपदो
दग्धोऽप्येष तरुर्दिशः परिमलैरापूर्य निर्वास्यति ॥ २ ॥

## चम्पकान्योक्तयः।

अन्तः प्रतप्तमरुसैकतदह्यमान-
मूलस्य चम्पकतरोः क्व विकाशचिन्ता ॥
प्रायो भवत्यनुचितस्थितिदेशभाजां
श्रेयः स्वजीवपरिपालनमात्रमेव ॥ १ ॥

उद्यानपालकलशाऽम्बुनिषेचनाना-
मेतस्य चम्पकतरोरयमेव कालः ॥

---

१ वानरैः २ चन्दन ३ अतिशये न पटुः समर्थः ४ रीतिम् ५ अङ्गीकर्तुम् ६ पेषणं कुर्वताम् ७ सर्पैः ८ नाम्ना अथ च लघुः ९ उद्यानभूषणस्य.

अस्मिन्निदाघनिहते घनवारिणा वा
संवर्धिते तव वृथोभयथोपयोगः ॥ २ ॥
साधारणतरुबुद्ध्या न मया बद्धस्तवाऽऽलवालोऽपि ॥
लज्जयसि मामिदानीं चम्पक भुवनाऽधिवासिभिः कुसुमैः ॥ ३ ॥
केनाऽत्र चम्पकतरो बत रोपितोऽसि
कुग्रामपामरजनाऽन्तिकवाटिकायाम् ॥
यत्र प्रवृद्धवनशाकविवृद्धिलोभा-
द्गोभग्नवाटघटनोचितपल्लवोऽसि ॥ ४ ॥
यद्यपि खदिराऽरण्ये गुप्तो वस्ते हि चम्पको वृक्षः ॥
तदपि च परिमलमतुलं दिशिदिशि कथयेत्समीरणस्तस्य ॥ ५ ॥

## अशोकान्योक्तयः।

किं ते नम्रतया किमुन्नततया किं वा घनच्छायया
किं वा पल्लवलीलया किमनया वाशोक पुष्पश्रिया ॥
यत्त्वन्मूलनिषण्णखिन्नपथिक[१]स्तोमः स्तुवन्नन्वहं
न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ १ ॥
मृदूनां स्वादूनां लघुरपि फलानां न विभव-
स्तवाऽशोक[२]स्तोकः स्तवकमहिमा सोऽप्य[३]सुरभिः ॥
यदेतन्नोतन्वीकरचरणलावण्यसुभगं
प्रवालं वालं स्यात्तरुषु स कलङ्कः किमपरः ॥ २ ॥
र[४]क्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शि[५]लीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ॥
[६]कान्तापादतलाऽऽहतिस्तव मुदे तद्वन्ममाऽप्यावयोः
सर्वं तुल्यमशोककेवलमहं धात्रा सशोकः कृतः ॥ ३ ॥

---

१ समूहः २ अल्पः ३ सुगन्धरहितः ४ रक्तवर्णः अनुरक्तश्च ५ भ्रमराः बाणाश्च. ६ कान्तापादघातः पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलिङ्गितः कुरबकः कुरुते विकासमालोकित-स्तिलक उत्कलिको विभातीत्यभियुक्तवचनम

## मालत्यन्योक्तयः।

किं मालतीकुसुम ताम्यसि[1] निष्ठुरेण
केनाऽपि यत्किल विलूनमितो[2] लताग्रात् ॥
लोकोत्तरेण विलसद्गुणगौरवेण
कोनाऽमुना शिरसि नाम करिष्यति त्वाम् ॥ १ ॥

म्रदीयस्त्वाऽऽधिक्यान्न[3] भवति विमर्दक्षममिदं
न चाऽन्येभ्यो रूपं भवति कुसुमेभ्योऽधिकतरम् ॥
प्रसूनं मालत्यास्तदपि हृदयाऽऽह्लादकरणं
प्रवीणैरामोदैर्भवति जगतो मौलिनिलयम् ॥ २ ॥

भवति हृदयहारी कोऽपि कस्याऽपि हेतु-
र्न खलु गुणविशेषः प्रेमबन्धप्रयोगे ॥
किसलयितवनान्ते कोकिलाऽऽलापरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ ३ ॥

कुसुमस्तबका नम्राः सन्त्येव परितो लताः ॥
तथाऽपि भ्रमरभ्रान्तिं हरत्येकैव मालती ॥ ४ ॥

गुञ्जति मञ्जुमिलिन्दे मालति मा मौनमुपयासीः ॥
शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥ ५ ॥

किं मालति म्लायसि[4] यद्यविद्यश्चुचुम्ब[5] तुम्बीकुसुमं[6] षडङ्घ्रिः[7] ॥
पदैश्चतुर्भिर्हि युतः पशुश्चेत्सषड्भिरध्यर्धपशुः कथं नो ॥ ६ ॥

मालतीकुसुमे भाति गुञ्जन्मत्तमधुव्रतः ॥
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥ ७ ॥

---

१ संतापं कुरुषे. २ छिन्नम् ३ मार्दवाधिक्यात् ४ खिद्यसि ५ मूढः ६ इक्ष्वाकुकुसुमम् ७ षट्पदः

## मल्लिकान्योक्तिः ।

न च गन्धवहेन[1] चुम्बिता न च पीता मधुपेन मञ्जरी ॥
पिहितैव[2] कठोरशाखया परिणामस्य[3] जगाम गोचरम् ॥ १ ॥

## केतक्यन्योक्ती ।

पत्राणि कण्टकशतैः परिवेष्टितानि
वार्ताऽपि नाऽस्ति मधुनो रजसान्धकारः ॥
आमोदमात्ररसिकेन मधुव्रतेन
नाऽऽलोकितानि तव केतकि दूषणानि ॥ १ ॥
एतासु केतकिलतासु विकासिनीषु
सौभाग्यमद्भुततरं भवती बिभर्ति ॥
यत्कण्टकैर्व्यथितमात्मवपुर्नजानं
त्वामेव सेवितुमुपक्रमते द्विरेफः ॥ २ ॥

## पाटलान्योक्तिः ।

पाटलयावनमध्ये कुसुमितया मोहितस्तथा भ्रमरः॥
सैवेयामिति यथाभूत्प्रतीतिरस्याऽन्यपुष्पेऽपि ॥ १ ॥

## सहकारान्योक्तयः[4] ।

न तादृक्कर्पूरे न च मलयजे[5] नो मृगमदे[6]
फले वा पुष्पे वा तव मिलति यादृक् परिमलः ॥
परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः
पिके वा काके वा लघुगुरुविशेषं न मनुषे ॥ १ ॥
उत्तंसकौतुकरसेन[7] विलासिनीभि-
र्लूनानि यस्य न नखैरपि पल्लवानि ॥

१ वायुना. २ छादिता. ३ परिणातिं प्राप्तेत्यर्थः ४ आम्रः ५ चन्दने. ६ कस्तूरिकायाम् ७ कर्णभूषणम्.

उद्यानमण्डनतरोः सहकार स त्व-
मङ्गारकारकरगोचरतां गतोऽसि ॥ २ ॥
कति पल्लविता न पुष्पिता वा तरवः सन्ति समन्ततो वसन्ते ॥
जगतो विजये तु पुष्पकेतोः सहकारी सहकार एक एव ॥ ३ ॥
यावत्फलोदयमुखः सहकारजातः
प्रागेव कण्टकचयेन वृतोऽसि तावत् ॥
छायाऽपि तेन सुलभा फलमस्तु दूरे
त्वं निष्फलोऽपि हि वरं सुखसेवनीयः ॥ ४ ॥
लोडितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे ॥
सहकार न प्रपेदे मधुपेन तवोपमा जगति ॥ ५ ॥
गर्वं मा कुरु शर्करे तव गुणान् जानन्ति राज्ञां गृहे
ये दीना धनवर्जिताश्च कृपणाः स्वप्नेऽपि पश्यन्ति नो ॥
आम्रोऽहं मधुकूपकैर्मम फलैस्तृप्ता हि सर्वे जना
हे रण्डे तव किं गुणा मम फलैस्तुल्यं न किंचित्फलम् ॥ ६ ॥

## पनसान्योक्तिः ।

गरीयः सौरभ्यं रसपरिचयेनाऽर्हति सुधा
सितामृद्वीकाऽपि प्रथिमनि[1] निमग्नः फलभरः ॥
परार्थे कोशश्रीरिति पुलकितं कण्टकमिषा-
दहो ते चारित्रं पनस मनसः कस्य न मुदे ॥ १ ॥

## कदल्यन्योक्तिः ।

तालीतरोरनुपकारिफलं फलित्वा
लज्जावशादुचित एव विनाशयोगः ॥
एतत्तु चित्रमुपकृत्य फलैः परेभ्यः
प्राणान्निजाञ्झटिति यत्कदली जहाति ॥ १ ॥

---

१ स्थुलत्वे

## द्राक्षान्योक्ती ।

यद्यपि न भवति हानिः परकीयां चराति रासभे द्राक्षाम् ॥
असमञ्जसमिति मत्वा तथाऽपि खलु खिद्यते चेतः ॥ १ ॥

दासेरकस्य[1] दासीयं बदरी यदि रोचते ॥
एतावतैव किं द्राक्षा न साक्षादमृतप्रदा ॥ २ ॥

## दाडिमान्योक्तिः ।

आ[2] पुष्पप्रसवान्मनोहरतया विश्वास्य विश्वं जनं
हंहो दाडिम तावदेव सहसे वृद्धिं स्वकीयामिह ॥
यावन्नैति परोपभोगसहतामेषा ततस्तां तथा
ज्ञात्वा ते हृदयं द्विधा दलति यत्तेनाऽतिवन्द्यो भवान् ॥ १ ॥

## नालिकेरान्योक्तिः ।

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नालिकेरा नराणाम् ॥
ददति जलमनल्पं स्वादु तज्जीवनान्तं
नहि कृतमुपकारं साधवो विस्मरन्ति ॥ १ ॥

## तालान्योक्तिः ।

अध्वन्यध्वनि भूरुहः फलभृतो नम्रानुपेक्ष्याऽऽदरा-
द्दूरादुन्नतिसंश्रयव्यसनिनः पान्थस्य मुग्धात्मनः ॥
यन्मूलं समुपागतस्य मधुरच्छायाफलैः का कथा
शीर्णेनाऽपि हि नोपयोगमगमत्पर्णेन तालद्रुमः ॥ १ ॥

## भूर्जान्योक्ती ।

दौर्जन्य[3]मात्मानि परं प्रथितं विधात्रा
भूर्जद्रुमस्य विफलत्वसमर्थनेन ॥

---

१ उष्ट्रस्य २ पुष्पोदयादारभ्य ३ दुर्जनत्वम्

किं चर्मभिर्निशितशस्त्रशताऽवकृत्तै-
राशां न पूरयति सोऽर्थिपरंपराणाम् ॥ १ ॥
कुर्वन्तु नाम जनतोपकृतिं प्रसून
च्छायाफलैरविकलैः सुलभैर्द्रुमास्ते ॥
सोढास्तु कर्तनरुजः पररक्षणार्थ-
मकेन भूर्जतरुणा करुणापरेण ॥ २ ॥

## अश्वत्थान्योक्तिः ।

वर्धितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः ॥
वार्धितो नरकाद्रक्षेत्स्पृष्टोऽरिष्टानि हन्ति यः ॥ १ ॥

## न्यग्रोधान्योक्तिः ।

विस्तीर्णो दीर्घशाखाश्रितशकुनिशतः शाखिनाम[1]ग्रणीस्त्वं
न्यग्रोध क्रोधमन्तः प्रकटयसि न चेद्वच्मि किंचित्तदल्पम् ॥
जल्पोऽप्येष त्र[2]पाकृत्प्रलघुपरिकरा कापि कूश्माण्डवल्ली
पल्लीपृष्ठप्रतिष्ठा हसति हि फलने त्वत्फलर्द्धिं किमन्यत् ॥ १ ॥

## मधूकान्योक्तिः ।

तत्तेजस्तरणेर्निदाघसमये तद्वारि मेघाऽऽगमे
तच्छैत्यं शिशिरे मदेकशरणैः सोढं पुरा यैर्द्रुमैः ॥
आयातोऽप्यधुना फलस्य समयः कोऽयं विना तैरिति
स्मृत्वा तानि शु[3]चेव रोदिति गलत्पुष्पैर्मधूकद्रुमः ॥ १ ॥

## शाल्मल्यन्योक्तिः ।

हंसाः पद्मवनाऽऽशया मधुलिहः सौरभ्यलाभाशया
पान्थाः स्वादुफलाशया [4]बलिभुजो [5]गृध्राश्च मांसाशया ॥
दूरादुत्तमपुष्परागनिकरैर्निःसारमिथ्योन्नते
रेरे शाल्मलिपादप प्रतिदिनं के न त्वया वञ्चिताः ॥ १ ॥

---

१ श्रेष्ठः २ लज्जाकृत्. ३ शोकेन. ४ काकाः ५ 'गिधाड' इति प्रसिद्धाः

## निम्बान्योक्तयः ।

निंब किं बहुनोक्तेन निष्फलानि फलानि ते ॥
यानि संजातपाकानि काका निःशेषयन्त्यमी ॥ १ ॥

यस्मादर्थिजनो मनोऽभिलषितं लब्ध्वा मुदा मेदुरः
सार्धं बन्धुजनैश्चकार विविधान्भोगान् विलासोद्धुरः ॥
तं दैवेन विवेकशून्यमनसा निर्मूल्य चूतद्रुमं
स्थाने तस्य तु काकलोकवसतिर्निम्बः समारोपितः ॥ २ ॥

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ॥
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥ ३ ॥

## बब्बुलान्योक्तिः ।

गात्रं कण्टकसंकटं प्रविरलच्छाया न चाऽऽयासहृ-
न्निर्गन्धः कुसुमोत्करस्तव फलं न क्षुद्विनाशक्षमम् ॥
बब्बूलद्रुममूलमेति न जनस्तत्तावदास्तामहो
अन्येषामपि शाखिनां फलवतां गुप्त्यैर्वृतिर्जायसे ॥ १ ॥

## खदिरान्योक्तिः ।

चन्दने विषधरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः ॥
रक्षितुं वद किमात्मसौष्ठवं संचिताः खदिरकण्टकास्त्वया ॥ १ ॥

## किंशुकान्योक्तिः ।

किंशुक किं शुकमुखवत्कुसुमानि विकासयस्यनिशम् ॥
यस्यां जनोऽनुरागी सा गौरेतैः कदाऽपि नोच्चार्या ॥ १ ॥

---

१ व्यर्थानि २ काकलोकनिवासः ३ यश्चेति—अत्रवृश्चतिसिञ्चत्यर्चतीत्यध्याहारेण. वाक्यानि पूरणीयानि यथा यः निम्ब परशुना वृश्चति छिनत्ति. एवमग्रेपि. ४ पुष्पप्रकरः ५ प्राचीर- ‘ कुपण ’ इतिलो० ६ सर्पान्. ७ गुप्ति. रक्षा तद्रहितम् ८ पलाशवृक्ष

## शाखोटान्योक्तिः

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्ष साधुविदितं कस्मादिदं कथ्यते ॥
वामेनाऽत्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकृतये मार्गस्थितस्याऽपि मे ॥ १ ॥

## पील्वन्योक्तिः ।

धन्याः सूक्ष्मफला अपि प्रियतमास्ते पीलुवृक्षाः क्षितौ
क्षुत्क्षीणेन जनेन हि प्रतिदिनं येषां फलं भुज्यते ॥
किं तैस्तत्र महाफलैरपि पुनः कल्पद्रुमाद्यैर्द्रुमै-
र्येषां नाम मनागपि श्रमनुदे छायाऽपि न प्राप्यते ॥१॥

## करीरान्योक्ती ।

फलं दूरतरेऽप्यास्तां पुष्णासि कुसुमैर्जनान् ॥
इतरे तरवो मन्ये करीर तव किंकराः ॥ १ ॥
किं पुष्पैः किं फलैस्तस्य करीरस्य दुरात्मनः ॥
येन वृद्धिं समासाद्य न कृतः पत्रसंग्रहः ॥ २ ॥

## बिल्वान्योक्तिः ।

आमोदीनि सुमेदुराणि च मृदुस्वादूनि च क्ष्मारुहा-
मुद्यानेषु वनेषु लब्धजनुषां सन्तीतरेषामपि ॥
किंतु श्रीफलता तवैव जयिनी मालूर दिङ्मण्डले
यस्यैतानि फलानि यौवनवती वक्षोजलक्ष्मीगृहाः ॥ १ ॥

## इक्ष्वन्योक्ती ।

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ॥

---

१ गुडशर्करादिः ।

न संप्राप्तो वृद्धिं यदि सभृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥ १ ॥
मुखे यद्वैरस्यं वपुरपि पुनर्ग्रन्थिनिचितं
न सन्तप्तः कोऽपि क्षणमपि भजेन्मूलमभितः ॥
फलं चैवाऽप्राप्यं वितथरसलिप्सस्य भवत–
स्तदिक्षो नाऽयुक्तं विहितमितरैर्यत्तु दलनम् ॥ २ ॥

## कार्पासान्योक्ति ।

श्लाघ्यं कार्पासफलं यस्य गुणैरन्ध्रवान्ति पिहितानि ॥
मुक्ताफलानि तरुणीकुचकलशतटेषु विलसन्ति ॥ १ ॥
निष्पेषोऽस्थिचयस्य दुःसहतरः प्राप्तं तुलाऽऽरोहणं
ग्राम्यस्त्रीनखचुम्बनव्यतिकरस्तन्त्रीप्रहारव्यथा ॥
मातङ्गोक्षितमण्डवारिकणिकापानं च कूर्चाऽऽहतिः
कार्पासेन पराऽर्थसाधनविधौ किंकिं न चाऽङ्गीकृतम् ॥ २ ॥

## शणान्योक्तिः ।

भूर्जः परोपकृतये निजकवचविकर्तनं सहते ॥
परबन्धनाय तु शणः प्रेक्षध्वमिहाऽन्तरं कीदृक् ॥ १ ॥

## कण्टकारिकान्योक्तिः ।

उचितं नाम नारिङ्ग्यां केतक्यामपि कण्टकाः ॥
रसगन्धोज्झिते किं ते कण्टकाः कण्टकारिके ॥ १ ॥

---

१ अग्रे २ पर्वव्याप्तं ३ वितथा दलनातिरिक्तसाधनाभावेन विफला रसस्य लिप्सा लब्धुमिच्छा यस्मिंस्तस्य. ४ मातङ्गेन अन्त्यजेन उक्षितं सिक्तं यन्मण्डवारि असिक्थद्रवोदकं तत्कणिकायाः पानं अतीवाशुचीति भावः

## धत्तूरान्योक्ती ।

महेशस्त्वां धत्ते शिरसि रसराजस्य जयिनी
विशुद्धिस्त्वत्संगात्कनकमयमेतात्त्रिभुवनम् ॥
तनोति त्वत्सेवां ननु कनकवृक्ष त्वदपरो
न यत्नात्कः कुर्याद्यदि न सुलभीभावमभजः ॥ १ ॥
उन्मत्तधूर्ततरुणेन्दुनिवासयोग्ये
स्थाने पिशाचपतिना विनिवेशितोऽसि ॥
किं कैरवाणि विकसन्ति तमः प्रयाति
चन्द्रोपलो द्रवति वार्धिरुपैति वृद्धिम् ॥ २ ॥

## ताम्बूलवल्ल्यन्योक्तिः ।

किं वीरुधो भुवि न सन्ति सहस्रसंख्या
यासां दलानि न परोपकृतिं भजन्ति ॥
एकैव वल्लिषु विराजति नागवल्ली
या नागरीवदनचन्द्रमलंकरोति ॥ १ ॥

## तुम्ब्यन्योक्तिः ।

सर्वास्तुम्ब्यः समकटुरसास्तुम्बिवल्लीप्रसूता-
स्तासां बद्धा अपि कतिपया दुस्तरं तारयन्ति ॥
शब्दायन्ते सरसमपराः शुष्ककाष्ठे निषण्णा-
स्तन्मध्येऽन्या ज्वलितहृदयाः शोणितं संपिबन्ति ॥ १ ॥

## बकुलान्योक्तिः ।

निसर्गादारामे तरुकुलसमारोपसुकृती
कृती मालाकारो बकुलमपि कुत्राऽपि निदधे ॥

---

१ पारदस्य २ त्वत्संगाज्जातेति शेषः जयिनी उत्कर्षवती रसराजस्य पारदस्य शुद्धिः एतत्त्रिभुवनं कनकमयं तनोतीत्यन्वयः ३ सुवर्णमयम् ४ धत्तूर ५ कु
६ चन्द्रकान्तः ७ लताः ८ कु

इदं को जानीते यदयमिह कोणाऽन्तरगतो
जगज्जालं कर्ता कुसुमभरसौरम्यभरितम् ॥ १ ॥

## पद्मिन्यन्योक्ती ।

अयि मकरन्दस्यन्दिनि पद्मिनि मन्ये तवैव सुभगत्वम् ॥
पुष्पवती[1]मपि भवतीं त्यजति न वृद्धः शुचि[2]र्हंसैः[3] ॥ १ ॥
कमलिनि मलिनी[4]करोषि चेतः किमिति बकैरवहेलिता[5]ऽनभिज्ञैः[6] ॥
परिणतमकरन्दमार्मिका[7]स्ते जगति भवन्तु चिरायुषो मिलिन्दाः[8] ॥ २

## संकीर्णान्योक्तयः ।

श्रीः ॥ त्वं चेत्संचरसे वृषेण[9] लघुता का नाम दिग्दन्तिनां[10]
व्यालैः काञ्चनकुण्डलानि कुरुषे हानिर्न हेम्नः पुनः ॥
मूर्ध्ना चेद्वहसे जडांशु[11]मयशः किं नाम लोकत्रये
दीपस्याऽम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे १
छिन्त्से ब्रह्मशिरो यदि प्रथयसि[12] प्रेतेषु सख्यं यदि
क्षीबः[13] क्रीडसि मातृभि[14]र्यदि रतिं धत्से श्मशाने यदि ॥
सृष्ट्वा संहरसि प्रजा यदि तथाऽप्याधाय भक्त्या मनः
कं सेवे करवाणि किं त्रिजगती शून्या त्वमेवेश्वरः ॥२॥
दामोदरमुदरा[15]हितभुवनं यो वहति लीलया गरुडः ॥
कस्य तरोरुपरिष्टात् खिन्नो[16]ऽसौ श्रान्तिमपनयतु ॥३॥
अहिरहिरिति संभ्रमपदमितरजने किमपि कातरे भवतु ॥
विहंगपते[17]राहारः स तु सरलमृणालदलरुचिरः ॥ ४ ॥
युक्तोऽसि भुवनभारे मा वक्रां वितनु कंधरां शेष ॥
त्वय्येकस्मिन् दुःखिनि सुखितानि भवन्ति भुवनानि ५

---

१ पुष्पयुक्ता रजस्वला च २ श्वेतः पवित्रश्च. ३ राजहंसः परमहंसश्च. ४ कलुषीकरोषि ५ अवहेलां नीता तिरस्कृतेतियावत् ६ अपण्डितैः ७ मर्मज्ञाः ८ भ्रमराः ९ नन्दिना. १० दिग्गजानाम् ११ चन्द्रम् १२ ख्यापयसि. १३ मत्तः १४ ब्राह्म्यादिभिः १५ उदरे आहितं स्थापितं भुवनं ब्रह्माण्डं येन, १६ श्रान्तः १७ गरुडस्य.

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भजन्त्यशुचयः स्पर्शेन यस्याऽपरे ॥
किंवाऽतः परमुच्यते स्तुतिपदं यज्जीवनं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निषेद्धुं क्षमः ॥६॥

समुद्रस्याऽपत्यं प्रथितमहिमामुद्रितभुवः
स्वसा प्रालेयांऽशोस्त्रिनयनशिरोधाम वसतेः ॥
मुरारातेर्योषित्सरसिरुहकिंजल्कनिलया
तथापि श्रीः स्त्रीत्वात्प्रकृतिचपलाऽऽलिङ्गति खलान् ॥७॥

तापापहे सहृदये रुचिरे प्रबुद्धे
मित्राऽनुरागनिरते धृतसद्गुणौघे ॥
स्वाङ्गप्रदानपरिपूरितषट्पदौघे
युक्तं तवेह कमले कमले स्थितिर्यत् ॥ ८ ॥

जम्भाऽरिरेव जानाति रम्भासंभोगविभ्रमम् ॥
चेटीचेटीविटः किं स्विज्जानात्यमरकामिनीम् ॥ ९ ॥

यदेतत्कामिन्याः सुरतविरतौ पल्लवरुचा
करेणाऽऽनीतस्त्वं वससि सह हारेण गुणिना ॥
मुहुः कुर्वन् गीतं कुचकलशपीठोपरिलुठ-
न्नये वीणादण्ड प्रकटय फलं कस्य तपसः ॥ १० ॥

सद्वृत्तसद्गुणविचित्रमहार्हकान्ते
कान्ताघनस्तनतटाऽङ्कितचारुमूर्ते ॥
आः पामरीकठिनकण्ठविलग्नभङ्ग
हा हारहारितमहो भवता गुणित्वम् ॥ ११ ॥

यत्पूर्वं पवनाऽग्निशस्त्रसलिलैश्चीर्णं तपो दुश्चरं
तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः ॥

---

१ चन्द्रस्य. २ इन्द्रः ३ घटवाहिकादासी तस्याः जारः ४ देवाङ्गनाम् ५ गुणयुक्तेन हारेण. ६ आचरितम् ७ सुवर्णरूपम्

मुग्धाऽपाङ्गकपोलचुम्बनसुखं संगश्च रत्नोत्तमैः
प्राप्तः कुण्डल वांछसे किमपरं यन्मूढ दोलायसे ॥ १२ ॥
मौलौ सन्मणयो गृहं गिरिगुहा त्यागः किलाऽऽत्मत्वचो
निर्यत्नोपनतैश्च वृत्तिरनिलैरेकत्र चर्येदृशी ॥
अन्यत्राऽनृजुवर्त्मता द्विरसना वक्रे विषं वीक्षणं
सर्वाऽमङ्गलसूचकं कथय भो भोगिन् सुखं किं त्विदम् ॥ १३ ॥

दुश्चरितैरेव निजैर्भवति दुरात्मा विशङ्कितो नित्यम् ॥
दशनव्ययमापन्नं पन्नगकुलमाकुलीभवति ॥ १४ ॥

यस्मै ददाति विवरं भूमिः फूत्कारमात्रभीतेव ॥
आशीविषः स दैवाद्भौमिकरण्डे स्थितिं लभते ॥ १५ ॥

भेकेर्न क्वणता सरोषपरुषं यत्कृष्णसर्पाऽऽनने
दातुं कर्णचपेटमुद्गतभिया हस्तः समुल्लासितः ॥
यच्चाऽधोमुखमक्षिणी पिदधता नागेन तूष्णीं स्थितं
तत्सर्वं विषमन्त्रिणो भगवतः कस्याऽपि लीलायितम् ॥१६॥

आपूर्येत पुनः स्फुरच्छफरिकासारोर्मिभिर्वायुभि-
र्भूयोऽपि प्रविजृम्भमाणनलिनं पश्येम तोयाऽऽशयम् ॥
इत्याशाशततन्तुबद्धहृदयो नक्तंदिवं दीनधीः
शुष्यत्यातपशोषितस्य सरसस्तीरे जरत्सारसः ॥ १७

अस्तंगतोऽयमरविन्दवनैकबन्धु-
र्भास्वान्न लङ्घयति कोऽपि विधिप्रणीतम् ॥
हे चक्र धैर्यमवलम्ब्य विमुञ्च शोकं
धीरास्तरन्ति विपदं न तु दीनचित्ताः ॥ १८ ॥

---

१ आत्मभोगकञ्चुकस्य. ( कातइतिप्रसिद्धस्य ) २ वर्तनम् ३ वक्रमार्गता. ४ द्विरावृत्ता रसना रसनाद्वयमित्यर्थः द्विरसने इति वा पाठः प्रथमाद्विवचन ५ दन्तनाशम् ६ सर्पः ७ गारुडिकरण्डः ८ मण्डूकेन ९ निर्भयेन.

हंसः प्रयाति शनकैर्यदि यातु तस्य
नैसर्गिकी गतिरियं हि न तत्र चित्रम् ॥
गत्या तया जिगमिषुर्बक एव मूढ-
श्चेतो दुनोति सकलस्य जनस्य नूनम् ॥ १९ ॥

उत्तुङ्गमत्तमातङ्ग मस्तकन्यस्तलोचनः ॥
आसन्नेऽपि च सारङ्गे[1] न वाञ्छां कुरुते हरिः[2] ॥ २० ॥

यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो हि कृतः ॥
निजवपुषैव परेषां तथाऽपि संतापमपनयति ॥ २१ ॥

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् ॥
रमते नैव हंसस्य मानसं मानसं विना ॥ २२ ॥

विषभारसहस्रेण गर्वं नाऽऽयाति वासुकिः ॥
वृश्चिको बिन्दुमात्रेण ऊर्ध्वं वहति कण्टकम् ॥ २३ ॥

दिव्यं चूतरसं पीत्वा गर्वं नो याति कोकिलः ॥
पीत्वा कर्दमपानीयं भेको रटरटायते ॥ २४ ॥

त्यज किंशुकपुष्पिताभिमानं निजशिरसि भ्रमरोपसेवनेन ॥
विकसन्नवमल्लिकावियोगात्कुरुते वन्हिधिया त्वयि प्रवेशम् ॥२५॥

काकस्य गात्रं यदि काञ्चनस्य माणिक्यरत्नं यदि चञ्चुदेशे ॥
एकैकपक्षे ग्रथितं मणीनां तथाऽपि काको न तु राजहंसः ॥ २६ ॥

सच्छिद्रनिकटे वासो न कर्तव्यः कदाचन ॥
घटी पिबति पानीयं ताड्यते झल्लरी यथा ॥ २७ ॥

माकन्दराजपरिरम्भणलालिताऽपि
मल्लीवधूर्मधुपरागवती [illegible] ॥
दृष्ट्वाऽपि तत्कुटिलतां न जहाति चूतः
प्रायः कुजातिनि[illegible] कुतोऽभिमानः ॥ २८ ॥

---

१ मृगे. २ सिंहः ३ [illegible]

आबद्धकृत्रिमसटाजटिलांऽसभित्ति-
रारोपितो मृगपतेः पदवीं यदि श्वा ॥
मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाऽधिपस्य ॥ २९ ॥
कैवर्तकर्कशकरग्रहणच्युतोऽपि
जालान्तरे निपतितः शफरो वराकः॥
दैवात्ततो विगलितो गिलितो बकेन
वक्रे विधौ वद कथं व्यवसायसिद्धिः ॥ ३० ॥
माधुर्यसाराधरितामृतस्य तत्कण्टकित्वं पनसस्य सह्यम् ॥
उन्मादिनो मातुलपुत्रकस्य कथं सहामो बत कण्टकित्वम् ॥३१॥
प्रदीप किमु कुप्यसि प्रलयमारुतप्रज्वल-
त्प्रभापटलपाटलप्रकटपावकव्यक्तये ॥
त्वमङ्ग किमु कामिनीकुचतटीपटीपल्लव-
प्रकम्पनपरिस्फुरत्पवनलेशपारं गतः॥ ३२ ॥
यां कान्ति वहसि परां प्रदीपभद्र-
स्वीयाऽसाविति हृदि मा स्म मन्यथास्त्वम् ॥
सस्नेहे त्वयि निशि भानुनाऽऽहिताऽसौ
नैवं चेदहनि सति क्व वा गता सा ॥ ३३ ॥
भ्रातर्ग्राम्यकुविन्द कन्दलयता वस्त्राण्यमूनि त्वया
गोणीविभ्रमभाजनानि सुबहून्यात्मा किमायास्यते ॥
किं त्वेकं रुचिरं चिरादभिनवं वासस्तदासूत्र्यतां
यन्नोज्झन्ति कुचस्थलात्क्षणमपि क्षोणीभुजां वल्लभाः ॥ ३४ ॥
भ्रातः काञ्चनलेपगोपितबहिस्ताम्राऽऽकृते सर्वतो
माभैषीः कलशे स्थिरो भव चिरं देवालयस्योपरि ॥

---

१ माधुर्यसारेण तुच्छीकृतं अमृतं येन. २ धत्तूरफलस्य. ३ (हे गावठीसाळ्या)
४ काञ्चनलेपेन गोपिता वाह्या ताम्रा आकृतिर्यस्य. ५ ‘ कळस ’ इति लोके

ताम्रत्वं गतमेव काञ्चनमयी कीर्तिः स्थिता तेऽधुना
नान्तस्तत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः ॥ ३५ ॥
न यत्र गुणवत्पात्रमेकमप्यस्ति सन्निधौ ॥
कस्तत्र भवतः पान्थ कूपेऽम्बुग्रहणाऽऽग्रहः ॥ ३६ ॥
तुल्यं[1] भूभृतिजन्मतुल्यमुभयोर्मूल्यं च तुल्यं वपु-
स्तुल्यं दार्ढ्य[2]मुदग्रै[3]टङ्कदलनं तुल्यं च पाषाणयोः ॥
एकस्याऽखिलवन्दनाय विधिना देवत्वमारोपितं
तद्द्वारे विहिता परस्य तु पदाऽऽघाताऽऽस्पदं देहैली[4] ॥ ३७ ॥
उर्णा नैष दधाति नैष विषयो वाहस्य दोहस्य वा
तृप्तिर्नाऽस्य महोदरस्य बहुभिर्ग्रासैः पैलालै[5]रपि ॥
हा कष्टं कथमस्य पृष्ठशिखरे गोणी समारोप्यते
को गृह्णाति कपर्दकैरलमिति ग्राम्यैर्गजो हास्यते ॥३८॥
ग्रासोद्गलितसिक्थस्य करिणः किं गतं भवेत् ॥
पिपीलिका तु तेनैव सकुटुम्बोपजीवति ॥ ३९ ॥
बन्धनस्थोऽपि मातङ्गः सहस्रभरणक्षमः
अपि स्वच्छन्दचारी श्वा स्वोदरेणाऽपि दुःखितः ॥४०॥
समुपागतवति दैवादवहेलां कुटजमधुकरे मा गाः ॥
मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥ ४१ ॥
उपरिकर[6]वालधाराऽऽकाराः क्रूरा भुजङ्गमपुंगववत्
अंतःसाक्षाद्द्राक्षा दीक्षागुरवो जयन्ति केऽपि जनाः ॥
विश्वास्य मधुरवचनैः साधून् ये वञ्चयन्ति नम्रतमाः
तानपि दधासि मातः काश्यपि[7] यातस्तवापि च विवेकः[8] ॥४२॥
एको विश्वसतां हराम्यपघृणः[9] प्राणानहं प्राणिना-
मित्येवं परिचिन्त्य मास्म मनसि व्याधाऽनुतापं कृथाः ॥

---

१ पर्वते. २ दृढता. ३ उदग्रा ये टङ्कास्तैर्दलनं. ४ 'पायरी' तिलो० ५ धान्यत्वग्भिः ६ 'तरवार.' ७ भूमे ८ गतः ९ निष्करुणः

भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः
साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षाः खलाः ॥ ४३ ॥

अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ॥
निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ ४४ ॥

उपकारमेव तनुते विपद्गतः सद्गुणो महताम् ॥
मूर्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ ४४ ॥

गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् ॥
तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ ४५ ॥

दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरंतनमघं चुलुकीकरोति ॥
भूतेषु किं च करुणां बहुलीकरोति
संगः सतां किमु न मङ्गलमातनोति ॥ ४५ ॥

अनवरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् ॥
आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥ ४६ ॥

मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते॥
सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा॥४७॥

उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते ॥
राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥ ४८ ॥

अयाचितः सुखं दत्ते याचितश्च न यच्छति ॥
सर्वस्वं चाऽपि हरते विधिरुच्छृङ्खलो नृणाम् ॥ ४९ ॥

कोटिद्वयस्य लाभेऽपि न तं सद्वंशजं धनुः ॥
असद्वंश्यः शरः स्तब्धो लक्षलाभाभिशङ्कया ॥ ५० ॥

अज्ञतया प्रेम्णा वा चूडामणिमाकलय्य काचमणिम् ॥
नृपतिर्वहेत शिरसा तेनाऽसौ नह्यनर्घ्यमणिः ॥ ५१ ॥

---

१ पूज्यः २ लोभः ३ दानेच्छा. ४ अमूल्यः

## कस्तूरिकान्योक्तयः।

अयि बत गुरुगर्वं मास्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण ॥
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥ १ ॥
आयि त्यक्तासि कस्तूरि पामरैः पङ्कशङ्कया ॥
अलं खेदेन भूपालाः किं न सन्ति महीतले ॥ २ ॥
जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो
दूरे पुंसां वपुषि रचना पङ्कशङ्कां करोति ॥
यद्यप्येवं सकलसुरभिद्रव्यगर्वोऽपहारी
को जानीते परिमलगुणः कोऽपि कस्तूरिकायाः ॥ ३ ॥

## मिश्रप्रकरणम् ।

श्रीः॥दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय॥
परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः[1] स एव ॥ १ ॥
निष्कलङ्ककलयैकयाऽपि[2] यः संयुतः स खलु पूज्यते जनैः ॥
भद्र पश्य जलजोऽपि धार्यते शंकरेण शिरसा निशाकरः॥ २ ॥
अन्यमुखे दुर्वादो[3] यः प्रियवदने स एव परिहासः ॥
इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥ ३ ॥
अहो बत महत्कष्टं विपरीतमिदं जगत् ॥
येनाऽपत्रपते[6] साधुरसाधुस्तेन तुष्यति ॥ ४ ॥
अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति ॥
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ ५ ॥

---

१ त्रिलोक्या तिलकः भूषणभूतः २ निर्मलविद्यया ३ दुष्टभाषणम्
४ 'थट्टा' इतिलोके. ५ काष्ठम् ६ लज्जा प्राप्नोति.

दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः ॥
पश्येदं मधुकरिणां[1] संचितमर्थं हरन्त्यन्ये ॥ ६ ॥
न तद्भुक्तं न तत्पीतं न तत्सुप्तं न तद्गतम् ॥
यन्मांसमाहिषक्षीरललना[2]वाजि[3]विवर्जितम् ॥ ७ ॥
करोति निर्मलाऽऽधा[4]रस्तुच्छस्याऽपि महर्घ[5]ताम् ॥
अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ८ ॥
स एव धन्यो विपादि यः स्वरूपं न मुञ्चति ॥
त्यजत्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥ १० ॥
मासिमासि समा ज्योत्स्ना पक्षयोरुभयोरपि ॥
तत्रैकः शुक्लपक्षोऽभूद्यशः पुण्यैरवाप्यते ॥ ११ ॥
मत्स्यादयो न जा[6]नन्ति नीरक्षीरविवेचनम् ॥
प्रसिद्धिरेव हंसस्य यशः पुण्यैरवाप्यते ॥ १२ ॥
हस्तादपि न दातव्यं गृहादपि न दीयते ॥
परोपकरणार्थाय वचने किं दरिद्रता ॥ १३ ॥
पदस्थितस्य पद्मस्य मित्रे वरुणभास्करौ ॥
पदच्युतस्य तस्यैव क्लेशदाहकरावुभौ ॥ १४ ॥
वनानि दहतो वन्हेः सखा भवति मारुतः ॥
स एव दीपनाशाय कृशे कस्याऽस्ति सौ[7]हृदम् ॥ १५ ॥
गतः स कालो यत्राऽऽसीर्दवज्ञा[8] कल्प[9]शाखिनाम् ॥
उदुम्बरफलेभ्योऽपि स्पृहयामोऽद्य जीवितम् ॥ १६ ॥
भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरास्त्रियः ॥
विभवो दानशक्तिश्च नाऽल्पस्य तपसः फलम् ॥ १७ ॥

---

१ मधुमक्षिकाणाम् २ स्त्री ३ अश्वः ४ आश्रयः ५ महामूल्यत्वम्
६ न जानन्तीति काकुः ७ मित्रभावः ८ अवमानः ९ कल्पवृक्षाणाम्

वरमुन्नतलाङ्गूलात्सदाधूननभीषणात् ॥
सिंहात्पादप्रहारोऽपि न शृगालाऽधिरोहणम् ॥ १८ ॥
अशठमलोभमजिह्मं त्यागिनमनुरागिणं विशेषज्ञम् ॥
यदि नाऽऽश्रयति नरं श्रीः श्रीरेव हि वञ्चिता तत्र॥१९॥
अनुचितकर्माऽऽरम्भः स्वजनविरोधो बलीयसि स्पर्धा ॥
प्रमदाजनविश्वासो मृत्युद्वाराणि चत्वारि ॥ २० ॥
दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ॥
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ २१ ॥
त्वं चेन्नीचजनानुरागरभसादस्मासु मन्दाऽऽदरः
का नो मानद मानहानिरियती भूः किं त्वमेकप्रभुः ॥
गुञ्जापुञ्जपरंपरापरिचयाद्भिल्लीजनैरुज्झितं
मुक्तादाम न धारयन्ति किमहो कण्ठे कुरङ्गीदृशः ॥२२॥
पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह ॥
पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥ २३ ॥
जनिता चोपनेता च यश्च विद्यां प्रयच्छति ॥
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ २४ ॥
त्यजेदेकं कुलस्याऽर्थे ग्रामस्यार्थे कुलं त्यजेत् ॥
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ २५ ॥
अमृतं दुर्लभं नृणां देवानामुदकं तथा ॥
पितॄणां दुर्लभः पुत्रस्तक्रं शक्रस्य दुर्लभम् ॥ २६ ॥
यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ॥
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ २७ ॥

---

१ पुच्छम् २ कम्पनम् ३ सरलम् ४ दानशीलम् ५ 'ठकली' इतिलो० ६ बलवद्विषये ७ विग्रहः ८ स्त्रीषु विश्वासः ९ उत्पादकः १० उपनयनकर्ता. ११ न्यायमार्गानुसारिणः १२ तिर्यग्जातीयाः पशव इत्यर्थः

विद्याऽभ्यासो विचारश्च समयोरेव शोभते ॥
विवाहश्च विवादश्च समयोरेव शोभते ॥ २८ ॥
लक्ष्मीर्वसति जिह्वाग्रे जिह्वाग्रे मित्रबान्धवाः ॥
जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं ध्रुवम् ॥ २९ ॥
यस्मिन् देशे न संमानो न प्रीतिर्न च बान्धवाः ॥
न च विद्याऽऽगमः कश्चिन्न तत्र दिवसं वसेत् ॥ ३० ॥
वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः ॥
अथैवमागते काले भिन्द्याद् घटमिवाऽश्मनि ॥ ३१ ॥
सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ॥
अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥ ३२ ॥
सुलभाः पुरुषा राजन् सततं प्रियवादिनः ॥
अप्रियस्य च पथ्यस्य[१] वक्ता श्रोता च दुर्लभः ॥ ३३ ॥
मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च ॥
द्विषतां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ३४ ॥
गतश्रीर्गणकान् द्वेष्टि गताऽऽयुश्च चिकित्सकान् ॥
गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत ॥ ३५ ॥
शनैः[२] पन्थाः शनैः कन्था शनैः पर्वतमस्तके ॥
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैःशनैः ॥ ३६ ॥
आत्मबुद्धिः सुखायैव गुरुबुद्धिर्विशेषतः ॥
परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयावहा ॥ ३७ ॥
सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु ॥
स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखी भवति ३८

---

१ हितस्य. २ पञ्चसु वाक्येषु अतिवाह्यते, सिद्ध्यति, आरोहति, प्राप्यते, वर्धते, इति पञ्चक्रियाध्याहारः एतानि मार्गातिवाहनादीनि अनेन षष्ठेन वाक्येन त्वरयैतानि न भवन्तीति सूचितम्.

अर्थाऽऽतुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा ॥
विद्यातुराणां न सुखं न निद्रा क्षुधातुराणां न रुचिर्न वेला ३९

अन्वयागतविद्यानामन्वयागतसंपदाम् ॥
विदुषां च प्रभूणां च हृदयं नाऽवेलिप्यते ॥ ४० ॥

ज्योतिषं शकुनं धर्मं प्रायश्चित्तं चिकित्सितम् ॥
विना शास्त्रेण यो ब्रूते तमाहुर्ब्रह्मघातकम् ॥ ४१ ॥

मक्षिका मशको वेश्या मूषिको याचकस्तथा ॥
ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः ॥ ४२ ॥

अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ॥
अर्चयन्ति नरा नागं न तार्क्ष्यं न गजादिकम् ॥ ४३ ॥

शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया ॥
श्रियोऽनुकूलदानेन लज्जया च कुलाऽङ्गनाः ॥ ४४ ॥

गन्तव्या राजसभा द्रष्टव्या राजवल्लभाः पुरुषाः ॥
यद्यपि न भवत्यर्थो भवत्यनर्थप्रतीकारः ॥ ४६ ॥

ब्राह्मणा गणका वेश्याः सारमेयाश्च कुक्कुटाः ॥
दृष्टेष्वन्येषु कुप्यन्ति न जाने तस्य कारणम् ॥ ४९ ॥

पुत्रपौत्रवधूभृत्यैः संपूर्णमपि सर्वदा ॥
भार्याहीनगृहस्थस्य शून्यमेव गृहं मतम् ॥ ५० ॥

एकं दृष्ट्वा शतं दृष्ट्वा दृष्ट्वा पञ्चशतान्यपि ॥
अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके ॥ ५१ ॥

नवे वयसि यः शान्तः स शान्त इति मे मतिः ॥
धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥ ५२ ॥

अर्था हसन्त्युचितदानविहीनलुब्धं
भूम्यो हसन्ति मम भूमिरिति ब्रुवाणम् ॥

---

१ वंशपरम्परागतविद्यानाम् २ सगर्वं न भवति. ३ कुलस्त्रियः ४ अरिष्टनिरसनम् ५ श्वान.

जारा हसन्ति तनयानुपलालयन्तं
मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ ५३ ॥
ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी ॥
भार्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ ५४ ॥
प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ॥
तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ५५ ॥
विवाहकाले रतिसंप्रयोगे प्राणाऽत्यये सर्वधनाऽपहारे ॥
विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चाऽनृतान्याहुरपातकानि ५६
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥ ५७॥
धिग्गृहं गृहिणीशून्यं धिक्कलत्रमपुत्रकम् ॥
धिक्पुत्रमविनीतं च धिग्ज्योतिषमजातकम् ॥ ५८ ॥
अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च ॥
अजापुत्रं बलिं दद्याद्देवो दुर्बलघातकः ॥ ५९ ॥
दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः ॥
शालको गृहनाशाय सर्वनाशाय मातुलः ॥ ६० ॥
जले तैलं खले गुह्यं पात्रे दानं मनागपि ॥
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ ६१ ॥
हरिं हरीतकीं चैव गायत्रीं च दिनेदिने ॥
मोक्षाऽऽरोग्यतपःकामश्चिन्तयेद्भक्षयेज्जपेत् ॥ ६२ ॥
उद्योगः कलहः कण्डूर्द्यूतं मद्यं परस्त्रियः ॥
आहारो मैथुनं निद्रा सेवनात्तु विवर्धते ॥ ६३ ॥
पुराकृतकरग्रहा वसनपात्ररक्षाकरी
स्थिता शयनसंनिधौ गुणवती निगूढाऽऽनना ॥

---

१ मूर्खः २ पवित्रं. ३ गजः ४ स्वल्प. ५ वस्तुमाहात्म्येन. ६ करेण ग्रहणं धारण. पक्षे करग्रह. पाणिग्रहः ७ सूत्रनिर्मिता पक्षेपातिव्रत्यदाक्षिण्यादिगुणयुक्ता.

मता जठरपूर्तये भुजशिरः समारोपिता
मनोहराति धोंगेटी युवतिवत्प्रवासे नृणाम् ॥ ६४ ॥
निद्राप्रियो यः स तु कुम्भकर्णो हतः समीके रघुनन्देनन ॥
ततोऽस्यपत्नी विधवा प्रजाता श्रोतुं समायाति कथां पुराणम्॥६५॥
मानरहितः स्वकार्ये साधनसुपटुर्महाजलधिवासी ॥
श्रुत्येकदृष्टगोत्रः प्रियभक्तश्चित्तपावनो भगवान् ॥ ६६ ॥
संत्तारकं नादि नान्तमन्तर्यस्य स्थितिस्ततः ॥
भवेन्नयन ते सख्यं गुणैरेतै रमापतेः ॥ ६७ ॥
स्त्री विनश्यति रूपेण ब्राह्मणो राजसेवया ॥
गावो दूरप्रचारेण हिरण्यं लाभलिप्सया ॥ ६८ ॥
दरिद्रता धीरतया विराजते कुरूपता शीतलया विराजते ॥
कुभोजनं चोष्णतया विराजते कुवस्त्रता शुभ्रतया विराजते ॥६९॥
संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि ॥
तुषेर्णोऽपि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ ७० ॥
अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ॥
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ ७१ ॥

---

१ स्कन्धम् २ पडशीतिलोके. ३ समामे. ४ संमानरहितः पक्षे प्रमाणरहितः अमेय इत्यर्थः ५ स्वकीयकार्यसाधने दक्षः पक्षे स्वेषा भक्तानां कार्यकरणे समर्थः ६ कोकणदेशवास्तव्यः पक्षे विष्णुर्हि जलधिशायीति प्रसिद्धिः ७ श्रुतयो वेदाः संख्यया ४ चत्वारः एकं १ अंकानां वामतो गत्या १४ चतुर्दशगोत्रवान्. पक्षे वेदान्तैकदृष्टं गोत्रंनाम यस्य सः ८ प्रियःभक्तः ओदनः पक्षे भक्ताः यस्य. ९ चित्त पावयतीति चित्तशुद्धिकारकः पक्षे चित्तपावनजातीयः १० सता तारकं रक्षक पक्षे सती तारका कनीनिका यस्मिन्. ११ अनाद्यनन्तं पक्षे नकारः अदौ अन्ते च यस्य. १२ यस्य भगवतः अन्तःस्थितिः सर्वांतर्यामित्वात्. पक्षे यस्य यकारस्य अन्तर्मध्ये स्थितिः एतैर्गुणैः रमापतेर्विष्णोः सख्यं सौहृदं भवेत्. १३ संघातः १४ धान्यत्वक्. १५ रज्जुत्वम्.

कृतार्थः स्वामिनं द्वेष्टि [1]कृतदारस्तु मातरम् ॥
जाताऽपत्या पतिं द्वेष्टि गतरोग[2]श्चिकित्सकम् ॥ ७२ ॥
नागो भाति मदेन [3]कं जलरुहैः पूर्णेन्दुना शर्वरी
शीलेन प्रमदा [4]जवेन तुरगो नित्योत्सवैर्मन्दिरम् ॥
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः
सत्पुत्रेण कुलं नृपेण वसुधा लोकत्रयं विष्णुना ॥ ७३ ॥
विस्मयः सर्वथा [5]हेयः [6]प्रत्यूहः सर्वकर्मणाम् ॥
तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयताम् ॥ ७४ ॥
षट्कर्णो [7]भिद्यते [8]मन्त्रश्चतुष्कर्णः स्थिरो भवेत् ॥
द्विकर्णस्य च मन्त्रस्य ब्रह्माऽप्य[9]न्तं न गच्छति ॥ ७५॥
भूमिपतावर्थपतौ बाले वृद्धे तपोनिधौ विदुषि ॥
योषिति मूर्खे गुरुषु च विदुषा नैवोत्तरं देयम् ॥ ७६ ॥
सद्भावेन जयेन्मित्रं सद्भावेन च बान्धवान् ॥
स्त्रीभृत्यान् दानमानाभ्यां दाक्षिण्येनेतरं जनम् ॥ ७७ ॥
यशः पुण्यं कल[10]त्राणि पुत्रोत्पत्तिर्नि[11]धिस्तथा ॥
सुकृतादेव लभ्यन्ते न च पार्थ पराक्रमात् ॥ ७८ ॥
राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ॥
लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजा ॥ ७९ ॥
[12]क्षान्तितुल्यं तपो नाऽस्ति न तोषात्परमं सुखम् ॥
नाऽस्ति तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥ ८० ॥
यत्राऽस्ति लक्ष्मीर्विनयो न तत्र अभ्यागतो यत्र न तत्र लक्ष्मीः ॥
उभौ च तौ यत्र न तत्र विद्या नैकत्र सर्वो गु[13]णसान्निपातः ॥८१॥

---

१ कृता दाराः स्त्री येनसः २ वैद्यम् ३ उदकम् ४ वेगेन. ५ त्याज्यः ६ विघ्नरूपः ७ भेद प्राप्नोति सर्वेषा ज्ञानविषयो भवतीति भावः ८ विचारः मसलत' इति लोके ९ पारम् १० स्त्रियः ११ 'ठेवा' इति लोके १२ क्षमा १३ गुणसमुदायः

वैद्या वदन्ति कफपित्तमरुद्विकारान्
ज्योतिर्विदो ग्रहगतिं परिवर्तयन्ति ॥
भूता[1]ऽभिषङ्ग इति भूतविदो वदन्ति
प्राचीनकर्म बलवन्मुनयो वदन्ति ॥ ८२ ॥

द्वारि प्रविष्टः सहसा ततः किं दृष्टः प्रभुः स्मेरमुखस्ततः किम् ॥
कथा श्रुता श्रोत्ररमा ततः किं व्यथा न शान्ता यदि जाठरीया ८३

सप्तैतानि न पूर्यन्ते पूर्यमाणान्यनेकशः ॥
ब्राह्मणोऽग्निर्यमो राजा पयोधिरुदरं गृहम् ॥ ॥ ८४ ॥

संतोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने ॥
त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥ ८५ ॥

मृगा मृगैः संगमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः ॥
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ८६

यः कुन्त[2]पाणिरिह भूप इति प्रसिद्धो
भूखण्डमात्रविभवः परसेवकश्च ॥
तस्याऽऽत्मजः सततमिच्छति राजशब्दं
व्रीडे जगज्जननि हन्त निराश्रयाऽसि ॥ ८७ ॥

एकः पञ्च[3]त्वमासाद्य जायते पुनरष्ट[4]धा ॥
अहो वाणिज्यसंपत्तिः काशीपुरनिवासिनाम् ॥ ८८ ॥

सुपर्ण[5]परिसेवितस्तदनु साधु[6]पूगाऽन्वितो
द्विजा[7]ऽवनमहापटुस्तदनु सार[8]संधानभाक् ॥

---

१ भूतबाधा. २ 'भाला' इति लोके. ३ संख्या मरणं च. ४ अष्टमूर्तिः शिव इति भावः ५ सुपर्णेन गरुडेन सेवितः पक्षे सुष्ठु पर्णेन नागवल्लीदलेन सह परिसेवितः ६ साधूना पूगै. सङ्घैरन्वित. पक्षे साधुः सम्यक पूगः क्रमुकस्तेनान्वितः ७ द्विजाः द्विजन्मानो ब्राह्मणादयस्तेषामवनं रक्षण तस्मिन् महासमर्थः पक्षे द्विजाः दन्ता ८ सारं श्रेष्ठवस्तु मोक्षादि तस्य संधान सावि भजतीति. पक्षे सारः खदिरसारस्तेन संधानं सम्यङ्मेलनं भजतीति.

सदैव सुधयाऽशनं भवति यस्य विष्णोः सम-
स्तमाखुरिति सेव्यतां भवति वै यतो रागिता ॥ ८९ ॥
सुकुलजन्मविभूतिरनेकधा प्रियसमागमसौख्यपरंपरा ॥
नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥९०
एहि स्वागतमाविशाऽऽसनमिदं कस्माच्चिराद्दृश्यसे
का वार्ता परिदुर्बलोऽसि नितरां प्रीतोऽस्मि तद्दर्शनात् ॥
इत्येवं समुपागतं द्विजवरं संभावयन्त्यादरा-
त्तेषां युक्तमशङ्कितेन मनसा गेहेषु गन्तुं सदा ॥ ९१ ॥
प्राप्य चाऽप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ॥
न वेत्त्यात्महितं यस्तु स भवेदात्मघातकः ॥ ९२ ॥
कल्पान्तवातसंक्षोभलङ्घिताऽशेषभूभृतः ॥
स्थैर्यप्रसादमर्यादास्ता एव हि महोदधेः ॥ ९३ ॥
पादसंवाहने वज्री केशसंवाहने फणी ॥
अहो भाग्यं पुरन्ध्रीणां दधिसंमथने रविः ॥ ९४ ॥
बोधितोऽपि बहुसूक्तिविस्तरैः किं खलो जगति सज्जनो भवेत् ॥
स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत् क्वचित् ९५
संपत्सरस्वती सत्यं संतानं सदनुग्रहः ॥
सत्ता सुकृतसंभारः सकाराः सप्त दुर्लभाः ॥ ९६ ॥
कृते च रेणुका कृत्या त्रेतायां जानकी तथा ॥
द्वापरे द्रौपदी कृत्या कलौ कृत्या गृहेगृहे ॥ ९७ ॥

---

१ सुधया अमृतेन यस्य भोजन भवति. पक्षे सुधया चूर्णेन 'चुना' इतिप्रसिद्धेन सदैव यस्य भक्षणं भवति. २ यतो विष्णोः अरागिता विषयेष्वप्रीतिर्जायते. पक्षे यतः तमाखोः तमाखुपत्रात् रागिता मुखरक्तिमा जायते. ३ ऐश्वर्यम् ४ गौरव 'वजनदारी' ति लोके. ५ कृशः । ६ इन्द्रियपाटवम् ७ पादस्थमलनिर्हरणार्थे कृतो भर्जितेष्टकाखण्डो वज्री ति लोके कथ्यते पक्षे इन्द्रः ८ दन्तपत्रिका पक्षे शेषः ९ मन्थाः पक्षे सूर्यः

विद्वान् संसदि पाक्षिकः परवशो मानी दरिद्रो गृही
वित्ताढ्यः कृपणः सुखी परवशो वृद्धो न तीर्थाऽऽश्रितः ॥
राजा दुःसचिवप्रियः कुलभवो मूर्खः पुमान् स्त्रीजितो
वेदान्ती रहितक्रियः किमपरं हास्यास्पदं भूतले ९८
मांसं मृगाणां दशना गजानां मृगद्विषां चर्म फलं द्रुमाणाम् ॥
स्त्रीणां स्वरूपं च नृणां हिरण्यमेते गुणा वैरकरा भवन्ति ९९
आदरेण यथा स्तौति धनवन्तं धनेच्छया ॥
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १०० ॥
यस्य चाऽप्रियमन्विच्छेत्कुर्यात्तस्य सदा प्रियम् ॥
व्याधो मृगवधं कर्तुं सम्यग्गायति सुस्वरम् ॥ १०१ ॥
न पुत्रात्परमो लाभो न भार्यायाः परं सुखम् ॥
न धर्मात्परमं मित्रं नाऽनृतात्पातकं परम् ॥ २ ॥
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ॥
वचनं चापमानं च मतिमान्न प्रकाशयेत् ॥ ३ ॥
ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः ॥
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ४ ॥
अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः ॥
किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ ५ ॥
परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः ॥
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ ६ ॥
जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ॥

---

१ सभायाम् २ पक्षधारी. ३ गृहस्थाश्रमी. ४ स्त्रैणः ५ हास्यस्थानम् ६ दन्ताः ७ सिंहव्याघ्रादीनाम्, ८ पारधी ' ति लोके. ९ सौजन्यम्. १० मौनम्. ११ अदम्भत्वम्

स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ ७ ॥

सुपात्रदानाच्च भवेद्धनाऽऽढ्यो धनप्रभावेण करोति पुण्यम् ।

पुण्यप्रभावात्सुरलोकवासी पुनर्धनाऽऽढ्यः पुनरेव भोगी ॥ ८ ॥

कुपात्रदानाच्च भवेद्दरिद्रो दारिद्र्यदोषेण करोति पापम् ॥

पापप्रभावान्नरकं प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥ ९ ॥

प्रभुर्विवेकी धनवांश्च दाता विद्वान् विरागी प्रमदा सुशीला ॥

तुरंगमः शस्त्रनिपातधीरो भूमण्डलस्याऽऽभरणानि पञ्च ॥ १० ॥

प्राप्य चलानाधिकारान् शत्रुषु मित्रेषु बन्धुवर्गेषु ॥

नाऽपकृतं नोपकृतं न सत्कृतं किं कृतं तेन ॥ ११ ॥

सत्यभामासमाश्लिष्टः[1] साधुवृन्दावने[2] रतः ॥

यशोदया[3] समायुक्तस्त्वां पायात्त्वादृशो हरिः ॥ १२ ॥

वित्तं परिमितमधिकव्ययशीलं पुरुषमाकुलीकुरुते ॥

ऊनांऽशुकमिव[4] पीनस्तनजघनायाः कुलीनायाः ॥ १३ ॥

सौवर्णानि सरोजानि निर्मातुं सन्ति शिल्पिनः ॥

तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ १४ ॥

सर्वोद्वेगकरं मृगादनममुं संत्यज्य हा धिक् त्वया

लोकस्याऽनपकारिणं गिरिनदीतीराऽटवीनिर्वृतम् ॥

अश्नन्तं तृणमेणशावमदयं व्याध घ्नताऽमुं वृथा

देवो दुर्बलघातकोऽयमिति सा गाथा यथार्थीकृता ॥ १५ ॥

स्वदेशजातस्य नरस्य नूनं गुणाऽधिकस्याऽपि भवेदवज्ञा[5] ॥

निजाऽङ्गना यद्यपि रूपराशिस्तथाऽपि लोकः परदारसक्तः १६

घृतं न श्रूयते कर्णे दधि स्वप्नेऽपि दुर्लभम् ॥

---

१ सत्यभामया आलिङ्गितः पक्षे सत्यम्, भा कान्तिः, मा लक्ष्मीः एतैर्युक्तः २ साधु यद्वृन्दावनं तस्मिन् रत. पक्षे साधूना वृन्द समूहस्तस्य अवनं रक्षण तस्मिन्नासक्तः ३ यशोदयानन्दपत्न्या युतः पक्षे यशः कीर्ति. दया कारुण्य ताभ्या युक्तः ४ अल्पं वस्त्रम्. ५ अवमानः

मुग्धे दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥ १७ ॥
को न याति वशं लोके मुखे पिण्डेन पूरितः ॥
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १८ ॥
ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः ॥
वीणां [1]संहर नारदस्तुतिकथाऽऽलापैरलं तुम्बुरो
सीतार[2]ल्लकभल्लभग्नहृदयः स्वस्थो न लङ्केश्वरः ॥ १९ ॥
येषां श्रीमद्यशोदासुतपदकमले नाऽस्ति भक्तिर्नराणां
येषामाभीर[3]कन्याप्रियगुणकथने नाऽनुरक्ता रस[4]ज्ञा ॥
येषां श्रीकृष्णलीलाललितगुणरसे सादरौ नैव कर्णौ
धिक् तान् धिक् तान् धिगेतान् कथयति सततं कीर्तनस्थो मृदङ्गः २०
न कश्चिदपि जानाति किं कस्य श्वो भविष्यति ॥
अतः श्वःकरणीयानि कुर्यादद्यैव बुद्धिमान् ॥ २१ ॥
किं चित्रं यदि राजनीतिकुशलो राजा भवेद्धार्मिकः
किं चित्रं यदि वेदशास्त्रनिपुणो विप्रो भवेत्पण्डितः ॥
तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी
तच्चित्रं यदि निर्दयोऽपि पुरुषः पापं न कुर्यात्क्वचित् २२
पिता रत्नाऽऽकरो यस्य लक्ष्मीर्यस्य सहोदरी ॥
शंखो रोदिति भिक्षार्थी नादत्तमुपतिष्ठति ॥ २३ ॥
लुब्धानां याचकः शत्रुश्चोराणां चन्द्रमा रिपुः
जारस्त्रीणां पतिः शत्रुर्मूर्खाणां बोधको रिपुः ॥ २४ ॥
सौमित्रि[5]र्वदति विभीषणाय लङ्कां देहि त्वं भुवनपते विनैव कोश[6]म् ॥
एतस्मिन् रघुपतिराह वाक्यमेतद्विक्रीते करिणि किमङ्कुशे विवादः २५

---

१ उपसंहारं कुरु. २ सीतायारल्लकः सीमन्तः 'भाङ्' इति प्रसिद्धः सएव भल्लस्तेन भग्नं हृदयं यस्य. ३ गोपकुमारिका. ४ जिह्वा. ५ लक्ष्मणः ६ भाण्डारगृहम्.

यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ॥
तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा॥२६॥
अमन्त्रमक्षरं नाऽस्ति नाऽस्ति मूलमनौषधम् ॥
अयोग्यः पुरुषो नाऽस्ति योजकस्तत्र दुर्लभः ॥ २७ ॥
परोपदेशवेलायां शिष्टाः सर्वे भवन्ति वै ॥
विस्मरन्तीह शिष्टत्वं स्वकार्ये समुपस्थिते ॥ २८ ॥
अविवेकिनि भूपाले नश्यन्ति गुणिनां गुणाः ॥
हावभावाः पुरन्ध्रीणां भर्तरीव नपुंसके ॥ २९ ॥
निस्सारस्य पदार्थस्य प्रायेणाऽऽडम्बरो महान् ॥
न सुवर्णे ध्वनिस्तादृग्यादृक् कांस्ये प्रजायते ॥ १३० ॥
भो भाद्रपक्ष सकलद्विजकल्पवृक्ष
काऽस्मान् विहाय गतवानसि देहि वाचम् ॥
डिण्डीरपिण्डपरिपाण्डुरवर्णभाजां
लाभः कथं त्वयि गते घृतपायसानाम् ॥ ३१ ॥
गुणिनां निर्गुणानां च दृश्यते महदन्तरम् ॥
हारः[1] कण्ठगतः स्त्रीणां नूपुराणि[2] च पादयोः ॥ ३२ ॥
आकर्ण्य भूपाल यशस्त्वदीयं विधूनयन्तीह[3] न के शिरांसि ॥
विश्वम्भराभङ्गभयेन[4] धात्रा नाऽकारि कर्णौ भुजगेश्वरस्य[5] ॥३३
अगाधहृदया भूपाः कूपा इव दुरासदाः ॥
घटका[6] गुणिनो[7] नोचेत्कथं लभ्येत जीवनम्[8] ॥ ३४ ॥
अलभ्यं लब्धुकामस्य जनस्य गतिरीदृशी ॥
अलभ्येषु मनस्तापः संचिताऽर्थो विनश्यति ॥ ३५ ॥
शत्रुवाक्याऽमृतं श्रुत्वा तेन सौहार्दमार्जवम् ॥

---

१ मुक्ताहारः २ 'पैंजण' इतिलोके ३ कम्पयन्ति ४ पृथ्वी. ५ शेषस्य. ६ कार्यसाधकाः पक्षे कुम्भाः ७ गुणवन्तः पक्षे रज्जुयुक्ताः ८ जीवनोपायभूतं द्रव्यं पक्षे उदकम्.

नहि धीरेण कर्तव्यमात्मनः शुभमिच्छता ॥ ३६ ॥

अरण्यं सारङ्गै[1]र्गिरिकुहरगर्भाश्च हरिभि[2]-
र्दिशो दिङ्मातङ्गैः[3] सलिलमुषितं पङ्कजवनैः ॥
प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः
सतां माने म्लाने मरणमथ वा दूरगमनम् ॥ ३७ ॥

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ॥
मधुरापि हि मूर्छयते विषविटपि[4]समाश्रिता वल्ली[5] ॥ ३८ ॥

कलारत्नं गीतं गगनतलरत्नं दिनमणिः
सभारत्नं विद्वान् श्रवणपटुरत्नं हरिकथा ॥
निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी
महीरत्नं श्रीमान् जयति रघुनाथो नृपवरः ॥ ३९ ॥

तीर्थानामवलोकनं परिचयः सर्वेषु वित्ताऽर्जनं
नानाऽऽश्चर्यनिरीक्षणं चतुरता बुद्धेः प्रशस्ता गिरः ॥
एते सन्ति गुणाः प्रवासविषये दोषोऽस्ति चैको महान्
यन्मुग्[6]धामधुराधरा[7]धरसुधापानं विना स्थीयते ॥ ४० ॥

अध्वा जरा मनुष्याणामनध्वा वाजिनां जरा ॥
अमैथुनं जरा स्त्रीणां वस्त्राणामातपो जरा ॥ ४१ ॥

वाजी चारुगतिः शशाङ्कधवलं छत्रं प्रिया पृष्ठतः
प्रोत्तुङ्गस्तनमण्डला च पुरतो भृत्याः पुनः पञ्चषाः ॥
ताम्बूलं मधुरं सखा च चतुरः संपद्यते चेत्पथि
प्राहुस्तत्कटकप्रयाणमितरत्प्राणप्रयाणं बुधाः ॥ ४२ ॥

विप्रेभ्यः साधुदानं रिपुजनसुहृदां चोपकारान् कुरु त्वं
सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्यं यथार्थम् ॥

---

१ मृगैः २ सिंहैः ३ दिग्गजैः ४ विषवृक्षाश्रिता ५ लता ६ षोडशवार्षिकी ७ अधरोष्ठः

श्रोत्रे ते तथ्यमेतत्कथयति सततं लेखनी भाग्यशालि-
न्नोचिन्नष्टेऽधिकारे मम मुखसदृशं तावकाऽऽस्यं भवेद्धि ४३

व्यालाश्रितोऽपि विफलोऽपि सकण्टकोऽपि
वक्रोऽपि पङ्कजनितोऽपि दुरासदोऽपि ॥
गन्धेन बन्धुरसि केतक पुष्पजेन
ह्येको गुणः खलु निहन्ति समस्तदोषान् ॥ ४४ ॥

विश्वामित्रपराशरप्रभृतयो वाताऽम्बुपर्णाऽशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ॥
शाल्यन्नं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरे ॥ ४५

धूलिधूसरसर्वाङ्गो विकसद्दन्तकेसरः ॥
आस्ते कस्याऽपि धन्यस्य द्वारि दन्ती गृहेऽर्भकः॥४६॥

अकूर्चारम्भोऽपि प्रतिचिबुकदेशं करतलं
प्रतिज्ञायां कुर्वन् युवतिषु दृशं स्निग्धतरलाम् ॥
कुमारो हुंकारात्परिषदि समानानगणय-
न्भुजौ वक्षः पश्यन्नववयसि कान्ति वितनुते ॥ ४७ ॥

कीटोऽयं भ्रमरीभवेदविरतध्यानात्तथा चेदहं
रामः स्यां त्रिजटे हताऽस्मि पुरतो दाम्पत्यसौख्यच्युता॥
एवं चेत्कृतकृत्यतैव भविता रामस्तवध्यानतः
सीतात्वं च निहत्य रावणरिपुं गन्ताऽसि रामाऽन्तिकम् ॥

राजंस्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमाः कृताः ॥
मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥ ४९ ॥

धर्मं प्रसङ्गादपि नाऽचरन्ति पापं प्रयत्नेन समाचरन्ति ॥
आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति॥५०

---

१ दुष्प्रापः २ न विद्यते कूर्चाना श्मश्रूणामारम्भो यस्य ३ चञ्चलाम्
४ सततम्

मित्रं स्वच्छतया रिपुं नय[1]बलैर्लुब्धं धनैरीश्वरं
कार्येण द्विजमादरेण युवतिं प्रेम्णा शमैर्बान्धवान् ॥
अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद्वशम् ॥९१॥
अर्थी लाघवमुच्छ्रितो निपतनं कामाऽऽतुरो लाञ्छनं
निः[3]स्वो वञ्चनमुन्मना[4] विकलतां दोषाऽऽकुलः संशयम् ॥
लुब्धोऽकीर्तिमसङ्गरः[5] परिभवं दुष्टोऽन्यदोषे रतिं
दुर्वाग[6]प्रियतां दुरोदरवशः[7] प्राप्नोति कष्टं मुहुः ॥ ९२ ॥
नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीर[8]ङ्गनानां रति-
र्दंपत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो[9] गिराम् ॥
लावण्यं वपुषः श्रुतं सुमनसः शान्तिर्द्विजस्य क्षमा
शक्तस्य द्रविणं गृहाऽऽश्रमवतां शीलं सतां मण्डनम् ९३
कार्पण्येन यशः क्रुधा[10] गुणचयो[11] दम्भेन सत्यं क्षुधा
मर्यादा व्यसनैर्धनं च विपदा स्थैर्यं प्रमादैर्द्विजः ॥
पैशुन्येन कुलं मदेन विनयो दुश्चेष्टया पौरुषं
दारिद्र्येण जनाऽऽदरो ममतया चात्मप्रकाशो हतः ९४
स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां
स्वास्थ्यं स्वल्पधनस्य संहतिरसद्वृत्तेश्च वाग्डम्बरः ॥
स्वाऽऽचारस्य सदर्चनं परिणतेर्विद्याकुलस्यैकता
प्रज्ञाया धनमुन्नतेर्नतिततिः शान्तेर्विवेको बलम् ॥९५॥
अप्रतिबुद्धे[12] श्रोतरि वक्तुर्वाक्यं प्रयाति वैफल्यम् ॥
नयनविहीने भर्तरि लावण्यमिवेह खञ्जनाक्षीणाम्[13] ॥ ९६ ॥

---

१ नीतिशक्तिभिः २ कलङ्कम् ३ निर्धनः ४ अस्वस्थान्तःकरणः ५ अदृष्टयुद्धप्रसङ्गः ६ दुर्वचनशीलः ७ द्यूतवशः ८ लज्जा ९ प्रसन्नता १० क्रोधेन ११ गुणसमुदायः १२ मूर्खे १३ खञ्जरीटनयनानाम्

गुणेषु क्रियतां यत्नः किमाटोपैः[1] प्रयोजनम् ॥
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ ५७ ॥
गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः ॥
प्रासादशिखराऽऽरूढः काकः किं गरुडायते ॥ ५८ ॥
काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके
मूर्खः पण्डितसंगमे न रमते दासो न सिंहासने ॥
कुस्त्री सज्जनसंगमे न रमते नीचं जनं सेवते
या यस्य प्रकृतिः स्वभावजनिता केनाऽपि न त्यज्यते५९
काकः पक्षबलेन भूपतिगृहे ग्रासं यदि प्राप्तवान्
किं वा तस्य महत्वमस्य लघुता पञ्चो[2]ऽननस्याऽऽगता ॥
येनाऽऽक्रम्य करीन्द्रगण्डयुगलं निर्भिद्य हेलालवा-
ल्लब्ध्वा ग्रासवरं वैराटकधिया[3] मुक्तागणस्त्यज्यते ॥ ६०॥
शूरश्च कृतविद्यश्च रूपवत्यश्च योषितः ॥
यत्रयत्र गमिष्यन्ति तत्रतत्र कृताऽऽदराः ॥ ६१ ॥
वैष्णवाश्च पिशाचाश्च मत्कुणाश्च पिपीलिकाः ॥
भस्मदर्शनमात्रेण पलायन्ते दिशो दश ॥
काचं मणिं काञ्चनमेकसूत्रे मुग्धा निबध्नान्ति किमत्र चित्रम् ॥
विचारवान् पाणिनिरेकसूत्रे[4] श्वानं युवानं मघवानमाह ॥ ६२ ॥
अशनं मे वसनं मे जाया मे बन्धुवर्गो मे ॥
इति मेमेकुर्वाणं कालवृको हन्ति पुरुषाऽजम् ॥ ६३ ॥
अगस्तितुल्याश्च घृताऽब्धिशोषणे दम्भोलितुल्या वटकाऽद्रिभेदने
शाकाऽवलीकाननवह्निरूपास्त एव भट्टा इतरे भटाश्च[6] ॥ ६४ ॥
चत्वारो धनदायादा धर्माऽग्निनृपतस्कराः ॥
तेषां ज्येष्ठाऽवमानेन त्रयः कुप्यन्ति बान्धवाः ॥ ६५ ॥

---

१ आडम्बरैः २ सिंहस्य. ३ कपर्दकबुद्ध्या. ४ श्वयुवमघोनामतद्धिते इतिसूत्रे
५ अरण्यम् ६ योद्धारः

धन्या गोकुलकन्या वयमिह मन्यामहे जगति ॥
यासां नयनसरोजेष्वञ्जनभूतो निरञ्जनः साक्षात् ॥ ६६ ॥
[1]नरकोपस्थितिं नाम नान्यां मन्यामहे वयम् ॥
यदेषा दृश्यतेऽमुष्मिन् नरे कोपस्य रे स्थितिः ॥ ६७ ॥
परदाररतिः [2]फलाऽभिसंधिर्बहुदम्भो [3]भोगकामना [4]ममत्वम् ॥
चरितं मुहुरस्मदीयमेतद[5]पवर्गस्य कथं नु भाजनं स्मः ६८
वरं बाल्ये मृत्युर्न पुनरधनं यौवनमिदं
वरं भार्या वेश्या न पुनरवि[6]नीता कुलवधूः ॥
वरं देशत्यागो न पुनरविवेकिप्रभुपुरं
वरं देहत्यागो न पुनरधमाऽगा[7]रमटनम् ॥ ६९ ॥
कविमतिरिव [8]बहुलोहा सु[9]घटितचक्रा प्रभातवेलेव ॥
हरमूर्तिरिव [10]हंसन्ती भाति [11]विधूमाऽनलोपेता ॥ ७० ॥
गन्धः सुवर्णे फलमिक्षुदण्डे नाऽकारि पुष्पं खलु चन्दनेषु ॥
विद्वान् धनाऽऽढ्यो न तु दीर्घजीवी धातुः पुरा कोऽपि न [12]बुद्धिदोऽभूत्
निजगुणगरिमासुखाकरः स्या-
त्स्वयमनुवर्णयतां सतां न तावत् ॥
निजकरकमलेन कामिनीनां
कुचकलशाऽऽकलनेन को विनोदः ॥ ७२ ॥
परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् ॥
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥ ७३ ॥

---

१ नरकप्राप्तिम् २ फलाकाङ्क्षा. ३ विषयेच्छा. ४ ममता. ५ मोक्षस्य ६ दुश्चरिता. ७ प्रतीतिशेषः ८ बहु लोह अय. यस्या पक्षे बहुलाः ऊहास्तर्का यस्याम् ९ सुष्ठु घटितानि चक्राणि यस्या पक्षे सुष्ठु घटिताश्चक्राश्चक्रवाकपक्षिमिथुनानि यया. १० 'शेगडी' ति लोके. ११ विगतो धूमो यस्मात्स चासौ अनलश्च तेन उपेता युक्ता पक्षे विधुश्चन्द्रः उमा गौरी अनलः अग्निस्तैरुपेता. शिवमूर्तिरिव भातीत्यर्थः १२ बुद्धिदाता.

क्षोणीशाऽश्रयिणां[1] परोपकरणाऽभावाद्वाऽऽस्तश्रियां[2]
कार्पण्यात्सुधियामनध्ययनतो यूनां प्रवासाऽऽश्रयात् ॥
ज्ञातॄणां जगदीशभक्तिविरहादायुर्वृथागच्छती-
त्येवं कांस्यसमुद्भवः प्रतिदिनं नादो वदत्युच्चकैः ॥ ७४॥

स्यादत्यन्तनिरक्षरः क्षितिपतिः श्रीकारमात्राऽऽश्रया-
न्मन्त्री तत्कथिताऽर्थलेखनपरस्तत्सेवको जायते ॥
अध्येता तदगारमेव भजते विद्वांस्तु तं याचते
यावान् यस्य गिरा समं परिचयस्तावान् विदूरे[3] श्रियः ॥ ७५ ॥

गुरुरेकः कविरेकः सदसि मघोनः[4] कलाधरोऽप्येकः[5] ॥
अद्भुतमत्र सभायां गुरवः कवयः कलाधराः सर्वे ॥ ७६ ॥

कमले कमला शेते हरः शेते हिमालये ॥
क्षीराऽब्धौ च हरिः शेते मन्ये मत्कुणशङ्कया ॥७७ ॥

सद्[6]वनमसद[7]नुशासनमाश्रितभरणं च राजचिह्नानि ॥
अभिषेकः पट्टबन्धो वालव्यजनं व्रणस्याऽपि ॥ ७८ ॥

गुणवतस्तव[8] हार न युज्यते परकलत्रकुचेषु विलुण्ठनम् ॥
स्पृशति शीतकरो[9] जघनस्थलीमुचितमस्ति तदेव कलङ्किनः[10] ॥७९॥

अतिपरिचयादवज्ञा संततगमनादनादरो भवति ॥
मलये[11] भिल्लपुरन्ध्री[12] चन्दनतरुकाष्ठमिन्धनं कुरुते ॥८० ॥

पौलस्त्यः[13] कथमन्यदारहरणे दोषं न विज्ञातवा-
नक्षैः[14]ऽपि युधिष्ठिरेण रमता ज्ञातो न दोषो नु किम् ॥
रामेणाऽपि वने च हेमहरिणस्याऽसंभवो लक्षितः
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ८१ ॥

को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः[15] संगतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ॥

---

१ राजाश्रयवताम् २धनिनाम् ३अत्यन्तदूरे. ४इन्द्रस्य ५चन्द्रः-६सताअवन रक्षण. ७ दुष्टशासनम् ८ सूत्रवतः पक्षे गुणयुक्तस्य. ९ चन्द्रः १० कलङ्कयुक्तस्य. ११ मलयपर्वते. १२ भिल्लस्त्री १३ रावणः. १४ पाशैः १५ मूर्खैः

कः शूरो विजितेन्द्रियः प्रियतमाकाऽनुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम्॥८२॥
अर्कत्वङ्गमतस्तक्रं न शैतक्रतुना हुतम् ॥
नाऽदत्तमिति वाक्यार्थात्तक्रं शक्रस्य दुर्लभम् ॥ ८३ ॥
वरं मौनं कार्यं न च वचनमुक्तं यदनृतं
वरं क्लैब्यं पुंसां न च परकलत्राऽभिगमनम् ॥
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचि-
र्वरं भिक्षाऽऽशित्वं न च परधनाऽऽस्वादनसुखम् ॥८४॥
वरं शून्या शाला न च खलु वरो दुष्टवृषभो
वरं वेश्या पत्नी न पुनरविनीता कुलवधूः ॥
वरं वासोऽरण्ये न पुनरविवेकाऽधिपपुरे
वरं प्राणत्यागो न पुनरधमानामुपगमः ॥ ८५ ॥
असेवितेश्वरद्वारमदृष्टविरहव्यथम् ॥
अनुक्तक्लीबवचनं धन्यं कस्यापि जीवितम् ॥ ८६ ॥
आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसङ्गतं वा ॥
प्रायेण भूमिपतयः प्रमदालताश्च
यः पार्श्वतो वसति तं परिवेष्टयन्ति ॥ ८७ ॥
अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ॥
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ ८८ ॥
कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते ॥
न स विरौति न चाऽपि हि शोभते भवति योजयितुर्वचनीयता॥८९॥
दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः संगात्सुतोलालना-
द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ॥

---

१ अयज्ञाङ्गम् २ इन्द्रेण. ३ नपुंसकत्वम् ४ अयं श्लोकः पाठभेदात्पुनर्लिखितः ५ सुवर्णालंकारसंग्रहयोग्यः ६ हीरकादिः ७ वङ्गे 'कथील' इतिलो० ८ निन्दा

ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-
न्मैत्री चाऽप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥९०॥
लोभश्चेदगुणेन किं पि[1]शुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ॥
सौजन्यं यदि किं जनैः सुमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥९१॥
शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ॥
प्रभुर्धनपरायणः सतत[2]दुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्तशल्यानि मे ॥ ९२ ॥
लज्जागुणौघजननीं जननीमिव स्वा-
मत्यन्तशुद्धहृदयामनुवर्तमानाम् ॥
तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ९३ ॥
गृह्णात्येष रिपोः शिरः प्र[3]जविनं कर्षत्यसौ वाजिनं
धृत्वा च[4]र्मधनुः प्रयाति पुरतो नाऽसौ करो दक्षिणः ॥
द्यूतं चौर्यकथां तथा च शपथं कुर्यान्न वामः करो
दानाऽनुद्यमतां निरीक्ष्य विधिना शौ[5]चोऽधिकारी कृतः ९४
बहु[6]तरहिते रसातल उत्तिष्ठन्ते हि सु[7]मनसस्त[8]पसि ॥
कान्तारै[9]जनवेगं विषह्य सद्रसफलास्तु विरलाः स्युः १९५

---

१ दुष्टता. २ दरिद्रः ३ वेगवन्तम् ४ 'ढाल' इति लोके ५ शौचकार्ये नियुक्तः ६ तरहिते रसातले रसाले आम्रवृक्षे इत्यर्थः ७ पुष्पाणि 'मोहोर, इतिलो० पक्षे शोभनमनसः मुनय इत्यर्थः ८ माघमासे. पक्षे तपश्चर्यायाम् ९ कान्तारं अरण्यं दुर्गममार्ग इति यावत् तत्सम्बन्धि एजनवेग कपनवेग विषह्य सहित्वा सद्रसानि फलानि येषा एवंविधाः विरलाः स्युः पक्षे काता स्त्री, राः द्रव्यं, जनवेगो जनसंतापः एतान् मर्षयित्वा सद्रसः मोक्षरसः स एव फल येषा एतादृशा विरलाः स्युः

यस्य यो दुर्लभो भोगस्तस्य तद्यत्नतः क्षतिः ॥
वाप्यां यथोष्ट्रयोगेन यतिः सशिबिकोऽपतत् ॥ ९६ ॥
पतङ्ग[1]पाकसमये पतङ्ग[2]पतिविक्रमाः ॥
पतङ्ग[3]स्योदये चेलुः पतङ्गा[4] इव वानराः ॥ ९७ ॥
किं वाच्यं सूर्यशशिनोर्दारिद्र्यं महतां पुरः ॥
दिनरात्रिविभागेन परिधत्तो यदम्बरम्[5] ॥ ९८ ॥
मुरारि[6]पदभक्तिश्चेत्तदा माघे[7] रतिं कुरु ॥ मु० ॥ ९९ ॥
शीलभारवती कान्ता पुष्पभारवती लता ॥
अर्थभारवती वाणी भजते कामपि[8] श्रियम्[9] ॥ २०० ॥
वार्ता[10] च कौतुकवती[11] विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ॥
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत्त्रयं प्रसरति स्वयमेव लोके ॥ १ ॥
यथा नयति कैलासं नगं[12] गान[13]सरस्वती ॥
तथा[14] नयति कैलासं न गङ्गा न सरस्वती ॥ २ ॥
त्वं नो गोत्रगुरुस्तवेन्दुरविपस्तस्याऽमृतं त्वत्करे
एनां व्याधशराऽऽहता प्रणयिनी तन्वीं पुनर्जीवय ॥
इत्युच्चैर्गगने निशाकरमृगे कारुण्यमातन्वतः
शृङ्गाऽग्रादपतन्मृगस्य रुदतोबाष्पाऽम्बुभूमण्डले ॥ ३ ॥

---

१ शालिविशेषस्य परिपाकसमये २ गरुडपराक्रमाः ३ सूर्यस्य. ४ शलभाः ५ आकाश वस्त्र च. ६ मुरारिनामा कविः ७ माघकाव्ये. उत्तरार्धस्यार्थः— मुरारिर्विष्णुस्तस्य पदे भक्तिं कर्तुमिच्छसि चेत् अघे पातके प्रीतिं मा कुरु ८ अचिन्त्याम् ९ शोभाम् १० वृत्तान्त. ११ कुतूहलयुक्ता. १२ पर्वतम् १३ गायनविद्या. १४ न गंगा न सरस्वतीऽति पदच्छेद उत्तरार्धे.

कन्याप्रसूतस्य धनुःप्रसंगादङ्गाधिकासादितविक्रमस्य ॥
धनंजयाऽऽधीनपराक्रमस्य हिमस्य कर्णस्य च को विशेषः ॥४॥
स एव रसिकोलोके श्रुत्वा काव्यं परैः कृतम् ॥
उत्पद्यते च युगपन्नयनेऽक्ष्णोश्च यस्य वाः ॥ ५ ॥
तांबूलस्य गुणाः सन्ति सखे शतसहस्त्रशः ॥
एकोऽपि च महान् दोषो यस्य दानाद्विसर्जनम् ॥ ६ ॥
प्रतिगृहकोणं गुणिनो लूर्ताकीटा इव स्फुरान्ति शतम् ॥
तद्भासकः स्वगोभिः को वा रविरिव गुणज्ञोऽस्ति ॥ ७ ॥
सरलप्रियंगुणाऽऽढ्यं लम्बितमालं विचित्रंतिलकं च ॥
वनमिव वपुस्तवैतत्कथमवनं नृपजनस्याऽस्य ॥ ८ ॥
असौभाग्यं धत्ते परमसुखभोगाऽऽस्पदमयं
विचित्रं तद्गेहं भवति पृथुकार्तिस्वरमयम् ॥
निविष्टः पल्यङ्के कलयति स कान्तारतरणं

---

१ कन्याराशौ उत्पन्नस्य पक्षे कुमारिकाया प्रसूतस्य. २ धनूराशिसगमेन अङ्गेषु शरीरेषु अधिकं आसादितःसंपादितःविक्रमोरोमाञ्चोत्पादनादिरूपःपराक्रमो येन. पक्षे धनुर्विद्यया अङ्गदेशेषु सपादित· पराक्रमो येन ३ धनजयः अग्निः तदधीनः पराक्रमो वल यस्य. पक्षे धनंजयोऽर्जुनः तदधीनपराक्रम ४वाः उदक पक्षे वाः वा इतिलौकिकशब्दः ५ 'कोळीति' लोके ६प्रकाशकः ७ स्वेन्द्रियैः स्वकरणैश्च. ८ सरलाः वृक्षविशेषाः प्रियङ्गवश्चैतेषा समाहारस्तेनाढ्य पूर्ण. पक्षे सरलं च तत् प्रिय हृद्य च, गुणैर्गौरवर्णत्वादिभिर्युक्तम्. ९लम्बिनस्तमालायस्मिस्तत् पक्षे लम्बिता माला माल्य यस्य १० विचित्रा नानाविधास्तिलकाः वृक्षविशेषा यस्मिस्तत्. पक्षे विचित्रो विचित्रवर्णैस्तिलकः कस्तूरीकुङ्कुमादिकृतो यस्मिस्तत्. ११ हे जननि भवती यत्र यस्मिन्पुरुषे प्रसाद तनुतेकरोति असौपुरुषः भाग्यं ऐश्वर्यं धत्ते. यत्र कोपं तनुते सः असौभाग्य सौभाग्याभाव धत्ते एवमग्रेपि १२ अयं प्रसादविषय· कोपविषयश्च परमसुखभोगानामास्पद कोपपक्षे परं अत्यंतं असुखभोगास्पदं. भवतीतिशेषः १३ तस्य पूर्वोक्तस्य पुरुषस्य गेहं विविधचित्रयुक्तं तथा पृथु महत्कार्तस्वरं स्वर्णं तन्मयं. पक्षे चित्ररहित तथा पृथुकाना वालाना अन्नाद्यभावप्रयुक्तेन आर्तस्वरेण प्रचुर१४ सम्पूर्वोक्तः. पुरुषः कान्तायाः रतं रमणं तस्य रण युद्ध. पक्षे कान्तारं दुर्गमारण्यं तत्तरणं कलयति.

प्रसादं कोपं वा जननि भवती यत्र तनुते ॥ ९ ॥

भूपः कूप इवाऽऽभाति [1]नमज्जनसुखाऽऽवहः ॥
ददाति गुणैः[2]संबन्धाद्यथा पात्राऽनुरूपतः ॥ १० ॥

गुणवदगुणवद्वा कुर्वता कार्यजातं[3]
परिणतिरवधार्या[4] यत्नतः पण्डितेन ॥
अतिरभसकृतानां कर्मणामाविपत्ते--
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ११ ॥

आनीता नटवन्मया तव पुरः श्रीराम या भूमिका[5]
व्योमाकाश[6]खखाऽम्बराऽब्धिवसवस्त्वत्प्रीतयेऽद्याऽवधि ॥
प्रीतो यर्हि निरीक्षणात्त्वमधुना यत्प्रार्थितं देहि मे
नोचेद् ब्रूहि कदाऽपि माऽऽनय पुनर्मामीदृशीं भूमिकाम् ॥ १२

रात्रिः शिवा काचन सन्निधत्ते विलोचने जाग्रतमप्रमत्ते ॥
समानधर्मा युवयोः सकाशे सखा भविष्यत्यचिरेण कश्चित् ॥ १३ ॥

साहित्य[7]पाथोनिधिमन्थनोत्थं कर्णाऽमृतं[8] रक्षत हे कवीन्द्राः ॥
यत्तस्य दैत्या इव लुण्ठनाय काव्याऽर्थचोराः प्रगुणीभवन्ति १४

शस्त्रं न खलु[9] कर्तव्यमिति पित्रा नियोजितः ॥
तदेव शस्त्रं कृतवान् पितुराज्ञा न लङ्घिता ॥ १५ ॥

कांते धावय मे पादाविति भर्त्रा निवेदिता ॥
[10]नतया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ १६ ॥

---

१ नमन्तः नम्रा ये जनास्तेषा सुखावहः पक्षे मज्जने ' बुडीमारणें ' सुखावहो न भवति नमज्जनसुखावहः २ गुणाः विद्याविनयादिगुणाः पक्षे गुणाः रज्जवः ३ कार्यसमूह. ४ परिणामः ५ वेषाः ' सोग ' इतिलोके ६ अङ्काना वामतो गत्या चतुरशीति८४०००००लक्षाणि भवन्ति चतुरशीतिलक्षयोनिभ्रमण कृतमितितात्पर्यं अतोजन्ममरणपरंपराया मोचयेति भावः ७ अलंकारादिप्रतिपादकशास्त्रसागरमन्थनोद्भवम् ८ कर्णामृतनामको ग्रन्थः ९ न खलु इति प्रथम पदच्छेदः विरोधपरिहारे नखलु नखान् लुनातीति नखलु नखच्छेदकम् १० नतया इत्यत्र तयापादौ न धावितौ परिहारे नतया नम्रया इतिपदच्छेदः

पुंष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृजं विलोक्य ॥
नाभीसरोजे नयनं मुरारेर्वामेतरं वारयति स्म चित्रम् ॥१७॥

मालिन्य[2]मब्जशशिनोर्मधुलिट्कलङ्कौ
धत्तो मुखे तु तवदृक्तिलकाञ्जनाभाम् ॥
दोषावितै[3]: क्वचनमेलनतोगुणत्वं
वक्तुर्गुणो हि वचसि भ्रमविप्रलम्भौ ॥ १८ ॥

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा ॥
अद्याऽपि तत्तुल्यकवेरभावादनामिकासाऽर्थवती बभूव ॥१९॥

पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया ॥
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ २० ॥

रमणीयः स हि पुरुषो रमणी यत्रैव रज्यति विदग्धा ॥
श्लोकः सएव सुभगश्चित्तं सक्तं हि यत्र रसिकस्य ॥ २१ ॥

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ॥
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २२ ॥

श्लेष्मांऽगारे वसतिर्जाताऽस्माकं तदत्र मायात ॥
[11]आन्दोलनच्छलादिह निवारयन्तीव मौक्तिकानि विटान्[12] ॥२३

अद्यापि दुर्निवारं [13]स्तुतिकन्या वहति कौमा[14]रम् ॥
सद्भ्यो न रोचते साऽसन्तोऽप्यस्यै न रोचन्ते ॥ २४ ॥

---

१ पुष्पेषोर्मदनस्य माता लक्ष्मीः पुरुषायमाणा पुरुषवदाचरन्ती विपरीतरत कुर्वतीत्यर्थः विश्वसृजं-भगवन्नाभीसरोजस्थ ब्रह्माण विलोक्य लज्जावती सती मुरारेर्दक्षिणं नयनं वारयति स्म यतो भगवन्नेत्रे हि सूर्यचन्द्रात्मके तत्र दक्षिणस्यसूर्यात्मत्वात्तद्वारणे सरोजं मुकुलित भवेत् ततश्च ब्रह्मापि सरोजकोशे अन्तर्हितो भवेदिति मनसि कृत्वा तद्वारयामासेति भावः २ मलिनत्व ३ प्रामतः ४ विसवादः ५ अन्वर्था ६ प्रवहणम्. ७ उपायः ८ चतुरा ९ अविश्वस्त १० प्राणे ११ आन्दोलनमिषात. १२ जरान् १३ स्तुतिरेव कन्या १४ कुमारिकात्वम्.

ते कौ[1] पीनधनास्[2]त एव सकलं धात्रीफलं[3] भुञ्जते ॥
तेषां द्वारि नदन्ति वाजिनिवहा[4]स्तैरेव लब्धा क्षितिः ॥
तैरेव सम्भलंकृतं[5] निजकुलं किं वा बहु ब्रूमहे
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥ २५ ॥
स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि ॥
आहारोऽपि न रोचेत किमुताऽन्या विभूतयः ॥ २६ ॥

अन्धं दरिद्रिणमपि प्रियया विहीनं
वीक्ष्येश्वरे वदति याच वरं त्वमेकम् ॥
नेत्रे न नाऽपि वसुनो[6] वनितां स वव्रे[7]
छत्त्राऽभिरामसुतदर्शनमित्युवाच ॥ २७ ॥
मिथिलां[8] हसत्ययोध्यां त्वं सखि परपूरुषाऽनुरक्ताऽसि ॥
मिथिलां परिहसति च सा त्वं सखि जनका[10]ऽनुरक्ताऽसि २८
सच्छिद्रा[11] नाविकधोरणीनिपतिता मध्येजलं[12] क्षेपणी
पन्थाः पर्वतदुर्गमो घनघनच्छन्नश्च[14] तारापथः[15] ॥
हंहो मारुतदुस्तरो जलनिधिः शीर्णा[16] च नौः सांप्रतं
मध्ये मज्जय वा तटं गमय वा हस्ते तवाऽऽस्ते द्वयम् ॥२९॥
अस्मानवेहि कलमानलमाहितानां[17]
येषां प्रचण्डमुसलैरवदाततैव[19] ॥
[20]स्नेहं विमुच्य सहसा खलतां[21] प्रयान्ति
ये स्वल्पपीडनवशान्न वयं तिलास्ते ॥ ३० ॥

---

१ कौपृथिव्या २ पीनधनाः पुष्टधनाः पक्षे कौपीनमेवधनं येषा ३ धात्रीफलं पृथ्वीफलं राज्यमीत्सर्थः पक्षे आमलकीफलम् ४ वजिनिवहाअश्वसमूहा नदन्ति हेषित कुर्वन्तीत्यर्थ पक्षे न इतिपदच्छेदः गजाश्वसमूहाः ५ सम्यगलकृत पक्षे समल सदोष कृतम्. ६ द्रव्यम् ७ वरयामास. ८ जनकपुरी ९ जारः परमे श्वरश्च, १० पिता, विदेहश्च. ११ गलिता १२ जलमध्ये १३ 'वल्हें' इतिलोके० १४ निबिडघनाच्छादितः १५ अन्तरिक्षम्. १६ भिन्ना. १७ शालिविशेषान् १८ कण्डिताना १९ शुभ्रत्वम्. २० तैलमोर्ति च. २१ दुर्जनत्वं पक्षे (खळ, ढेंप) इति प्रसिद्धतद्रूपत्वम्.

उपभोक्तुं न जानाति श्रियं प्राप्याऽपि मानवः ॥
आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ॥ ३१ ॥

अबला यत्र प्रबला शिशुरवनीशो निरक्षरो मन्त्री ॥
नहिनाहि तत्र धनाऽऽशा [1]जीवित आशाऽपि दुर्लभा भवति ३२

अयश्चणकचर्वणं फणिफणामणेः कर्षणं
करेण गिरितोलनं जलनिधेः पदालङ्घनम् ॥
प्रसुप्तहरिबोधनं निशितखड्गसंस्पर्शनं
कदाचिदखिलं भवेन्न च शठाद्धनस्याऽर्जनम् ॥ ३३ ॥

सर्पस्य रत्ने कृपणस्य वित्ते सत्याः कुचे केसरिणश्च केशे ॥
मानोन्नतानां शरणागते च मृतौ भवेदन्यकरप्रचारः ॥३४॥

शिशुरपि निपुणो गुरोर्गरीयान् नतु वपुषैव महान् महत्प्रतिष्ठः ॥
मणिरणुरपि भूषणाय पुंसां न तु पृथुरशिलाविलासहेतुः ॥३५॥

[10]तर्कभाषा मुखे यस्य हस्ते यस्य च मञ्जरी ॥
मुक्तावली यस्य कण्ठे तस्य वश्या [11]मनोरमा ॥ ३६ ॥

विनाऽपि तातेन विना जनन्या गजाननः शम्भुसुताऽभिधानः ॥
विनैव शास्त्रेण विनैव वेदैर्माध्यंदिनानामिव पाठकोऽभूत् ॥ ३७॥

श्लोकस्तु श्लोकतां याति यत्र तिष्ठन्ति साधवः ॥
[12]लकारो लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः ॥ ३८ ॥

आर्ता देवान्नमस्यन्ति तपः कुर्वन्ति रोगिणः ॥
निर्धना दानमिच्छन्ति वृद्धा नारी पतिव्रता ॥ ३९ ॥

श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना नैको मुनिर्यस्य वचः प्रमाणम् ॥
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्था: ४०

---

७ जीविते आशेतिपदच्छेदः २ लोहं. ३ निद्रितसिंहोत्थापनं. ४ तीक्ष्ण ५ साध्व्याः ६ सिंहस्य. ७ शास्त्रवेत्ता. ८ श्रेष्ठः ९ महत्तु प्रतिष्ठा यस्येति व्यधिकरणो बहुव्रीहिः महाप्रतिष्ठ इति वा पाठः सुगमः१० ग्रन्थविशेषः तर्कपूर्वकं भाषणं च एवमेवाग्निमंबोध्यम् अर्थान्तरं सुगमम्११ग्रन्थविशेषः स्त्री च.१२लकारलोपात शाक एवावतिष्ठते

न भटो न विटो न गायको न च वेश्याघटको न चाऽपि वेश्या
कथमत्र लभेमहि प्रतिष्ठामसती वा युवती न मेऽस्ति रामा ॥४१॥

वेश्या वेश्मसु सीधुगन्धललना वक्त्रासवाऽऽमोदितै-
र्नीत्वा निर्भरमन्मथोत्सवसुखैरुन्निद्रचन्द्राः क्षपाः ॥
सर्वज्ञा इति दीक्षिता इति चिरात्प्राप्ताऽग्निहोत्रा इति
ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ ४२ ॥

अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ॥
सकलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ ४३ ॥

कस्याऽपि कोऽप्यतिशयोऽस्ति स तेन लोके
ख्यातिं प्रयाति न हि सर्वविदस्तु सर्वे ॥
किं केतकी फलति किं पनसः सुपुष्पः
किं नागवल्ल्यपि च पुष्पफलैरुपेता ॥ ४४ ॥

ननान्दा साऽऽनन्दा हसितवदनाऽभूद्वहिनिका
कृतार्था च श्वश्रूः कुपितदृशि पत्यौ मयि सखि ॥
स चेदुच्चैर्ब्रूते कठिनवचनैस्तर्हि सकलाः
करिष्यन्ति प्रायो वसनरहितास्ताण्डवविधिम् ॥ ४५ ॥

न केशेषु स्नेहो न च कुचतटी चन्दनरसो
न वा वीटी वक्त्रे न च नयनयोरञ्जनकथा ॥
न चाऽल्पोऽप्याकल्पो न च सुवसनं नैव कुसुमं
स्नुषा त्वं पापानां फलमधनगेहेषु सुदृशाम् ॥ ४६ ॥

अनुयाताऽनेकजनः परपुरुषैरुह्यतेऽस्य निजदेहः ॥
अधिकारस्थः पुरुषः शव इव न शृणोति वीक्षते कुमतिः ४७

कि तेन जातु जातेन मातुर्यौवनहारिणा ॥
आरोहति न यः स्वस्य वंशस्याऽग्रे ध्वजो यथा ॥४८॥

---

१ मद्यम् २ पूज्यः ३'नणद'इतिलो० ४ नग्ना इत्यर्थः ५ भूषणादिकम्

संग्रहं नाकुलीनस्य[1] सर्पस्येव करोति यः ॥
स एव श्लाघ्यते मन्त्री सम्यग्गारुडिको यथा ॥ ४९ ॥
जामाता जठरं जाया जातवेदा जलाशयः ॥
पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः ॥ ५० ॥
जननी जन्मभूमिश्च जाह्नवी च जनार्दनः ॥
जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥ ५१ ॥
बिलाद्बहिर्बिलस्यान्तःस्थितमार्जारसर्पयोः ॥
मध्ये चाऽऽखुरिवाऽऽभाति पत्नीद्वययुतो नरः ॥ ५२ ॥
सदा वक्रः सदा क्रूरः सदा पूजामपेक्षते ॥
कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ॥ ५३ ॥
जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान् धर्मचर्यामसूया ॥
कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाऽभिमानः ५४
ज्यायांसमपि[2] शीलेन विहीनं नैव पूजयेत् ॥
अपि शूद्रं च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥ ५५ ॥
ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणं कुरुते ॥
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते जन्तुः ॥ ५६ ॥
तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः ॥
वृश्चिकस्य विषं पुच्छं सर्वाङ्गे दुर्जनो विषम् ॥ ५७ ॥
तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् ॥
जिताऽक्षस्य तृणं नारी निस्पृहस्य तृणं जगत् ॥ ५८ ॥
दूतो न संचरति खे न चलेच्च वार्ता
पूर्वं न जल्पितमिदं न च संगमोऽस्ति ॥
व्योम्नि स्थितं रविशशिग्रहणं प्रशस्तं
जानाति यो द्विजवरः स कथं न विद्वान् ॥ ५९ ॥

---

१ न अकुलीनस्य पक्षे नाकुर्वल्मीकम् २ ज्येष्ठं वरिष्ठमित्यर्थः

देयं भो अधने धनं सुकृतिभिर्नो संचितं सर्वदा[1]
श्रीकर्णस्य बलेश्च विक्रमपतेरद्याऽपि कीर्तिः स्थिता ॥
आश्चर्यं मधुदानभोगरहितं नष्टं चिरात्संचितं
निर्वाणादपि पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः ॥६०॥

धनं यदि गतं गतं चरणयुग्मरेणूपमं
धरा यदि गता गता कथय मे किमेतावता ॥
इदं पुनररुंतुदं[2] धनिगणैरिदानींतनै-
र्दरिद्रगणनाविधौ यदहमङ्कपाते धृतः ॥ ६१ ॥

नभोभूषा पूषा[3] कमलवनभूषा मधुकरो
वचोभूषा सत्यं वरविभवभूषा वितरणम् ॥
मनोभूषा मैत्री मधुसमयभूषा मनसिजः
सदोभूषा[4] सूक्तिः सकलगुणभूषा च विनयः ॥ ६२ ॥

प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते॥
न तृप्तिमुत्पादयते शरीरे वृद्धस्य दारा इव दर्शनीयाः ॥६३॥

मानुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता
विप्रत्वे बहुविद्यताऽतिगुणता विद्यावतोऽर्थज्ञता ॥
अर्थज्ञस्य विचित्रवाक्यपटुता तत्राऽपि लोकज्ञता
लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा ॥ ६४ ॥

शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ॥
सर्वदा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ ६५ ॥

सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः ॥
तन्मित्रं यस्य विश्वासः पुरुषः स जितेन्द्रियः ॥ ६६ ॥

सुकुले योजयेत्कन्यां पुत्रं विद्यासु योजयेत् ॥
व्यसने योजयेच्छत्रुमिष्टं धर्मेण योजयेत् ॥ ६७ ॥

---

१ विष्ठतोवि शेषः २ मर्मस्पृक् ३ सूर्यः ४ सभा

सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् ॥
स्वदारपरिहारेण परदाराऽर्थिनो जनाः ॥ ६८ ॥

द्यूते हारितसर्व आद्य इतरो मल्लश्च मद्याऽशनः
षण्ढोऽन्यः परमं दुराशयसखोऽन्यो गोपराट् पञ्च वै ॥
एकस्त्रीनिरताश्च पाण्डवगुणान् बिभ्रत्यमी सूनव-
स्तस्मात्पाण्डुगुणं वहामि नितरां तच्चिन्तयाऽनारतम् ॥६९॥

अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि ॥
गणयति न तिरस्कारं दानान्धविलोचनो नीचः॥ ७० ॥

अन्तःकटुरपि लघुरपि सद्वृत्तं यः पुमान्न संत्यजति ॥
स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥ ७१ ॥

ऊर्जित सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनःपुनः ॥
कवलीकुरुते स्वस्थं विधुं दिवि विधुंतुदः ॥ ७२ ॥

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् ॥
गतानुगतिको लोको न लोकः पारमार्थिकः ॥ ७३ ॥

कुदेशमासाद्य कुतोऽर्थसंचयः कुपुत्रमासाद्य कुतोजलाञ्जलिः ॥
कुगेहिनीं प्राप्य गृहे कुतः सुखं कुशिष्यमध्यापयतः कुतो यशः ७४

क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणेक्षणे ॥
अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥ ७५ ॥

क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीव्यति जाठराग्निः ॥
आपत्सु वैराणि समुल्लसन्ति छिद्रेष्वनर्था वहुलीभवन्ति ॥७६॥

गुरुपत्न्यां निशाधीशो ब्राह्मण्यां पाकशासनः ॥
गतः पञ्चेषुलक्ष्यत्वं का कथाऽन्यस्य देहिनः ॥ ७७ ॥

गुरोरप्यवलिप्तस्य कार्याऽकार्यमजानतः ॥
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ ७८ ॥

---

१ निन्द्यम् २ सगर्वस्य ३ उन्मार्गप्रवर्तिनः

गौष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः ॥
वसुधा वसुसंपूर्णा मयाऽद्य लब्धा किमन्येन ॥ ७९ ॥

ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु ॥
इच्छाऽनुरूपो विभवः कदा कस्य भविष्यति ॥ ८० ॥

चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ॥
ये रमन्ति नरास्तत्र कृमितुल्याः कथं न ते ॥ ८१ ॥

चलं चित्तं चलं वित्तं चले जीवितयौवने ॥
चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ॥ ८२ ॥

राजनि विदुषां मध्ये वरसुरतानां समागमे स्त्रीणाम् ॥
साध्वसदूषितहृदयो वाक्पटुरपि कातरो भवति ॥ ८३ ॥

यत्राऽऽकृतिस्तत्र गुणा वसन्ति नैतद्धि सम्यक्कविभिः प्रणीतम्॥
येनाऽतिचार्वङ्ग्यपि मे हृदिस्था दुनोति गात्रं विरहे प्रियासौ८४

यस्मिन् रुष्टे भयं नाऽस्ति तुष्टे नैव धनाऽऽगमः ॥
निग्रहाऽनुग्रहौ न स्तः स रुष्टः किं करिष्यति ॥ ८५ ॥

आलस्योपहता विद्या परहस्तगताः स्त्रियः ॥
अल्पबीजं हतं क्षेत्रं हतं सैन्यमनायकम् ॥ ८६ ॥

निर्विषेणाऽपि सर्पेण कर्त्तव्या महती फणा ॥
विषमस्तु न चाप्यस्तु खटाटोपो भयंकरः ॥ ८७ ॥

एक एव पदार्थस्तु त्रिधा भवति वीक्षितैः ॥
कुणपं[3] कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ ८८ ॥

वैद्यस्तर्कविहीनो निर्लज्जा कुलवधूर्यतिर्मूर्खः ॥
कटके च प्राहुणिको[4] मस्तकशूलानि चत्वारि ॥ ८९ ॥

अलिरनुसरति परिमलं लक्ष्मीरनुसरति नयगुणसमृद्धिम् ॥
निम्नमनुसरति सलिलं विधिलिखितं बुद्धिरनुसरति ॥९०॥

---

१ भयम् स्वामी. ३ शवम्. ४आगन्तुकः

राजाऽऽश्रयस्तस्करताऽश्व[1]पण्यमाथर्वणं[2] चाऽपि समुद्रयानम् ॥
एतानि सिध्यन्ति महाफलानि विपर्यये प्राणहराणि पञ्च ॥९१
अन्यानि शास्त्राणि विनोदमात्रं प्राप्तेषु कालेषु न तैश्च किंचित्॥
चिकित्सितज्योतिषमन्त्रवादाः पदेपदे प्रत्ययमा वहन्ति ॥९२॥

अधरस्य मधुरिमाणं कुचकाठिन्यं दृशोस्तथा तैक्ष्ण्यम् ॥
कवितायाः परिपाकाननुभवरसिको विजानाति ॥ ९३ ॥

परिच्छिन्नः स्वादोऽमृतगुडमधुक्षौद्रपयसां
कदाचिद्वाऽभ्यासाद्व्रजति खलु वैरस्यमधिकम् ॥
प्रियाबिम्बोष्ठे वा रुचिरकविवाक्येष्वनवधि-
र्नवाऽऽनन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ९४

संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् ॥
एकमापातमधुरमन्यदालोचनामृतम् ॥ ९५ ॥

संचिन्त्यसंचिन्त्य जगत्समस्तं त्रयः पदार्था हृदयं प्रविष्टाः ॥
इक्षोर्विकाराः कृतयः कवीनां मुग्धाङ्गनाऽपाङ्गतरङ्गितानि ९६

नारी परमुखद्रष्ट्री कविरव्यवहारवित् ॥
अपथ्यसेवी रोगी च कियद्भिर्नोपहस्यते ॥ ९७ ॥

न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वचः ॥
झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः ॥ १ ॥

उच्चैरुद्घुष्य जेतव्यं मध्यस्थश्चेदपण्डितः ॥
पण्डितो यदि तत्रैव पक्षपातोऽधिरोप्यताम् ॥ २ ॥

स्तोतारः के भविष्यन्ति मूर्खस्य जगतीतले ॥
न स्तौति चेत्स्वयं च स्वं कदा तस्याऽस्तु निर्वृतिः ॥३॥

वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति ॥
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ॥ ४ ॥

---

१ अश्वव्यवहारः २ जारणमारणादि.

अगतित्वमतिश्रद्धा ज्ञानाभ्यासेन तृप्तता ॥
त्रयः शिष्यगुणा ह्येते मूर्खाचार्यस्य भाग्यजाः ॥ ५ ॥
यदि न क्वाऽपि विद्यायां सर्वथाक्रमते मतिः ॥
मान्त्रिकास्तु भविष्यामो योगिनो यतयोऽपि वा ॥ ६ ॥
अविलम्बेन संसिद्धो मान्त्रिकैराप्यते यशः ॥
विलम्बे कर्मबाहुल्यं विख्याप्याऽवाप्यते धनम् ॥ ७ ॥
चारान् विचार्य दैवज्ञैर्वक्तव्यं भूभृतां फलम् ॥
गृहाचारपरिज्ञानं तेषामावश्यकं यतः ॥ ८ ॥
पुत्र इत्येव पितरि कन्यकेत्येव मातरि ॥
गर्भप्रश्नेषु कथयन् दैवज्ञो विजयी भवेत् ॥ ९ ॥
आयुःप्रश्ने दीर्घमायुर्वाच्यं मौहूर्तिकैर्द्विजैः ॥
जीवन्तो बहु मन्यन्ते मृताः प्रक्ष्यन्ति कं पुनः ॥ १० ॥
निर्धनानां धनाऽवाप्तिर्धनिनामधिकं धनम् ॥
ब्रुवाणाः सर्वथा ग्राह्या लोके ज्योतिषि कातराः ॥ ११ ॥
अपि सागरपर्यन्ता विचेतव्या वसुंधरा ॥
देशोऽप्यरत्निमात्रोऽपि नाऽस्ति दैवज्ञवर्जितः ॥ १२ ॥
स्वस्थैरसाध्यरोगैश्च जन्तुभिर्नोऽस्ति किंचन ॥
कातरा दीर्घरोगाश्च भिषजां भाग्यहेतवः ॥ १३ ॥
नाऽतिधैर्यं प्रदातव्यं नाऽति भीतिश्च रोगिणाम् ॥
नैश्चिन्त्यादादिमे दानं नैराश्यादेव नाऽन्तिमे ॥ १४ ॥
भैषज्यं तु यथाकामं पथ्यं तु कठिनं वदेत् ॥
आरोग्यं वैद्यमाहात्म्यादन्यथात्वमपथ्यतः ॥ १५ ॥
निदानं रोगनामानि साध्यासाध्यं चिकित्सितम् ॥
सर्वमप्युपदेक्ष्यन्ति रोगिणः सदने स्त्रियः ॥ १६ ॥
प्रवर्तनार्थमारम्भे मध्ये त्वौषधहेतवे ॥
बहुमानार्थमन्ते च जिहीर्षन्ति चिकित्सकाः ॥ १७ ॥

रोगस्योपक्रमे सान्त्वं मध्ये किंचिद्धनव्ययः ॥
शनैरनादरः शान्तौ स्नातो वैद्यं न पश्यति ॥ १८ ॥
दैवज्ञत्वं मान्त्रिकता भैषज्यं चाटुकौशलम् ॥
एकैकमर्थलाभाय द्वित्रियोगास्तु दुर्लभाः ॥ १९ ॥
न कारणमपेक्षन्ते कवयः स्तोतुमुद्यताः ॥
किंचिदस्तुवतां तेषां जिह्वा फुरफुरायते ॥ २० ॥
एकैव कविता पुंसां ग्रामायाऽश्वाय हस्तिने ॥
अन्ततोऽन्नाय वस्त्राय ताम्बूलाय च कल्पते ॥ २१ ॥
मातुलस्य बलं माता जामातुर्दुहिता बलम् ॥
श्वशुरस्य बलं भार्या स्वयमेवाऽतिथेर्बलम् ॥ २२ ॥
भार्ये द्वे पुत्रशालिन्यौ भगिन्यः पतिवर्जिताः ॥
अश्रान्तकलहो नाम योगोऽयं गृहमेधिनाम् ॥ २३ ॥
द्वे भार्ये बहवः पुत्रा दारिद्र्यं रोगसंभवः ॥
जीर्णौ च मातापितरावेकैकं मरणाऽधिकम् ॥ २४॥
अन्तकोऽपि हि जन्तूनामन्तकालमुपेक्षते॥
न कालनियमः कश्चिदुत्तमर्णस्य विद्यते ॥२५॥
न पश्यामो मुखे दंष्ट्रां न पाशं वा कराञ्चले ॥
उत्तमर्णमवेक्ष्यैव तथाऽप्युद्विजते जनः ॥२६॥
शत्रौ सान्त्वं प्रतीकारः सर्वरोगेषु भेषजम् ॥
मृत्यौ मृत्युंजयध्यानं दारिद्र्ये न तु किंचन ॥२७॥
शक्तिं करोति संचारे शीतोष्णे मर्षयत्यपि ॥
दीपयत्युदरे वह्निं दारिद्र्यं परमौषधम् ॥२८॥
प्रामाण्यबुद्धिः स्तोत्रेषु देवताबुद्धिरात्मनि ॥
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलम् ॥२९॥
क्षणमात्रं ग्रहाऽऽवेशो याममात्रं सुरामदः ॥
लक्ष्मीमदस्तु मूर्खाणामादेहमनुवर्तते ॥ ३० ॥

अध्यापयन्ति शास्त्राणि तृणीकुर्वन्ति पण्डितान्॥
विस्मारयन्ति जातिं स्वां वराटाः पञ्चषाः करे॥३१॥
कौपीनं भस्मना लेपो दर्भा रुद्राक्षमालिका ॥
मौनमेकान्तिका चेति मूर्खसंजीवनानि षट् ॥३२॥
आनन्दबाष्परोमाञ्चौ यस्य स्वेच्छावशंवदौ ॥
किं तस्य साधकैरन्यैः किंकराः सर्वपार्थिवाः ॥३३॥
सदा जपपटो हस्ते मध्येमध्येऽक्षिमीलनम् ॥
सर्वंब्रह्मेति वादश्च सद्यः प्रत्ययहेतवः ॥३४॥
आमध्याह्नं नदीवासः समाजे देवताऽर्चनम् ॥
सततं शुचिवेषश्च एतत्सभ्यस्य जीवनम् ॥३५॥
तावद्दीर्घं नित्यकर्म यावत्स्याद्द्रष्टृमेलनम् ॥
तावत्संक्षिप्यते सर्वं यावद् द्रष्टा न विद्यते ॥३६॥
यत्र भार्या गिरो वेदा यत्र धर्मोऽर्थसाधनम् ॥
यत्तस्य प्रतिभा मानं तस्मै श्रीकलये नमः ॥ ३७ ॥
ददतो युध्यमानस्य पठतः पुलको न चेत् ॥
आत्मनश्च परेषां च धिक् त्यागं पौरुषं वचः ॥ २३ ॥
अर्थानजरामरवत्कामानौषधवदाचरेद्धीमान् ॥
तृषितवत्पिबेद्विद्यां मुमूर्षुवदाचरेद्धर्मम् ॥ २४ ॥
हंसास्सर्वाङ्गशुचयः पद्मेभ्यो बहिरासते ॥
अन्तर्विशान्ति मधुपाः श्रीमतां गतिरीदृशी ॥ २५ ॥
बन्धो मानश्च्युतिरपि हेलासन्मालिका गुणच्छेदः ॥
यस्मिन् राजन्यधरप्रीतिर्द्विजखण्डनं च सुरतेभूत्॥ २६ ॥
अतिपरिचयादवज्ञा ह्येतद्वाक्यं मृषैव मे भाति ॥
अतिपरिचिते प्यनादौ संसारेस्मिन्न जायतेऽवज्ञा ॥२७॥
द्वेधा भ्रमं तु वेधाश्चक्रे कान्तास्वपि च कनकेषु ॥
यदि कान्ता साध्वी यदि कनकं सुततं भवाब्धिपोतं तद्२८

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ॥
तल्पे किंच मृगत्वचाविरचिते निद्राऽभिभागैर्निजै-
रन्तः प्रेम भरालसां प्रियतमामंगे दधानो हरः ॥ २९ ॥
गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ॥
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३० ॥
मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः ॥
श्वपचात्मभुवोर्निरन्तरा मम जाता परमात्मनि स्थितिः ॥ ३१ ॥
सुरस्रोतस्विन्याः पुलिनमधितिष्ठन् नयनयो-
र्विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान् ॥
विधूतान्तर्ध्वान्तो मधुर मधुरायां चिति कदा ॥
निमग्नः स्यां कस्यां च न नवनभस्याम्बुदरुचिः ॥ ३२ ॥
नवोच्चलितयौवनस्फुरदखर्वगर्वज्वरे ।
मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति ॥
अयं पततु निर्दयं दलितदृप्तभूभृत्कुल-
स्खलद्रुधिरघस्मरो मम परश्वधो भैरवः ॥ ३३ ॥
कियदिदमधिकं मे यद्द्विजायार्थमित्रे ।
कवचमरमणीयं कुण्डले चार्पयामि ॥
अकरुणमवकृत्य द्राक्कृपाणेनतिर्य-
ग्बहलरुधिरधारं मौलिमावेदयामि ॥ ३४ ॥
यस्योद्दामदिवानिशार्थिविलसद्दानप्रवाहप्रथा
माकर्ण्यावनिमण्डलागतवियद्वन्दीन्द्रवृन्दावनात् ॥

---

(३४)एषा द्विजवेषायेन्द्राय कवचकुण्डलदानागतस्य कर्णस्य तद्दानविस्मितान् सभ्यान् प्रत्युक्तिः

ईर्ष्यानिर्भरफुल्लरोमनिकरव्यावल्गदूधःस्रव-
त्पीयूषप्रकरैः सुरेन्द्रसुरभिः प्रावृट्पयोदायते ॥ ३५ ॥
साब्धिद्वीपकुलाचलां वसुमतीमाक्रम्य सप्तान्तरां
सर्वां द्यामपि सस्मितेन हरिणा मन्दं समालोकिता ॥
प्रादुर्भूतपरप्रमोदविदलद्रोमाञ्चितस्तत्क्षण-
व्यानम्रीकृतकन्धरोऽसुरवरो मौलिं पुरो न्यस्तवान् ॥ ३६॥
न कपोतभवन्तमण्वपि स्पृशतु श्येनसमुद्भवं भयम् ॥
इदमद्य मया तृणीकृतं भवदायुःकुशले कलेवरम् ॥३७॥
रणे दीनान् देवान् दशवदनविद्राव्य वहसि
प्रभावप्रागल्भ्यं त्वयि तु मम कोऽयं परिकरः ॥
ललाटोद्यज्ज्वालाकवलितजगज्जालविभवो
भवो मे कोदण्डच्युतविशिखवेगं कलयतु ॥३८॥
सपादे विलयमेतु राज्यलक्ष्मी-
रुपरि पतन्त्वथ वा कृपाणधाराः ॥
अपहरतुतरां शिरः कृतान्तो
मम तु मतिर्न मनागपैति धर्मात् ॥ ३९ ॥
अपि वक्ति गिरांपतिः स्वयं
यदि तासामधिदेवतापि वा ॥
अयमस्मि पुरो हयानन-
स्मरणोल्लङ्घितवाङ्मयाम्बुधिः ॥ ४० ॥
अपि बहलदहनजालं मूर्ध्नि रिपुर्मे निरन्तरं धमतु ॥
पातयतु वासिधारामहमणुमात्रं न किंचिदाभाषे ॥ ४१ ॥

---

(३७) एषा शिबेः कपोतं श्येनं प्रति चोक्तिः ॥ (३८) एषा दशवदन प्रति भगवतो रामस्योक्तिः (३९) एषा अधर्मेणापि रिपुर्जेतव्य इतिवदन्तं प्रति युधिष्ठिरस्योक्ति. ॥ (४१) क्षमावत उक्तिरियम् ॥

परिहरतु धरां फणिप्रवीरः सुखमयतां कमठोपि तां विहाय ॥
अहमिह पुरुहूतपक्षकोणे निखिलमिदं जगदण्डकं वहामि ॥४२॥

प्रमोदभरतुन्दिलप्रमथदत्ततालावली-
विनोदिनि विनायके डमरुडिण्डिमध्वानिनि ॥
ललाटतटविस्फुटन्नवकृपीटयोनिच्छटो
हटोद्धतजटोद्भटो गतपटो नटो नृत्यति ॥ ४३ ॥

साहंकारसुरासुरावलिकराकृष्टभ्रमन्मन्दर-
क्षुभ्यत्क्षीरधिवल्गुवीचिवलयश्रीगर्वसर्वंकषाः ॥
तृष्णाताम्यदमन्दतापसकुलैः सानन्दमालोकिता
भूमीभूषण भूषयन्ति भुवनाभोगं भवत्कीर्तयः ॥ ४४ ॥

अयाचितः सुखं दत्ते याचितश्च न यच्छति ॥
सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥ ४५ ॥

निर्माणे यदि मार्मिकोसि नितरामत्यन्तपाकद्रव-
न्मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम् ॥
काव्यं तर्हि सखे सुखेन कथय त्वं संमुखे मादृशां
नोचेद्दुष्कृतमात्मनाकृतमिव स्वान्ताद्बहिर्मा कृथाः ॥४६॥

वाचा निर्मलया सुधामधुरया यां नाथशिक्षामदा-
स्तां स्वप्नेपि न संस्पृशाम्यहमहंभावावृतो निस्त्रपः ॥
इत्यागःशतशालिनं पुनरपि स्वीयेषु मां बिभ्रत-
स्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तोपरः ॥ ४७ ॥

हीरस्फुरद्रदनशुभ्रिमशोभि किंच
सान्द्रामृतं वदनमेणविलोचनायाः ॥
वेधा विधाय पुनरुक्तमिवेन्दुबिम्बं
दूरीकरोति न कथं विदुषां वरेण्यः ॥ ४८ ॥

---

( ४२ ) पुरुहूत प्रत्येषा गरुत्मत उक्तिः

अलकाः फणिशावतुल्यशीला
नयनान्ताः परिपुङ्खितेषु शीलाः ॥
चपलोपमिता खलु स्वयं या
वत लोके सुखसाधनं कथं सा ॥ ४९ ॥

वचने तव यत्र माधुरी सा
हृदि पूर्णा करुणा च कोमलेऽभूत् ॥
अधुना हरिणाक्षि हा कथं वा
कटु तत्र कठोरताविरासीत् ॥ ५० ॥

हतकेन मया वनान्तरे वनजाक्षी सहसा विवासिता ॥
अधुना मम कुत्र सा सती पतितस्येव वरा सरस्वती ॥५१॥

आ मूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधे-
र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ॥
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोस्ति धन्यो मदन्यः॥५२॥

निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम् ॥
अथ तस्य कृते कियानयं क्रियते हन्त मया परिश्रमः॥ ५३ ॥

यदि सा मिथिलेन्द्रनन्दिनी नितरामेव न विद्यते भुवि ॥
अथ मे कथमस्ति जीवितं न विना लम्बनमाश्रितस्थितिः॥५४

भवद्द्वारे क्रुध्यज्जयविजयदण्डाहतिदल-
त्किरीटास्ते कीटा इव विधिमहेन्द्रप्रभृतयः ॥
वितिष्ठन्ते युष्मन्नयनपरिपातोत्कलिकया
वराकाः के तत्र क्षपितमुरनाकाधिपतयः ॥ ५५ ॥

न धनं न च राज्यसंपदं न हि विद्यामिदमेकमर्थये ॥
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥ ५६ ॥

---

(५१) सीता परित्यक्तवतो भगवतः श्रीरामभद्रस्येयमुक्तिः ॥ (५२) गर्वोक्तिरियं ॥ (५४) स्वात्मनि भगवतो रामस्यैषोक्तिः ॥

मृद्वीकारसिता सिता समशिता स्फीतं निपीतं पयः
स्वर्यातेन सुधाप्यधायि कतिधा रम्भाधरः खण्डितः ॥
सत्यं ब्रूहि मदीय जीव भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः ॥ ५७ ॥
कस्मै हन्त फलाय सज्जनगुणग्रामार्जने सज्जसि
स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय ॥
ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृता-
स्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्तनम् ॥ ५८ ॥
सिन्दूरारुणवपुषो देवस्य रदाङ्कुरो गणाधिपतेः ॥
संध्याशोणाम्बरगतनवेन्दुलेखायितः पातु ॥ ५९ ॥
खलः कापट्यदोषेण दूरेणैव विसृज्यते ॥
अपायशङ्किभिर्लोकैर्विषेणाशीविषो यथा ॥ ६० ॥
रूपवत्यपि च क्रूरा कामिनी दुःखदायिनी ॥
अन्तःकाटवसंपूर्णा सुपक्वेवेन्द्रवारुणी ॥ ६१ ॥
निखिले निगमकदम्बे लोकेष्वप्येष निर्विवादोर्थः ॥
शिव इव गुरुर्गरीयान् गुरुरिव सोयं सदाशिवोपि तथा॥६२
अतिमात्रबलेषु चापलं विदधानः कुमतिर्विनश्यति ॥
त्रिपुरद्विषि वीरतां वहन्नवलिप्तः कुसुमायुधो यथा ॥६३॥
उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम् ॥
मूर्छां गतो मृतो वा निदर्शनं पारदोत्र रसः ॥ ६४ ॥
अर्थिभिश्छिद्यमानोपि स मुनिर्न व्यकम्पत ॥
विनाशेप्युन्नतः स्थैर्यं न जहाति द्रुमो यथा ॥ ६५ ॥
दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डध्वनि-
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ॥
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥६६॥

एकीभवत्प्रलयकालपयोधिकल्प-
मालोक्य संगरगतं कुरुवीरसैन्यम् ॥
सस्मार तल्पमहिपुङ्गवकायकान्तं
निद्रां च योगकलितां भगवान्मुकुन्दः ॥ ६७ ॥

सन्त्येवास्मिन् जगति बहवः पक्षिणोरम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु ॥
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भिः
स्मृत्यारूढं किमपि भवति ब्रह्म कृष्णाभिधानम् ॥६८॥

उपकारमस्य साधोर्नैवाहं विस्मरामि जलदस्य ॥
दृष्टेन येन सहसा निवेद्यते नवघनश्यामः ॥ ६९ ॥

भवग्रीष्मप्रौढातपनिवहसंतप्तवपुषो
बलादुन्मूल्यद्राङ्निगडमविवेकव्यतिकरम् ॥
विशुद्धेस्मिन्नात्मामृतसरसि नैराश्यशिशिरे
विगाहन्ते दूरीकृतकलुषजालाः सुकृतिनः ॥ ७० ॥

धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टेर्जीवितं शारदायाः ॥
आज्ञा साक्षाद्ब्रह्मणो वेदमूर्तेराकल्पान्तं राजतामेष राजा ॥ ७१ ॥

अहितापकरणभेषज नरनाथ भवान् करस्थितो यस्य ॥
तस्य कुतोहिभयं स्यादखिलामपि मेदिनीं चरतः ॥ ७२ ॥

काव्यं सुधा रसज्ञानां कामिनां कामिनी सुधा ॥
धनं सुधा सलोभानां शान्तिः संन्यासिनां सुधा ॥ ७३ ॥

अविरतं परकार्यकृतां सतां
मधुरिमाऽतिशयेन वचोमृतम् ॥
अपि च मानसमम्बुनिधिर्यशो
विमलशारदचन्दिरचन्द्रिका ॥ ७४ ॥

विज्ञत्वं विदुषां गणेषु कविता सामाजिकानां कुले
माङ्गल्यं स्वजनेषु गौरवमथो लोकेषु सर्वेष्वपि ॥

दुर्वृत्तेशनितां नृलोकवलये राजत्वमव्याहतं
मित्रत्वं च वहन्न किंचन जने देव त्वमेको भुवि ॥ ७५ ॥
कस्तूरिकातिलकमालि विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम् ॥
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
मुल्लासयन्तु परितो हरितो मुखानि ॥ ७६ ॥
दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किंच मृद्वी
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना ॥
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कान्दिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः॥७७
वदने विनिवेशिता भुजङ्गी पिशुनानां रसनामिषेण धात्रा ॥
अनया कथमन्यथावलीढा नहि जीवन्ति जना मनागमन्त्राः॥७८॥
सुजनाः परोपकारं शूराः शस्त्रं धनं कृपणाः ॥
कुलवत्यो मन्दाक्षं प्राणात्यय एव मुञ्चन्ति ॥ ७९ ॥
विश्वाभिरामगुणगौरवगुम्फितानां
रोषोपि निर्मलधियां रमणीय एव ॥
लोकंपृणैः परिमलैः परिपूरितस्य
कालागुरोः कठिनतापि नितान्तरम्या ॥ ८० ॥
सत्पूरुषः खलु हिताचरणैरमन्द-
मानन्दयत्यखिललोकमनुक्त एव ॥
आराधितः कथय केन करैरुदारै-
रिन्दुर्विकासयति कैरविणीकुलानि ॥ ८१ ॥
तापत्रयं खलु नृणां हृदि तावदेव
यावन्न ते चलति देव कृपाकटाक्षाः ॥
प्राचीललाटपरिचुम्बिनि भानुबिम्बे
पङ्केरुहोदरगतानि कुतस्तमांसि ॥ ८२ ॥

वहति विषधरान्पटीरजन्मा शिरसि मषीपटलं दधाति दीपः ॥
विधुरपि भजते वराङ्कलेपं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः॥८३॥

त्वामन्तरात्मनि लसन्तमनन्तमज्ञा-
स्तीर्थेषु हन्त मदनान्तकशोधयन्तः ॥
विस्मृत्य कण्ठतटमध्यपरिस्फुरन्तं
चिन्तामणिक्षितिरजःसु गवेषयन्ति ॥ ८४ ॥

हालाहलं खलु पिपासति कौतुकेन
कालानलं परिचुचुम्बिषति प्रकामम् ॥
व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं कुरुते मनीषाम् ॥ ८५ ॥

गुणवृद्धिपरे यस्मिन् नैव स्तः प्रत्ययात्मके ॥
बुधेषु सदिति ख्यातं तद्ब्रह्म समुपास्महे ॥ ८६ ॥

मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः ॥
वीचिक्षालितकालियाहतपदे स्वर्लोककल्लोलिनि
त्वं तापं तिरयाधुना मम भवव्यालावलीढात्मनः ॥ ८७ ॥

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेद्य दृष्टा मया
मामा संस्पृश पाणिनेति रुदिता गन्तुं प्रवृत्ता ततः ॥
नो यावत् परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिनानिद्रादरिद्रीकृतः ॥ ८८ ॥

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन ॥
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ ८९ ॥

रामोसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि पुनर्देवो न जानाति तम् ॥

बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥ ९० ॥
अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ॥
आश्चर्येण मुहुर्मुहुस्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजा वाचस्ततो मुद्रिताः॥९१॥
गच्छाम्यच्युतदर्शनेन भवतः किं प्रीतिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ॥
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥९२
शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः ॥
आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोच्यैवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम्॥९३॥
तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ॥
तां हर्तुं विबुधद्विषोपि च न मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोयं विधिः ॥ ९४ ॥
आत्ते सीमन्तचिह्ने मरकतिनिहते हैमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ॥
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन् गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥९५
रे हस्तदक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ॥
रामस्य गात्रमसि निर्भरगर्भखिन्न-
सीताविवासनपटो करुणा कुतस्ते ॥ ९६ ॥

जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं
पाणिद्वन्द्व समर्चयाच्युतकथाः श्रोत्रद्वय त्वं शृणु ॥
इत्थं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं
जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम् ॥ ९७ ॥
चित्तं प्रसादयति लाघवमादधाति
प्रत्यङ्गमुज्ज्वलयति प्रतिभाविशेषम् ॥
दोषानुदस्यति करोति च धातुसाम्य-
मानन्दमर्पयति योगविशेषगम्यम् ॥ ९८ ॥
लोकद्वयप्रतिभयैकनिदानमेत-
द्धिक् प्राणिनामृणमहो परिणामघोरम् ॥
एकः स एव हि पुमान् परमस्त्रिलोके
क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ ९९ ॥
ज्ञानमन्त्रसदाचारैर्गौरवं भजते गुरुः ॥
तस्माच्छिष्यः क्षमी भूत्वा गुरुवाक्यं न लङ्घयेत् ॥ १०० ॥
पुङ्खानुपुङ्खविषयेक्षणतत्परोपि
स्वात्मावबोधनरुचिं न जहाति योगी ॥
संगीततालयवाद्यवशंगतापि
मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥ १ ॥
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ॥
छत्रच्छेदमयं दृष्ट्वा दूरापाति च राघवः ॥ २ ॥
मधुरैरलमङ्गनाङ्गसङ्गैरपि संगीतसुधाम्बुधेस्तरङ्गैः ॥
अधुना रमते मनोमदीयं परमानन्दघने गतद्वितीये ॥ ३ ॥
रे बालकोकिल कलैरलमुत्पलाक्षि
लोलैरलं तव विलोचनयोर्विलासैः ॥
माकन्दगन्धलहरीभिरपीह वायोः
स्वान्तं तु मेद्य परमात्मनि शान्तिमेति ॥ ४ ॥

किं मन्दमन्दहसितैरसितैरपाङ्गै-
रुन्मीलदिङ्गितवचोमृतपूरभङ्गैः ॥
बाले वयं तु निगमान्तमतेन तृप्ता-
श्चेतो न मायिकसुखे विनियोजयामः ॥ ५ ॥

लोक एष विषयानुरञ्जनं दुःखगर्भमपि मन्यते सुखम् ॥
आमिषं बडिशगर्भमप्यहो मोहतो ग्रसति यद्वदण्डजः ॥ ६ ॥

नीवातुस्त्रिदशौकसां जलनिधेर्मैदस्करो मानिनी
मानोन्मूलनकारणं कुमुदिनीहासैकवैहासिकः ॥
ध्वान्तोच्चाटनमान्त्रिकोम्बरसरःसीमामरालो जग-
न्नेत्रानन्दरसायनं विजयते राकानिशाकामुकः ॥ ७ ॥

खेलत्कुण्डलमाकुलाकुलमणीहारं क्वणत्कङ्कणं
श्रेणीनूपुरमेखलं चलकुचं वल्गन्नितम्बस्थलम् ॥
अन्योन्यं मणिदण्डिकाहतिवलन्नेत्रारविन्दाञ्चलं
प्रक्रान्तं यमिनो मनोपि हरते हल्लीसकक्रीडितम् ॥ ८ ॥

सोत्कण्ठं नयनैस्त्रिपञ्चभिरपि प्रत्यङ्गमुद्वीक्षिता
संश्लिष्टा दशभिर्भुजैश्च नवयोर्वक्षोजयोः पेशलम् ॥
आपीताधरपल्लवे च सदयोल्लासं मुखैः पञ्चभिः
पत्युः प्रीणयते मनोनुरहसे हृष्टा गिरेर्नन्दना ॥ ९ ॥

विहाय संसारमहामरुस्थलीमलीकदेहादिमिलन्मरीचिकाम् ॥
कृपातरङ्गाकुलमन्मनोमृगोविगाढमीश त्वयि गाढमीहते ॥१०॥

अलं हिमानीपरिदीर्णगात्रः समापितः फाल्गुनसंगमेन ॥
अत्यन्तमाकांक्षितकृष्णवर्त्मा भीष्मो महात्मा जनिमाघतुल्यः॥११

सृष्टः सृष्टिकृता पुरा किल परित्रातुं जगन्मण्डलं
त्वं चण्डातप निर्दयं दहसि यज्ज्वालाजटालैः करैः ॥
संरम्भारुणलोचनो रणभुवि प्रस्थातुकामोऽधुना
जानीमो भवता न हन्त विदितो दिल्लीधरो वल्लभः॥१२॥

पाण्डित्यं परिहृत्य यस्य हि कृते बन्दित्वमालम्बितं
दुःप्रापं मनसाऽपि यो गुरुतरैः क्लेशैः पदं प्रापितः ॥
रूढस्तत्र स चेन्निगीर्य सकलां पूर्वोपकारावलिं
दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे ॥ ११३ ॥

हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ॥
लेढि जिघ्रति संक्षिप्य करोत्युन्नतमासनम् ॥ ११४ ॥

किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ॥
देशेदेशे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥ ११५ ॥

श्वासोनुमानवेद्यः शीतान्यङ्गानि निश्चला दृष्टिः ॥
तस्याः किंवा पृच्छसि निर्दय तिष्ठत्वसौ हता वार्ता ॥ ११६ ॥

मकरालयस्य कुक्षौ स्थित्वा सदने मृताशिनां च चिरम् ॥
संप्रति निर्दोषे ते राजन् वदनाम्बुजे सुधा वसति ॥ ११७ ॥

उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा ॥
सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥ ११८ ॥

लोभाद्वराटिकानां विक्रेतुं तक्रमनिशमयन्त्या ॥
लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥ ११९ ॥

निष्णातोपि च वेदान्ते वैराग्यं नैति दुर्जनः ॥
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ १२० ॥

मद्वाणि माकुरु विषाद मनादरेण
मात्सर्यमन्दमनसां सहसा खलानाम् ॥
काव्यारविन्दमकरन्दमधुव्रताना-
मास्येषु यास्यसि सतां विपुलं विलासम् ॥ १२१ ॥

## रम्भाशुकसंवादः ।

रम्भोवाच॥मार्गेमार्गे नूतनं चूतखण्डं खण्डेखण्डे कोकिलानां विरावः।
रावेरावे मानिनीमानभङ्गो भङ्गेभङ्गे मन्मथः पञ्चबाणः ॥ १॥

शुक उ० मार्गेमार्गे जायते साधुसंगः संगेसंगे श्रूयते कृष्णकीर्तिः॥
कीर्तौकीर्तौ नस्तदाकारवृत्तिर्वृत्तौवृत्तौ सच्चिदानन्दभासः॥२

शु० तीर्थेतीर्थे निर्मलं ब्रह्मवृन्दं वृन्देवृन्दे तत्त्वचिन्तानुवादः ॥
वादेवादे जायते तत्त्वबोधो बोधेबोधे भासते चन्द्रचूडः ॥३

रं० गेहेगेहे जङ्गमा हेमवल्ली वल्ल्यांवल्ल्यां पार्वणं चन्द्रविम्बम् ॥
विम्बेविम्बे दृश्यते मीनयुग्मं युग्मेयुग्मे पञ्चबाणप्रचारः॥४॥

शु० स्थानेस्थाने दृश्यते रत्नवेदी वेद्यांवेद्यां सिद्धगन्धर्वगोष्ठी ॥
गोष्ठ्यांगोष्ठ्यां किन्नरद्वन्द्वगीतं गीतेगीते गीयते रामचन्द्रः५

रं० पीनस्तनीचन्दनचर्चिताऽङ्गी विलोलनेत्रा तरुणी सुशीला ॥
नाऽऽलिङ्गिता प्रेमभरेण येन वृथागतं तस्य नरस्य जीवितम्६

शु०अचिन्त्यरूपो भगवान्निरञ्जनो विश्वंभरो ज्ञानमयश्चिदात्मा
विशोधितो येन हृदि क्षणं नो वृथागतं तस्य नरस्य जीवितम्॥

रं० कामातुरा पूर्णशशाङ्कवक्त्रा विम्बाधरा कोमलनालगौरा ॥
नाऽऽन्दोलिता स्वे हृदये भुजाभ्यां वृथागतं० ॥ ८ ॥

शु० चतुर्भुजश्चक्रधरो गदायुधः पीताम्बरः कौस्तुभमाल्यया लसन्
ध्याने धृतो येन न बोधकाले वृथागतं० ॥ ९॥

रं० विचित्रवेषा नवयौवनाढ्या लवङ्गकर्पूरसुवासितदेहा ॥
नाऽऽलिङ्गिता येन दृढं भुजाभ्यां वृथागतं० ॥ १० ॥

शु० नारायणः पङ्कजलोचनः प्रभुः केयूरवान्कुण्डलमण्डिताऽऽननः
भक्त्यास्तुतो येन समाधितो नो वृथागतं० ॥ ११ ॥

---

१ आम्रवृक्षः २ संचारिणी.

रं० प्रियंवदा चम्पकहेमवर्णा हारावलीमण्डितनाभिदेशा ॥
संभोगशीला रमिता न येन वृथा० ॥ १२ ॥
शु० श्रीवत्सलक्ष्माङ्कितहृत्प्रदेशस्तार्क्ष्यध्वजः शार्ङ्गधरः परात्मा ॥
न सेवितो येन नृजन्मनाऽपि वृथागतं० ॥ १३ ॥
रं० चलत्कटी नूपुरमञ्जुघोषा नासाऽग्रमुक्ता नयनाऽभिरामा॥
न सेविता येन भुजङ्गवेणी वृथा गतं० ॥ १४ ॥
शु० विश्वंभरो ज्ञानमयः परेशो जगन्मयोऽनन्तगुणप्रकाशी ॥
नाऽऽराधितो नाऽपि धृतो न योगे वृथागतं० ॥ १५ ॥
रं० ताम्बूलरागैः कुसुमप्रकर्षैः सुगन्धतैलेन च वासितायाः ॥
नो मर्दितौ येन कुचौ निशायां वृ० ॥ १६ ॥
शु० ब्रह्मादिदेवोऽखिलविश्वदेवो मोक्षप्रदोऽतीतगुणः प्रशान्तः॥
धृतो न योगेन हृदि स्वकीये वृथा गतं० ॥ १७ ॥
रं० कस्तूरिकाकुङ्कुमचन्दनैश्च सुचर्चितायाऽगुरुधूपिताम्बरा ॥
उरःस्थले नो लुठिता निशायां वृ० ॥१८॥
शु० आनन्दरूपो निजबोधरूपो दिव्यस्वरूपो बहुनामरूपः॥
तपःसमाधौ कलितो न येन वृथा० ॥ १९ ॥
रं० कठोरपीनस्तनभारनम्रा सुमध्यमा चञ्चलखञ्जनाक्षी ॥
हेमन्तकाले रमिता न येन वृथा० ॥ २० ॥
शु० तपोमयो ज्ञानमयो विजन्मा विद्यामयो योगमयः परात्मा॥
चित्ते धृतो नो तपसि स्थितेन वृथा० ॥ २१ ॥
रं० सुलक्षणा मानवती गुणाढ्या प्रसन्नवक्त्रा मृदुभाषिणी या ॥
नो चुम्बिता येन सुनाभिदेशे वृथा० ॥ २२ ॥
शु० पत्न्यर्जितं सर्वसुखं विनश्वरं दुःखप्रदं कामिनिभोगसेवितम्॥
एवं विदित्वा न धृतो हि योगो वृथा० ॥ २३ ॥
रं० विशालवेणी नयनाऽभिरामा कन्दर्पसंपूर्णनिधानरूपा ॥
भुक्ता न येनैव वसन्तकाले वृथा गतं० ॥ २४ ॥

शु० मायाकरण्डी नरकस्य हण्डी तपोविखण्डी सुकृतस्य मण्डी॥
नृणां विखण्डी चिरसेविता चेद्वृथा० ॥ २५ ॥
रं० समस्तशृङ्गारविनोदशीला लीलावती कोकिलकण्ठनाला॥
विलासिता नो नवयौवनेन वृथा० ॥ २६ ॥
शु० समाधिहन्त्री जनमोहयित्री धर्मे कुमन्त्री कपटस्य तन्त्री॥
सत्कर्महन्त्री कलिता च येन वृथा० ॥ २७ ॥
रं० बिल्वस्तनी कोमलिता सुशीला सुगन्धकुन्ता ललिता च गौरा॥
नाऽऽश्लेषिता येन च कण्ठदेशे वृथा० ॥ २८ ॥
चिन्ताव्यथा दुःखमयी सदोषा संसारपाशा जनमोहकर्त्री॥
संतापकोशा भजिता च येन वृथा० ॥ २९ ॥
रं० आनन्दकन्दर्पनिधानरूपा झणत्कणत्कङ्कणनूपुराऽऽढ्या॥
नाऽऽस्वादिता येन सुधाऽधरस्था वृथा गतं० ॥ ३० ॥
शु० कापट्यवेषा जनवञ्चिका सा विण्मूत्रदुर्गन्धदरी दुराशा॥
संसेविता येन सदा मलाढ्या वृथा गतं० ॥ ३१ ॥
रं० चन्द्राऽऽनना सुन्दरगौरवर्णा व्यक्तस्तनी भोगविलासदक्षा॥
नाऽऽन्दोलिता वै शयनेषु येन वृथा० ॥ ३२ ॥
शु० उन्मत्तवेषा मदिरासुमत्ता पापप्रदा लोकविडम्बनी या॥
योगच्छला येन विभाजिता च वृथा० ॥ ३३ ॥
रं० आनन्दरूपा तरुणी नताङ्गी सद्धर्मसंसाधनसृष्टिरूपा॥
कामार्थदा यस्य गृहे न नारी वृथा० ॥ ३४ ॥
शु० अशौचदेहा पतितस्वभावा वपुःप्रगल्भा बललोभशीला॥
मृषा वदन्ती कलिता च येन वृथा गतं० ॥ ३५ ॥
रं० क्षामोदरी हंसगतिः प्रमत्ता सौन्दर्यसौभाग्यवती प्रलोला॥
निष्पीडिता यैर्न रतौ यथेच्छं वृथा० ॥ ३६ ॥
शु० संसारसद्भावनभक्तिहीना चित्तस्य चोरा हृदि निर्दया च॥
विहाय योगं कलिता नरेण वृथागतं तस्य नरस्य जीवितम्॥ ३७॥

रं०सुगन्धैःसुपुष्पैः सुशय्या सुकान्ता वसन्तो ऋतुः पूर्णिमा पूर्णचन्द्रः
यदा नाऽस्ति पुंस्त्वं नरस्य प्रभूतं ततःकिं ततःकिं ततःकिं ततःकिं३८
शु० सुरूपं शरीरं नवीनं कलत्रं धनं मेरुतुल्यं वचश्चारुचित्रम् ॥
हरेराङ्घ्रियुग्मे मनश्चेदलग्नं ततः किं० ॥ ३९ ॥
इति रम्भाशुकसंवादे शृंगारज्ञाननिर्णयः ॥

## राधाकृष्णसंवादः ।

का सुन्दरी बल्लववल्लभासु[1] त्वच्चित्तभित्तौ[2] वद शालभञ्जी[3]॥
त्वं मालतीमण्डितकेशपाशे मच्चित्तभित्तौ किल शालभञ्जी ॥ १ ॥
पुरातनस्याऽपि[4] च निर्जरत्वे[5] को नाम हेतुर्वद सत्यमेव ॥
लावण्यधन्ये वृषभानुकन्ये तवाऽधरोत्थाऽमृतपानमेव[6] ॥ २ ॥
पयोधरे[7] विद्युदभून्मुरारे पयोधरो विद्युति नैव दृष्टः ॥
राधे स्थितायां त्वयि विद्युतीह पयोधरद्वन्द्वमिदं व्यलोकि ॥३॥
दातुं शरीरं परपूरुषाय नैवोत्सहेऽहं नरकाद्बिभेमि ॥
दत्ते शरीरे नरकस्य हन्त्रे का नाम भीतिर्नरकाद्भवत्याः॥ ४ ॥
त्वां बल्लवीजारमहर्निशं या सीमन्तिनी[8] गायति किं फलं सा॥
प्राप्नोति राधे व्यभिचारदोषान्मुच्येत्तथाऽसौ भवनागपाशात्[9] ५
निशाऽवसाने तव विप्रयोगात्प्राणा मदीया विकलीभवन्ति[10] ॥
राधे वद प्राणपतेर्वियोगे प्राणाः कथं नो विकलीभवेयुः ॥ ६ ॥
नि[11]र्मासि चित्ते व्रजसुन्दरीणां कामं विभो लोचनगोचरस्त्वम्[12] ॥
किमत्र चित्रं तव भाति चित्ते कामस्य राधे जनकोऽहमस्मि ॥७॥

---

१ गोपस्त्रीषु २ चित्तमेव भित्तिः कुड्य तस्या ३ पुत्तलिका 'पुतळीति' लोके ४ जीर्णस्यापि ५ जरारहितत्वे देवत्वे च ६ अमृतपानेन हि निर्जरत्व प्रसिद्धम् ७मेघे ८ स्त्री ९भवः ससार एव नागपाशस्तस्मात् १०व्याकुला भवन्ति ११उत्पादयसि १२ दृग्विषयीभूतः

जना जगत्यां जगदीशश्श्वत्त्वां राधिकाजारमुदाहरन्ति ॥
निन्दन्तु लोका यदि वा स्तुवन्तु प्राणेश्वरीं त्वां न परित्यजामि ॥८॥
कलानिधिं गोकुलराजमानं श्यामाप्रियं त्वां विधुमेव मन्ये ॥
त्वदुक्तरीत्या विधुशब्दवाच्यं राधाधवं मां न कथं ब्रवीषि॥ ९॥
भक्तिर्मया सा कतमा विधेया यया प्रसादो भवतो मुरारे॥
मम प्रसादाय विधेहि राधे भक्तिं परामात्मनिवेदनाख्याम्॥ १०॥
विधिं समुल्लङ्घ्य पराङ्गनासु प्रसंगमङ्गीकुरुषे कथं नु ॥
विधेर्विधातुर्विधिलङ्घने मे का नाम भीतिर्भण भामिनीह ॥११॥
उदीर्यमाणेऽपि च सान्त्ववादे मानाऽपनोदो नहि राधिकायाः ॥
मानोऽस्तु ते यद्यपराधिकःस्यां स्वप्नेऽपि नैवाऽस्म्यपराधिकोऽहम् १२
भुक्तिं समीयुर्भवभीतिभाजो भवत्पदाम्भोजरजोजुषन्तः ॥
बद्धस्त्वयाऽहं भुजवल्लरीभ्यां राधे निकुञ्जे मधुमाधवीनाम् ॥ १३॥
आभीरनार्याः करमादधानो न शङ्कसे माधव किं ब्रवीषि ॥
पल्लीपतिर्वल्लववल्लभायाः करग्रहे किं विदधीत शङ्काम् ॥ १४ ॥

## अथाश्वधाटीकाव्यम् ।

श्रीः॥ अङ्कादतक्षितिजमङ्काऽनभिज्ञशशिशङ्काकराऽऽस्यसुषमं
टङ्कारिचापमनुलङ्काऽऽशरक्षतजपङ्काऽवरूषितशरम् ॥

---

१ निरन्तरम् २ कलाना चतुःषष्टिमिताना निधिम् पक्षे कलाना षोडशाना निधिम् ३ गोकुले व्रजे. पक्षे गोकुलैः किरणसमूहैः शोभमानम् ४ श्यामा षोडशवार्षिकी पक्षे श्यामा रात्रिः ५ चन्द्रम् ६ नवविधभक्तिष्वात्मनिवेदनरूपाभक्तिः पुराणप्रसिद्धा. अत्र तु आत्मनिवेदन स्वदेहार्पणमित्यर्थः ७ शास्त्रम् ८ ब्रह्मणः ९ कथय. १० उच्चार्यमाणे. ११ प्रेमपरसभाषणम् १२ अभिमानदूरीकरणम् १३ अपराधयुक्तः स्वार्थे कप्रत्ययः १४अपगता राधिका यस्मात्सः १५ मोक्ष. मोचन च. १६ प्राप्तुयुः १७ सेवमानाः

त्वं कामदं विहितरङ्काऽवनं दनुजकङ्कालनोदिनमना-
तङ्काय वत्स भज तं कालमेघरुगहंकारहारिवपुषम् ॥ १ ॥
मागामनस्त्वमनुरागाऽतिभूमिमुपभोगानवाप्तुमनसा
माऽऽगारदारसुतयोगानकिं बत वियोगात्मकाः परिणतौ ॥
यागादिजन्यपरभागा अविग्रहविभागार्हशैलतनयं
वेगादुपास्व भवरोगाऽपहं विधृतनागाऽजिनं पुररिपुम् ॥ २ ॥

---

अङ्केति. । हे वत्स त्व अनातङ्काय आतङ्को भवरोगस्तन्निवृत्त्यर्थं अङ्के आदृता क्षितिजा सीता येनैवविधं तं राम भजेत्यन्वयः । कीदृशं त अङ्कोलाञ्छन तदनभिज्ञोयः शशी तच्छङ्काकरा आस्यसुषमा मुखकान्तिर्यस्यैवभूतम् ।पुनःकी० टकारःप्रत्यञ्चा शब्दस्तद्विशिष्टश्चापोधनुर्यस्य त अनु पश्चात् । पु०की०लङ्कासबन्धिनो ये आशरा राक्षसास्तेषा रक्तकर्दमेन लिप्तः शरो यस्य । पु०की०कामान् भक्तमनोरथान् ददाति सः एवभूतम्। पु०की०विहितं रङ्काणा दीनानामवन रक्षण येन तम्।पु०की०दनुजो दुन्दुभिनामा दानवस्तस्य यःकङ्काल.अस्थिपञ्जरस्त नुदति क्षिपतीत्येवभूतम्.सुग्रीवाय स्वबलं प्रदर्शयितु वालिहतस्य कस्यचिद्दानवस्यास्थिपञ्जरं रामो वामपादाङ्गुष्ठेन सलीलं चिक्षेपेति रामायणे प्रसिद्धम्' पु०की० नीलमेघस्य कान्तिविषये योहकारः मत्सदृशमन्यन्नील नास्तीत्येव रूपस्त हरतीत्येवंभूत वपुः शरीर यस्य अतिनीलवपुषमित्यर्थः ॥ १ ॥

सप्रति स्वमन उपदिशति । हे मनः त्वं उपभोगान् स्रक्चन्दनादिविषयान् अवाप्तु प्राप्तु अनसा रथेन अनुरागातिभूमिं परा काष्ठा मा गाः मा गच्छ । ननु किमर्थं मा वारयसीति चेत्तत्राह मागारदारसुतयोगाः मा लक्ष्मीः आगार गृह दाराः स्त्री सुताश्च एषा सयोगाः परिणामे वियोगात्मकाः न किं अपि तु तथैव वतेति खेदे।स्वर्गसुखमपि तथैवेत्याह यागादिना ज्योतिष्टोमादिना उत्पन्ना ये परा उत्कृष्ट भागाः पीयूषाप्सरआदिरूपास्तेपि अवसाने वियोगात्मका एवेति पूर्वेण सबन्ध ।पदभागा इति पाठे स्वर्गादयः तर्हि किमस्माभिः कर्तव्यमित्यपेक्षायामाह पुररिपु शिव वेगाच्छीघ्रमुपास्व भज । कीदृशपु० अविग्रहविभागार्हशैलतनय विग्रहेण देहेन यो विभागो भेदस्तमर्हतीति विग्रहविभागार्हा तथा न भवतीत्येवंविधा शैलतनया

वाचामरन्दमधुमोचासुधामधुरिमाऽऽचामदक्षरसया
हा चापलान्नरपिशाचानुपासितुमनाचार किं नु यतसे ॥
काचाय मा विनट साचाऽऽपदत्र न सुमोचाग्रिमा कमपि तं
प्राचामुपास्यमभियाचाऽपवर्गसुखमाचार्यमाश्रितवटम् ॥ ३ ॥
खञ्जयितोऽधिमतिगञ्जापरोऽपि वत संजायतेऽत्र धनदः
संजाघटीति गुणपुञ्जायितस्य न तु गुञ्जामितं च कनकम् ॥
किं जाग्रती जयसि किं जानती स्वपिषि सिञ्जाननूपुरपदे
तञ्जापुरेशि नवकञ्जाक्षि साधु तदिदं जातु वा किमु शिवे ॥ ४ ॥

---

यस्य तम् अत्यन्तानुरागवशादर्धाङ्गीकृतदारमित्यर्थः । पु० की०भव एव रोगस्त-मपहन्तीति तथाभूतम् । पु० को० विधृत नागस्य अजिनं चर्म येन त गजकृत्तिवाससमित्यर्थः ॥ २ ॥

पूर्वश्लोकान्मन इत्यनुसधेयं हे अनाचार मनः अथ वा जीवसामान्येनायमुपदेशः हे अनाचारजीव । त्वं मकरन्द·पुष्परसः मधु क्षौद्र मोचा कदलीफलं सुधा अमृत एतत्सम्बन्धी यो मधुरिमा माधुर्यं तस्याचामे भक्षणे दक्षो रसो यस्यास्तथाविधया तुच्छीकृतमकरन्दादिरसमाधुर्ययेत्यर्थः एतादृशा वाचा वाण्या हा इतिखेदे । चापलान्मौर्ख्यहेतोर्नरपिशाचान्नररूपान् पिशाचान् पिशाचतुल्यानधमान्नरानित्यर्थः उपासितु तन्मनोरञ्जयितु किं नु यतसे किमर्थं यत्नं करोषि । नन्वापत्परिहाराय तथा करोमीति चेद्यथाकथचिद् द्रव्यादिलाभेनैतादृशाल्पापत्परिहारेपि मरणादिपरपरारूपमहापदो विद्यमानत्वेनैतस्या किंचित्करत्वाद्विफलोयमुद्यमस्तव उक्तमहापत्परिहारस्तु तेभ्यो नरपिशाचेभ्यो दुर्घट इत्याक्षिप्य सर्वथापत्परिहारोपायमुपेदष्टुमाह । काचाय काचवत्तुच्छ धनादि लब्धु मा विनट नरपिशाचानामग्रे नृत्य मा कुर्वित्यर्थः । यतोऽग्रिमा अग्रतः स्थिता सा निरतिशयदुःखप्रदत्वेन प्रसिद्धा आपत् मरणादिरूपा आपत्तिः अत्र अस्मिन्नरपिशाचानुसरणे सति न सुमोचा मोचयितुमशक्येत्यर्थः । तर्हि किं कर्तव्यमित्यपेक्षायामेव कुर्वित्याह कमपि अनिर्वचनीय प्राचा ब्रह्मादीनामुपास्य आश्रितवटमाचार्यं श्रीदक्षिणामूर्तिं प्रति अपवर्गसुखमभियाच प्रार्थय ॥ ३ ॥

अधिमति मतौ खञ्जायित. खञ्जवदाचरितः कुण्ठितमतिर्मूढ इत्यर्थः तथैव गञ्जापरोपि मदिरागृहासक्तोपि नर. धनदः सजायते कुबेरतुल्यधनवान् भवती-

आटीकसेऽङ्ग करिघोटीपदातिजुषि वाटीभुवि क्षितिभुजां
चेटीभवंस्तदपि शाटी न ते वपुषि वीटी न वाधिवदनम् ॥
कोटीररत्नपरिपाटीभृशाऽरुणितजूटीविधुं तनुलस-
त्पाटीरलिप्तिमिभधाटीजुषं सुरवधूटीनुतां भज शिवाम् ॥ ५ ॥
पण्डावदग्रिम पिचण्डाऽवपूर्तिमनुरण्डाविधेयकुटिलो-
द्दण्डाविवेकधनिचण्डालगेहभुवि दण्डाऽऽहतिं किमयसे ॥
खण्डाऽमृतद्युतिशिखण्डामुपास्व सुरखण्डार्चिताऽङ्घ्रिकमलां
भण्डासुरद्रुहमचण्डात्मिकां चितिमखण्डां जडात्मसुखदाम् ॥ ६ ॥

---

अर्थः गुणपुञ्जायितस्य गुणनिधेर्नरस्य गुञ्जामितमपि कनक न संजाघटीति न लभ्यते इत्यर्थ हे शिवे त्वं जाग्रती सती किं जयसि, जानती त्वं स्वपिषि किम् । तदिदं पूर्वार्धोक्तं साधुशोभनं किमु वा । सिञ्जानौ शब्दायमानौ नूपुरौ ययोरेवं-भूते पदे चरणे यस्याः तंजापुरं 'तंजौर' इतिप्रसिद्ध केचित्तुळजापुरमिति वदन्ति तस्य स्वामिनी नवीनं यत्कञ्ज कमलं तद्वद्दक्षिणी यस्याः ॥ ४ ॥

एव स्वकीयमनसः समाधानं कृत्वाऽन्यमुपदिशति आटीकसेइति । हे अङ्ग त्वं चेटीभवन् दासःसन् करिघोटीपदातिजुषि हस्त्यश्वपदातिसेविताया क्षितिभुजा राज्ञा वाटीभुवि उद्यानभूमौ आटीकसे परिभ्रमणं करोषि तदपि तथापि ते तव वपुषि शाटी शरीरपरिधानार्थं वस्त्रं नास्ति। परं च अधिवदनं वदने वीटी ताम्बूलं नास्ति एवं च व्यर्थश्रमकारी त्वमतीव मूर्खोऽसीति भावः। तर्हि मया किं कार्य-मिति तत्राह कोटीरो मुकुटस्तस्य या रत्नपरिपाटीमाणिक्यपंक्तिस्तया भृशमत्यन्त मरुणितो रक्तो जूटीविधु. केशपाशसमीपवर्ती भालचन्द्रो यस्यास्तामेवंभूता तनौ लसन्ती शोभमानापाटीरलिप्तिश्चन्दनलेपो यस्यास्तातथाइभो गजस्तस्य धाटीगति-स्तां भजन्तीं सुराणा वधूभ्यः स्त्रियस्ताभिर्नुता स्तुता शिवा पार्वतीं भज ॥ ५ ॥

पण्डेति । हे पण्डावदग्रिम पण्डितश्रेष्ठ पिचण्डस्योदरस्यावपूर्तिर्भरणं तामनुल-क्षीकृत्य रण्डानां पांसुलाना विधेया वचनग्राहिण आज्ञापालास्ते च ते कुटिला वक्रा उद्दण्डा उद्धता अविवेकिनो विवेकशून्या एतादृशा ये धनिनस्त एव चण्डालास्त-द्गेहभुवि दण्डाऽऽहतिं दण्डप्रहारं किमयसे प्राप्नोषि उद्धताः पुरुषा गृहमागतं

गाढा त्वया सपदि राढापुरी वसुनि वाढाऽववद्धरतिना
सोढा तथा तपनगाढाऽऽतपप्रसररूढाऽतिवृष्टिविततिः ॥
मूढाऽपि किं फलमगूढाजरैव शिरसोढाकुतो न विनुतो
द्रोढाजनोर्जनितषोढामुखः समिति वोढासहाटकगिरेः ॥७॥
दन्तावलाऽश्वभृति चिन्तापरोऽसि वत किं तावता वद फलं
हन्ताखिलं क्व च न गन्ता तदेतदथ संतापमश्नासि परम् ॥
त्वं तात भावय दुरन्तारमानवरतं तामसः स्वपिहि मा
संतारकं विनतसंतानकं सपदि तं तावदाश्रय शिवम् ॥ ८ ॥

---

याचकं दण्डेन ताडयन्तीति सर्वथा विदितमेव तस्मात् हे जड पठन्मूर्ख खण्डामृतद्युतिः अर्धचन्द्रः शिखण्डः शिरोभूषणं यस्यास्ता सुराणां देवानां खण्डः समूहस्तेनार्चितं पूजितं अङ्घ्रिकमलं पादपद्मं यस्यास्ता अखण्डां चितिं अखण्डचिद्रूपिणीं अचण्डात्मिकां अचण्डः अकोपनः आत्मा स्वभावो मनो वा यस्यास्ता भण्डासुरद्रुहं भण्डासुरघातिनीमम्बां उपास्व तस्या उपासनां कुर्वित्यर्थः ॥६॥

गाढेति ।वसुनि धने वाढावबद्धरतिना वाढं दृढं अववद्धा रतिः प्रीतिर्येन तादृशेन त्वया राढापुरी नगरी विशेषः गाढा प्रविष्टा । तथा तपनः सूर्यस्तस्य गाढो ऽत्युग्रो य आतपप्रसरस्तेन रूढा प्रकर्षेणोद्भूता सा चासावतिवृष्टिस्तस्याविततिर्विस्तारः सोढा त्वयेति शेषः । षहमर्षणे । रे मूढ अगूढा व्यक्ता जरैव शिरसा ऊढा धृता एवं कृत्वापि किं फलं त्वयाप्तं न किंचिदपीत्यर्थः अतः क्लेशमात्रफलदमुद्यमं त्यक्त्वा स प्रसिद्धः परमेश्वरस्त्वया कुतः कारणान्न विनुतो विशेषेण स्तुतः ।कोसाविति चेत्तत्राह जनितः षोढामुखः षण्मुखो येन षडाननपितेति यावत् । जनोर्जन्मनः भवस्येति यावत् उपलक्षणमिदं । जन्मप्रभृतिमरणान्तदुःखसंघस्य द्रोढा द्रोहकृत् नाशक इत्यर्थः । समिति त्रिपुरवधसंग्रामे हाटकगिरेः स्वर्णपर्वतस्य मेरोरित्यर्थः वोढा वहनकर्ता । त्रिपुरासुरवधकाले त्र्यम्बकः पृथ्वीं रथं ब्रह्माणं सारथिं मेरुं धनुर्विष्णुं शरं चन्द्रार्कौ रथचक्रे कृत्वा त्रिपुरं हतवानिति पुराणेषु प्रसिद्धम् ॥ ७॥

दन्तावलेति ।रे मदान्ध त्वं गजाश्वभरणचिन्तापरः असि तावता तवेति शेषः। किं फलमस्तीति वद कथय।ननु गजाश्वशिबिकाद्युपभोगेन मनसः परमाल्हाद एवफलमितिचेद् भ्रान्तोसि इत्याह हन्तेति । खेदे तदेतत् गजाश्वप्रभृति सर्वं कुत्राऽपि

वन्दारुलोकततिमन्दारपादपममन्दायमानकरुणं
वृन्दावनोढपशुवृन्दाऽवनं प्रणतवृन्दारकं चरणयोः ॥
नन्दाऽऽदृतं कुशलसंदायितत्किमपि कन्दायितं श्रुतिगिरां
कुन्दाभकीर्ति मुचुकुन्दार्चितं हृदि मुकुन्दाह्वयं स्मर महः॥९॥
क्रोधाऽऽकुलो विगतबोधाऽन्वयोऽसदनुरोधाऽनुगो न भव भोः
साधारणी नखलु बाधा भवस्य भुवि गाधानमोहवसतिः ॥
वेधा गुरुश्च पटुमेधा विभुर्नहि निषेधाय कर्म वितते-
राधाय तात हृदि राधाविटांऽङ्घ्रियुगमाधारतां व्रजमुदाम् १०

---

गन्ता गमिष्यति त्वत्तो वलीयासं प्रतीतिभावःअथ अनन्तरं परं संताप अश्वसि मा-मोषि। तस्मात् हे तात रमा लक्ष्मीः दुरन्ता दुष्परिणामा इति त्व भावय विचारय। परं चानवरतं सततं तामस. सन् तमोगुणाभिनिविष्टः सन् मा स्वपिहि मा श-यीथाः अज्ञानान्धो माभूरित्यर्थः। तर्हि विनतसंतानकं भक्तकामकल्पद्रुमं तं शिवं तावन्निश्चयेन सपदि सत्वरं भाश्रय आश्रयं कुरु तेन तवाखण्डितं कल्याणं स्यादिति भावः ॥ ८ ॥

अथ वा विष्णुभक्ति कुर्वित्याह वन्दारुलोकेति। वन्दनशीललोकाना या त-तिः परंपरा तस्या मन्दारपादपः कल्पवृक्षस्तत् अमन्दायमानकरुणं अनल्पदयावत् वृन्दावने व्रजे ऊढा वृद्धिं गता ये पशवो गोमहिष्यादयस्तेषा वृन्दं समूहस्तस्य रक्षकं प्रणता नम्रा वृन्दारका देवा यस्य तत् नन्देन गोपेनादृतं संत्कृतं कुशलं कल्याणं द-दाति इत्येवंशीलम्।श्रुतिगिरा वेदवाणीना कन्दायितं मूलभूतंकुन्दपुष्पवद्धवला की-र्तिर्यस्य तत् मुचुकुन्दाभिधेन राज्ञा अर्चितं पूजितं मुकुन्दसंज्ञकं मुक्तिदायकं म-हस्तेजः स्मर स्मृतिपथमानय ॥ ९ ॥

उपदेशान्तरमाह। क्रोधेति। भोः पौत्र मदीयं वचनं प्रतिकूलं मत्वा त्वं क्रोधाकुलः क्रोधव्याप्तः विगतः बोधान्वयो ज्ञानानुवृत्तिर्यस्य तथाभूतः सन् असता दुष्टानामनुरोध आनूकुल्यं तदनुगच्छतीति तथाविधो मा भूः।कुतः भवस्य संसृते-र्बाधा पीडा साधारणी सामान्या न खलु भुवि मोहवसति. मोहस्थानं गाधा उत्ताना स्वल्पेत्यर्थः न भवति।किंच पटुी समर्था मेधा वुद्धिर्यस्य तथाभूतो वेधाः ब्रह्मा च परं गुरुराचार्यः कर्मवितते: प्राक्तनकर्मविस्ताररूपिणः सुखदुःख[illegible]रस्य नि-

नानाविधे जनुषि का नाम सौख्ययुजिरानाकपृष्ठमपि वा
जानासि यद्विषयसूनारुचिर्भवसि दूनाऽऽशयो भृशतरम् ॥
मानाऽतिगो विहितदाऽनाध्वरादेरिह कीनाशभीतिरहितो
मीनायताक्षमधिगानादरं कलय सूनास्त्रजीवनहरम् ॥ ११ ॥

---

षेधाय नाशाय विभुः समर्थो न भवति हीति निश्चयेन । अतः हेतात राधाविटो राधिकाजारः श्रीकृष्णस्तस्याऽङ्घ्रियुगं चरणद्वन्द्वं हृदि मनसि आधाय ध्यात्वा मुदा मोक्षसुखाना आधारता पात्रता व्रज गच्छेति ॥ १० ॥

नानाविधेति । हेतातेत्यनुषञ्जनीयं नानाविधे अनेकप्रकारे नृदेवतिर्यगादिरूपे जनुषि जन्मनि सौख्ययुजिः सौख्ययोगः आनाकपृष्ठं स्वर्गलोकमभिव्याप्यापि का नामास्ति ।स्वर्गादीनामपि क्षयिष्णुत्वेन न काप्यस्तीत्यर्थः । इहेर्ष्याद्वेषादिजन्यक्लेशवत्स्वर्गादिलोकेष्वपि पुण्यतारतम्येन भोगेषूत्कर्षापकर्षयोः सत्त्वेन पुण्यपरिक्षये पतनभयेन चेतोऽप्यधिकतरक्लेशसत्त्वादिति भावः । एतदहमेव कथयामीति मा मन्यस्व किंतु स्वयमेवाग्रे त्वं ज्ञास्यसीत्याह । जानासीति । यत् यदा त्वं विषयसूनारुचिः विषयेषु तत्पूर्तये सूनाया यागीयाया रागप्राप्ताया वा रुचिरभिलाषो यस्यैवंविधो भवति तदा भृशतरमत्यन्त दूनाशयः क्लेशादिबाहुल्येनोपतप्तान्तःकरणः सन् जानासि । मया बोधितमिहामुत्र सुखाभावं ज्ञास्यसीत्यर्थः । उभयत्र 'वर्तमानसामीप्ये वर्तमानवद्वेति' लट् तस्मादुभयत्र निरवधिसुखकामना चेद्देवं कुर्वित्याह । मानातिग इति । मानं प्रमाणमतीत्य गच्छतीति मानातिगः एतावत एव दानयागादयो मया कर्तव्या इत्येवमियत्ता विहायेत्यर्थः । विहितदानाध्वरादिः कृतदानयजनादिः अत एव कीनाशभीतिरहितो यमभयरहितः सन् मीनायताक्षं मत्स्यसदृशदीर्घनयनं । अधिगानादर आवे अधिको गानविषये आदरो यस्य त गानप्रियमित्यर्थः । सूनास्त्रः कुसुमायुधः कामस्तस्य जीवन हरतीति तथाविधस्त स्मरहरं सदाशिवमित्यर्थः । भज सेवस्व इह दानयजनादिजन्यपुण्यबलाद्यमभयनिवृत्त्याचित्तस्वास्थ्येनाक्षय्यानन्दरूपतावाप्तये विषयविरक्तिपूर्वकं स्मरहरमेव सेवस्वेति भावः ॥ ११ ॥

सापायमेत्य वपुरापातरम्यमनुतापाद्दते सकुतुकं
द्वीपानगाहिषि समीपाऽतिगानकृतभीपातखेदगणनः ॥
भूपानसेविषि सुरूपाकृतेऽहह न तूपागमं सुखलवं
गोपाय मां सपदि गोपालधुर्य तव कोपाय नाऽस्मि विषयः॥१२॥
किं बाल न स्फुरति संबाधकं भृशविडम्बाऽऽस्पदं परिणतौ
निम्बादितिक्तरससंबाधमत्र ननु बिम्बाऽधराविलसितम् ॥
लम्बाऽलकां धुतविलम्बादरां घुसृणजम्बालजालविलस-
द्बिम्बामनूनशशिबिम्बाऽऽनना सततमम्बामुपास्व सदयाम् ॥१३॥

---

सापायेति । सापायं नाशयुक्तं आपातरम्य पतनं मर्यादीकृत्य रमणीय पतने सत्यतीव निन्द्य ईदृशं वपुः शरीरं एत्य प्राप्य न कृता भियः भयस्य पातस्य च खेदाना गणना येन तादृशोऽहं समीपातिगान् दूरानित्यर्थः द्वीपान् देशविशेषानगाहिषि धनेच्छया प्रोषितवानस्मि । हे सुरूपाकृते भूपानसेविषि सेवितवानस्मि । एव कृत्वापि सुखलवं सुखलेशं न तु उपागमं न प्राप्तवानस्मि। अतो हे गोपालधुर्य श्रीकृष्ण सपदि मा गोपाय पाहीत्यर्थः । तव कोपायाहं विषयो नास्मि ममोपरि कोपं मा कुर्वित्यर्थः ॥ १२ ॥

किमिति । हे बाल मूढ अत्रामुष्मिन् लोके बिम्बाधराविलसित बिम्बं पक्वतुण्डिकेरीफलं तद्वदरुणोऽधरो यासा तासा विलसित विलासः संबाधक अत्यन्तं बाधकं तथा भृशविडम्बास्पदं अत्यन्तं प्रतारणात्मक तथा परिणतौ परिपाकावस्थाया निम्बादितिक्तरससबाध निम्बादिवत्तिक्तरसेन व्याप्तं ईदृशं न स्फुरति किं । अपि तु भासत एवेत्यर्थः।अतस्तदनुराग परित्यज्य अम्बा पार्वतीं जगन्मातरमित्यर्थः उपास्व भज। कीदृशीं लम्बालका दीर्घकेशीं।पुनः कीदृशीं धुतविलम्बादरा धुतस्तिरस्कृतो विलम्बो भक्तरक्षणविषयस्तस्मिन् आदरो यया ता । पुनःकीदृशीं घुसृण कुकुमं तस्य यज्जम्बालजालं पङ्कजाल तद्वद्विलसद्बिम्ब सत्सदृश ओष्ठो यस्यास्तामारक्तौष्ठीमित्यर्थः । पुनः कीदृशीं अनूनशशिबिम्बाननां पूर्णचन्द्रमण्डलमुखीं तथा सदयाम् ॥ १३ ॥

रम्भादिगाढपरिरम्भाऽऽदरेण सुचिरं भावतोऽत्र यजसे
त्वं भावयस्व किमु शं भाव्यनेन जडसम्भावितक्षयमिदम् ॥
स्तम्भादुदित्वरमहं भावतः कलय जम्भारिसंस्तुतपदं
तं भावुकप्रदमदम्भाकुलो नखरसंभारदारितारिपुम् ॥ १४॥
रामार्चिताऽङ्घ्रिरभिरामाऽऽकृतिः कृतविरामा सुपर्वविपदां
कामाऽर्तिहृत्सफलकामानिदेशरतकामादिनिर्जरवधूः ॥
भामाहरस्यनुतभामाजपासदृशभामाननीयचरिता
सामामवत्वखिलसामाद्दृतस्तुतिरसामान्यमुक्तिसुखदा ॥ १५ ॥

---

रम्भादीति । रम्भादीना स्वर्वेश्याना गाढपरिरम्भो गाढालिङ्गन तस्य आदरेण लोलुपतया सुचिर वहुकाल भावतः श्रद्धया अत्र इह लोके यजसे ज्योतिष्टोमादीन् करोषि । अनेन क्रतुयजनेन श सुखं किं भावि भविष्यति इति त्वं भावयस्व विचारं कुरु । रे जड मूर्ख इदं यागार्जितं स्वर्गसुखं संभावितक्षयं अवश्य क्षयशीलं तस्मात् अदम्भाकुलः दम्भो गर्वः सोमयाज्यहमिति तेन आकुलो व्याप्तो न भवतीति तथाभूतः सन् अहंभावतः सोहंभावेन तदाकारवृत्त्येति भाव.। स्तम्भात् उदित्वर प्रादुर्भूतं नृसिंहमित्यर्थ. । तं कलय चिन्तय तस्य ध्यानं कुर्विति यावत् । कीदृशं जम्भारिसंस्तुतपदं जम्भारिणा इन्द्रेण संस्तुतं पदं यस्य । पुनःकीदृशं भावुकप्रद क्षेमदातारं। पुनःकीदृशं नखरसभारदारितरिपुं नखरसंभारेण नखसमूहेन दारित. विदारितः रिपुः हिरण्यकशिपुर्येनैवंभूतम् ॥ १४ ॥

रामेति । रामार्चिताङ्घ्रिः रामवन्दितपदा अभिरामा मनोहरा आकृतिर्यस्याः सुपर्वविपदा दैत्यकृतदेवविपत्तीनां कृतविरामा विरामो नाशः कामार्तिहृत्कामपीडानाशिका सफलकामा अवन्ध्यमनोरथा निदेशः आज्ञा तस्मिन् रतास्तत्पराः कामादिनिर्जराणा वध्वो रत्यादयो यस्याः सा । हरस्य शिवस्य भामा स्त्री नुतः भामः क्रोधः असुरवधकालोत्पन्नो यस्याः सा अत एव जपासदृशा भा कान्तिर्यस्या अरुणेत्यर्थः माननीयं पूजनीय चरित यस्याः सा ईदृशी सा प्रसिद्धा देवी भवानीत्यर्थः । मा अवतु रक्षतु शेषं स्पष्टम् ॥ १५॥

माया तवेयमुरुगायाऽविवेकनिधिमायामिनी किमपि मा-
मायासयत्यकृतजायातनूजधनकायादिदोषकलनम् ॥
सा यातना तु निरपाया मता जगति हा यामि कं नु शरणं
मायानिवास परिपाया नवाम्बुधरदायाददेह भगवन् ॥ १६ ॥
हारं ददाति कुचभारं जिघृक्षसि च सारङ्गचञ्चलदृशः
सा रन्तुमिच्छति हि जारं निषेव्य तव का रञ्जनेह घटताम् ॥
स्मारं विहाय मदमारम्भरम्यमनुवारं भज श्रुतिगिरां
सारं महेशमविकारं जनुर्विलयपारं प्रयास्यसि सखे ॥ १७ ॥

---

मायेति । हे उरुगाय पुरुष्टुत आयामिनी विस्तारवती तवेय माया अविद्या अविवेकनिधि अतएवाकृत न कृतं जाया भार्या तनूजः पुत्रः धनं स्वर्णादि कायो देहः एषा दोषकलन दोषचिन्तनं येन त तथाविधं मा किमपि अनिर्वाच्य यथा स्यात्तथा आयासयति खिन्नं करोति । कीदृशोऽसावायास इत्याह । सा प्रसिद्धा यातना मरणकालजन्या तु निरपाया दुश्चिकित्स्या सर्वैर्मता । हा इति खेदे जगति मरणधर्मविशिष्टे कं नु शरणं यामि सर्वेपि मत्समा मरणधर्माणो न कोपि शरण्य इति भावः । अतो हे मायानिवास नवाम्बुधरो नूतनमेघः तद्दायादो बान्धवस्तत्सदृश इत्यर्थः । देहो यस्य हे भगवन् षड्गुणैश्वर्यसपन्न परिपायास्त्वं मा पाहीति भावः ॥ १६ ॥

हारमिति । हे सखे त्व सारङ्गचञ्चलदृशः कुरङ्गाक्ष्याः कुचभारं जिघृक्षसि ग्रहीतुमिच्छसि । अतएव तस्यै हार मुक्ताहार ददासि सा त्वद्दत्तमुक्ताहारविलसत्कुचकुम्भा जारं निषेव्य अत्यन्त प्रसाद्य रन्तुमिच्छति।हि इति निश्चये मद्वाक्ये मा सशयं कुर्वित्यर्थः। इह ईदृशे कपटव्यवहारे तव का रञ्जना घटता नैवेत्यर्थः । तर्हि किं करोमीति चेदेवं कुर्याः आरम्भरम्य प्रारम्भकाले रमणीयं परिणामे त्वतीव गर्ह्यमित्यर्थः । स्मारं स्मरसम्बन्धिनं मदं विहाय श्रुतिगिरा वेदवाक्यानां सारं अविकारं विकृतिरहितं कालत्रयाबाध्यमित्यर्थ. । महेशमनुवारं भज । किं तेन स्यादिति चेच्छृणु जनुर्विलययोर्जन्ममरणयोः पारं मोक्षं प्रयास्यसि गमिष्यति १७

नीलाऽलकानयनलीलाविमोहमयकीलालराशिजठरे
वेलातिलङ्घमनुवेलावमज्जिरिह ते लाघवाय नहि किम् ॥
को लाभ एष इति कोलायितो जयसि हालासमस्थितवयः
कालाऽहितं शमितहालाहलं सततमालानयाऽऽत्ममनसा॥१८॥
दावाऽनलार्चिरिव तावानयं तपति हा वाम्यकृत् कलिरहो
को वाऽपरस्त्वदिह भो वासुदेव मम यो वारयेत तमिमम् ॥
सेवाविधानभृशहेवाकसिद्धमुनिदेवाऽधुना चरणयो–
र्भावाऽऽनताय शिशुभावाऽऽश्रिताय वितराऽऽवासतां निजमुदाम्॥

---

नीलालकेति।नीलालकाया नीलकुन्तलाया नयनलीला कटाक्षविसर्पणं स एव मोहस्तन्मयो यः कीलालराशिः समुद्रः संभोगशृङ्गाररसस्तस्य जठरे मध्ये वेलातिलङ्घं अतिकालं अनुवेलं वारंवार अवमज्जिः प्रतिक्षणमवमज्जनं ते तव लाघवाय लघुत्वाय नहि किं अपि तु सर्वथैव लघुत्वजनिका स्यात् क एष लाभो न कोपीत्यर्थः। अमुमेव लाभं मन्यसे चेत्तत्राह हे हालासमस्थितवयः हालासमं मदिरासमं स्थितं वयस्तारुण्यरूप यस्य यथा हालामादयति ज्ञानावरणं च करोति तथा तारुण्यमपि कोलायितः सूकरवदाचरितो जयसि नृपशुरूपेणोत्कर्षमावहसीति भावः।तर्ह्येव कुर्वित्याह शमितं हालाहलं विषं येन तं कालस्य मृत्यो रहितं द्वेष्टारं मृत्युंजयमितियावत्। सततं आत्ममनसा आलानय बधान सेवनेन मृत्युंजय वशीकुर्वित्यर्थः ॥ १८ ॥

दावानलेति। तावान् तावत्परिमाणः वाम्यं कौटिल्यं करोतीति वाम्यकृत् अयं कलिः दावानलार्चिरिव दावाग्निज्वालेव तपति संतापयति।हा इतिखेदे अहो इत्याश्चर्ये।भो वासुदेव इहामुष्मिन् लोके त्वदपर. त्वत्तोऽन्यस्तमिम मम कलिं को वारयेत न कोपीत्यर्थः त्वया तु नन्दव्रजे वत्सा गोपाश्च दावानलाद्रक्षिता इति श्रीमद्भागवते प्रसिद्धमेव तस्माद् सेवाविधाने सेवाकरणे भृशं हेवाकाः स्पर्धायुक्ता एवंभूताः सिद्धाः नारदादयो देवयोनिविशेषा वा मुनय. कपिलादयः देवा इन्द्रादयः यस्मिंस्तथाभूत हे भगवन् चरणयोर्भवत्पदयोर्भावेन शुद्धान्तःकरणेन आनताय

आशाभरेण निखिलाऽऽशासुधावनमथाऽऽशातकुम्भगिरिवा
क्लेशाऽऽवहं विविधदेशाऽटनं द्रविणलेशाय नाऽपि ववृते ॥
आशाऽतिदामवितुमाशास्वपाणिधृतपाशामनेकजगता-
मीशामुपासितगिरीशामिहाऽङ्गदिगधीशाऽर्चिताऽङ्घ्रिनलिनाम् ॥
एषा जरा शिरसि वेषाऽन्यभावकृदशेषाऽऽमयैकवसति-
स्तोषाय सौम्य नहि दोषाऽऽलयाभृशमपोषाऽऽस्पदीकृतगुणा ॥
शेषाऽऽयुषः कुरु विशेषाऽर्हमेतदिह शेषाऽहिक्लृप्तधनुषो
रोषाद्यपास्य तनुशोषावहं कलय योषामनङ्गजयिनः ॥ २१ ॥

---

नम्राय शिशुभावाश्रिताय मह्यमिति शेषः निजमुदा स्वस्वरूपानन्दाना आवा सता वितर देहीत्यर्थः ॥ १९ ॥

आशाभरेणेति । आशाभरेण द्रव्यलिप्साभरेण आशातकुम्भगिरि स्वर्ण- पर्वतमभिव्याप्य मेरुगिरिपर्यन्तमित्यर्थ. निखिलाशासु सर्वासु दिक्षु धावन मटनं तथा च विविधदेशानामटनं क्लेशावहं क्लेशमात्रफलकं जातमिति शेषः । तद्भ्रमणं द्रविणलेशायापि न ववृते नाभूत् । अतो हेतोः हे अङ्ग इह लोके आशातिदा आशामतिक्रम्य या ददाति भगवती तामाशास्व उपास्वेतिभावः । कुतः अवितुं दारिद्र्यादिदुःखात्त्रातुं आत्मानं रक्षितुमित्यर्थः अस्त्यन्यत् स्पष्टम् ॥ २० ॥

एषेति । हे सौम्यवेषान्यभावकृत् वेषस्य कृष्णकेशत्वादिरूपस्य अन्यभावो वैपरीत्यं वलीपलितत्वादिरूपं करोतीति तथा । चपरं, अशेषामयैकवसतिः सर्वरोगाणा मुख्यस्थानम, अतएव दोषालया अनेकदोषस्थानभूता तथा भृश- मधिक अपोषास्पदीकृताः गुणाः विद्याभ्यासादयो यया एवं भूता एषा जरा शिरसि आगता तोषाय नहि संतोष जनयितुं न प्रभवतीत्यर्थः । तस्मात् तनुशोषावहं शरीरशोषकारिरोषाद्यपास्य क्रोधादीन् हित्वा शेषायुषः अवशि- ष्टायुषः विशेषार्हं विशेषयोग्यमेतत्कुरु । किंतदित्याह । इहास्मिन् संसारे शेषा- हिक्लृप्तधनुषः शेषाख्यपन्नगेन क्लृप्तं धनुर्येन तथाभूतस्यानङ्गजयिनः काम- जेतुः शिवस्येत्यर्थः योषा स्त्रिय भवानी कलय आश्रयेत्यर्थः ॥ २१ ॥

संसारधन्वभुवि किं सारमामृशसि शंसाऽधुना शुभमते
त्वं साधु संतनु हितं साहसेन तु नृशंसाऽऽदृतेन किमहो ॥
हंसाऽऽशयस्थमतिहंसात्मभासमथ तं सामभिः परिगृणन्
कंसाऽरिवन्द्यमवतंसायितेन्दुमिह संसाधयार्थमखिलम् ॥ २२ ॥
गेहाऽऽत्मजद्रविणदेहादिकं जनितमोहाऽनुबन्धमवितुं
भो हानिरापि कियतीहाऽपि सुस्थितिमतीहा न ते निजहिते ॥
वाहायितोक्षभवदाहाऽपहं सलिलवाहाऽभकण्ठसुषमं
वाहालसन्मृगमनाहार्यसौख्यकरमाहात्म्यमाभज महः ॥ २३ ॥

---

संसारेति । संसारधन्वभुवि तापादिजनकत्वात् मरुभूमितुल्ये संसारे किं सार आमृशसि जानासि न किमपीत्यर्थः । जानासि चेदिदं तावदत्र सारमिति शंस कथय । हे शुभमते अधुना त्वं साधु हितं संतनु । आत्महितं कुर्विति भावः । नृशंसादृतेन घातुकपुरुषैः स्वीकृतेन साहसेन परधनपरस्त्रीहरणप्राणिवधादिकेन अहो कष्टं किं स्यात् न किंचित्कल्याणं स्यादित्यर्थः तस्मात् हंसाशयस्थं योगिहृदयस्थं अतिहंसात्मभासं सूर्यमतिक्रान्ता आत्मभाः स्वकान्तिर्यस्य तं सूर्यातिशायितेजसमित्यर्थः कंसारिवन्द्यं विष्णुपूज्यं अवतंसायितेन्दुं चन्द्रशेखरं भगवन्तं सामभिः प्रेमगीतैः सामवेदस्थैर्मन्त्रैर्वा गृणन् कीर्तयन् अखिलमर्थं चतुर्विधपुरुषार्थरूपं संसाधय सम्पादय ॥ २२ ॥

गेहेति । जनितः उत्पादितः मोहानुबन्धः अज्ञानसम्बन्धो येन तादृशं गेहात्मजद्रविणदेहादिकं गेहं गृहं, आत्मजः पुत्रः, द्रविणं द्रव्य, तद्देहादिकं अवितुं रक्षितुं भोः इहापि अस्मिन् लोके कियती किंपरिमाणा हानिः अनेक दुःखसहनरूपा स्वार्थोन्मूलनरूपा च आपि प्राप्ता । तथापि ते तव निजहिते स्वहिते सुस्थितिमती यातायातनिवृत्तिविषयिणी ईहा इच्छा न भवति इति शेषः । स्वहितं तु ईश्वरभजनं विना न भविष्यतीत्यतस्तदेव कुर्वित्याह । वाहायितोक्षं वाहनीकृतबलीवर्दं भवदाहापहं संसारतापनाशकं तथा सलिलवाहो मेघस्तस्येवाभा कान्तिर्यस्यास्तथाविधा कण्ठसुषमा कण्ठशोभा यस्य तत् वाहाया हस्ते लसन् मृगो यस्य तत् अनाहार्यं त्रिकालाबाध्यं मोक्षाख्यं सुखं तस्य करं उत्पादकं माहात्म्यं यस्य तथाभूतं नीलकण्ठाख्यं महस्तेजो भज ॥ २३ ॥

वालीयुतश्रवणपालीयुगा ललितचूलीविराजिबकुला
केलीगतानुगमरालीकुला मधुरमालीभिरादृतकथा ॥
नालीकदृक्कुसुमनालीकपाणिरिह कालीयशासिसहजा
तालीदलाभतनुमाली सदा भवतु काली शुभाय मम सा ॥२४॥
दक्षाऽध्वरप्रशमदक्षाऽऽग्रहं विबुधपक्षाऽभिपालनपरं
लक्षाऽमृतद्युतिवलक्षात्मकं हतविपक्षाऽऽत्तविस्मयकथम् ॥
उक्षाऽधिरोहिहतलक्षाऽसुरप्रकरमक्षामताश्रयदय-
त्र्यक्षाऽऽह्वयं प्रणतरक्षामणिं प्रणयियक्षाऽधिपं स्मर महः ॥२५

---

वालीति । सा काली मम शुभाय भवतु । कीदृशी सा वालीयुतश्रवणपालीयुगा वाली केशगुच्छ अथ वा ववयोः सावर्ण्यात् व.ली कर्णभूषणविशेष. तया युत श्रवणपालीयुगं यस्याः सा. । पुन. कीदृशी ललिता रम्या या चूली कर्णमूल तस्या विराजमान बकुलपुष्पं यस्याः सा । तथा केल्या क्रीडया यत् गतं गमनं तदनुगं तदनुगामि मरालीकुल हंसीसघो यस्याः । यद्व तिसदृशगतिशाली हंसीसमूहः सेत्यर्थः । तथा आलीभि सखीभिर्मधुर यथा स्यात्तथा आदृता कथा यस्याः अलीका अनृता न अलीका नालीका सफलेत्यर्थः तादृशी दृक् यस्याः सा अमोघदर्शनेत्यर्थः । कुसुमसहितं नालीकं इतरपुष्पसहित कमलं पाणौ यस्याः । तथा कालीयः यमुनाहृदस्थः कृष्णसर्पस्तं शास्तीति कालीयशासी कृष्णस्तत्सहजा तद्भगिनी यशोदोदरे दुर्गाप्रादुर्भावस्य भागवते प्रतिद्धत्वात् तथा तालीदलस्येवाभा यस्या एतादृशी या तनुस्तया मालते सा श्यामवर्णेत्यर्थ. ॥ २४ ॥

दक्षेति । हे वत्स त्र्यक्षाऽऽह्वयं त्रिलोचनाख्य महः शिवाख्यं तेजः स्मर चिंतय । कीदृश तत् दक्षयज्ञध्वसने दक्षः पटुः आग्रहो यस्य. । पुनः कीदृशं विबुधाना देवाना विदुषा वा पक्षस्तत्पालनपरं देवपक्षपातीत्यर्थः । पुनः कीदृश. लक्षसंख्याका ये अमृतद्युतयश्चन्द्रास्तेषामिव वलक्षो धवल आत्मा देहो यस्य । पुनः कीदृक् हताः पराजिता ये विपक्षा शत्रवस्त्रिपुरादयस्तैः आत्तः प्राप्त विस्मय. आश्चर्य यस्या तथाविधा कथा यस्य । पुन. कीदृक् [illegible]गधिरोहि-

रामनाम्नः स्वपौत्रस्य कामनापूरणोत्सुकः ॥
अश्वधाटीं जगन्नाथो विश्वहृद्यामरीरचत् ॥ २६ ॥

इति पण्डितेन्द्रजगन्नाथविरचितमश्वधाटीकाव्यं संपूर्णम् ॥

## अथ नवरसाः ।

### तत्रादौ शृङ्गारः ।

#### अथ बालायाः सामान्यतः स्तुतिः ।

श्रीः ॥ दृशा दग्धं मनसिजं जीवयन्ति[1] दृशैव याः ॥
विरूपाक्षस्य[3] जयिनीस्ताः स्तुवे वामलोचनाः ॥ १ ॥

एकान्तसुन्दरविधानजडः क्व वेधा[4]ः
सर्वाङ्गकान्तिरुचिरं क्व च रूपमस्याः ॥
मन्ये महेश्वरभयान्मकरध्वजेन
प्राणार्थिना युवतिरूप[5]मिदं गृहीतम् ॥ २ ॥

अमृतस्येव कुण्डानि रत्नानामिव राशयः ॥
रतेरिव निधानानि योषितः केन निर्मिताः ॥ ३ ॥

---

नन्दिकेश्वराधिरूढं । पुनः कीदृक् हतो लक्षसंख्याकानामसुराणां प्रकरः समूहो येन । पुनः कीदृक् अक्षामतां पुष्टिं आश्रयतीत्यक्षामताश्रया विपुलेति यावत् एतादृशी दया यस्य । पुनः कीदृक् प्रणतानां नम्राणां भक्तानां रक्षामणिं पालकमित्यर्थः । पुनः कीदृक् प्रणयी प्रणयसंपन्नो मित्रमिति यावत् एवंभूतो यक्षाधिपः कुबेरो यस्य तत्तादृशम् ॥ २५ ॥

रामेति । रमयतीति रामः विद्याविनयादिगुणैः सर्वेषां मनोरम इत्यन्वर्थं रामइतिनाम यस्य तस्य स्वपुत्रपुत्रस्य कामनापूरणोत्सुको मनोरथपूरणोत्कण्ठितो जगन्नाथाभिधः पण्डितो विश्वहृद्यां पण्डितरञ्जनीं अश्वधाटीं अरीरचत् रचयामास ॥ २६ ॥

गुणरत्नर्षिभूयुक्तेप्रजापतिसमाह्वये ॥ शाकेविमासे भाद्राख्ये गीष्पतौ प्रतिपत्तिथौ । अश्वधाट्या दर्पणाख्या व्याख्या कृष्णेन निर्मिता ॥

१ कामं २ उत्पादयन्ति. ३ शिवस्य. ४ ब्रह्मा. ५ स्त्रीरूपं.

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाऽऽकरः ॥
वेदाऽभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४ ॥
न देवकन्यका नाऽपि गन्धर्वकुलसंभवा ॥
तथाऽप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ ५ ॥
भ्रूचातुर्याऽऽकुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जिताश्चैव हासाः
लीलामन्दं प्रस्थितं च स्थितं च स्त्रीणामेतद्भूषणं चाऽऽयुधं च॥६॥
अधरे मधुरा सरस्वती ननु कर्णे मणिकर्णिकाप्रवाहः ॥
शिरसि प्रतिभाति चारु वेणी कथमेणीनयना न तीर्थराजः॥७
बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं
श्रोणी तीर्थशिला च नेत्रशफरी धम्मिल्लशैवालकम् ॥
कान्तायास्तनचक्रवाकयुगलं कन्दर्पबाणाऽनलै-
र्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥ ८ ॥
स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः॥
वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः॥९
लीलावतीनां सहजा विलासास्त एव मूढस्य हृदि स्फुरन्ति ॥
रागो नलिन्यां हि निसर्गसिद्धस्तत्र भ्रमत्येव मुधा षडङ्घ्रिः॥१०
कुङ्कुमपङ्केनाऽङ्कितदेहा गौरपयोधरकम्पितहारा ॥
नूपुरहंसरणत्पदपद्मा कं न वशी कुरुते भुवि रामा ॥ ११ ॥
द्रष्टव्येषु किमुत्तमं मृगदृशां प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः ॥

---

१ उत्पत्तिविधाने. २ वृद्ध. ३ हरिणलोचना. ४ विसम् ५ मत्सी. ६ भयेन ७ प्रणयप्रकोपेन. ८ स्वभावसिद्धः ९ व्यर्थम् १० भ्रमरः

किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तत्तनु-
र्ध्येयं किं नवयौवनं सहृदयैः सर्वत्र तद्विभ्रमः ॥ १२ ॥
इयं सुस्तनी मस्तकन्यस्तकुम्भा कुसुम्भाऽरुणं चारु वासोवसाना ॥
समस्तस्य लोकस्य चेतःप्रवृत्तिं गृहीत्वा घटे न्यस्य यातीव भाति १३
नेदं मुखं मृगवियुक्तशशाङ्कबिम्बं नेमौ स्तनावमृतपूरितहेमकुम्भौ ॥
नैवालकावलिरियं मदनास्त्रशाला नैवेदमक्षियुगलं निगडं हि यूनां ॥
वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनां जिष्णुः कचानां चयः ॥
वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥१५॥
गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ॥
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १६ ॥
मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ॥
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ १७ ॥
नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीस्ताः ॥
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ १८ ॥
सौधे स्थिता सरभसं निजमुत्तरीयं धर्तुं पुनस्तनतटात्पतितं प्रवृत्ता ॥
वाचं निशम्य नयनं नयनं ममेति किंचित्तदैवमकरोत्स्मितमायताक्षी
इदं परमसुन्दरं तनुपुरं कुरङ्गीदृशां
निवार्य खलु शैशवं स्वयमनेन नीतं बलात् ॥

---

१ वस्त्रम् २ मनोवृत्तिम् ३ शृङ्खला 'बेडी' ति लोके ४ तुच्छं कुर्वन् ५ जयशीलः ६ मनोहरम्.

तदागमनशङ्कया मकरकेतुना किं कृतं
पयोधरधराधरौ त्रिवलिवाहिनीदुस्तरौ ॥ २२ ॥
इयं सुरतरङ्गिणी[1] न पुनरत्र नौसंगमो
भवेत्तराणिमज्जनं पथिक नैव पान्थाऽऽगमः ॥
निधाय हृदये सदा विपुलचारुकुम्भद्वयं
सखे घनघनाऽऽगमे धनरसस्य[2] पारं व्रज ॥ २३ ॥
मीनवती नयनाभ्यां चरणाभ्यां प्रफुल्लकमलवती ॥
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी ॥ २४ ॥
अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं
संलापो[3] यदि धार्यतां परभृतैर्वाचंयमत्वव्रतम् ॥
अङ्गानामकठोरता यदि दृषत्प्रायेव[4] सा मालती
कान्तिश्चेत्कमला किमत्र बहुना काषायमालम्ब्यताम्[5]॥२५
अपाङ्गतरले[6] दृशौ तरलवक्रवर्णा गिरो
विलासभरमन्थरा[7] गतिरतीव कान्तं मुखम् ॥
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ २६ ॥
निर्मित्सुः[8] सुदतीमजो[9] विरचिते वक्त्रे शशिभ्रान्तितः
कोशीभूतनिजाऽम्बुजासनमधिष्ठातुं[10] न शक्तो विधिः ॥
मध्यं विस्मृतवान् कुचौ च कठिनौ पीनौ नितम्बौ कचान्
वक्रान् निर्मितवान् मतिः स्फुरति हि स्वस्थे नृणां चेतसि॥२७॥
अधरे नववीटिकाऽनुरागो नयने कज्जलमुज्ज्वलं[11] दुकूलम् ॥
इदमाभरणं नितम्बिनीनामितरद्भूषणमङ्गदूषणाय ॥ २८ ॥

---

१ सुराणा तरङ्गिणी नदीत्यर्थः २ उदकस्य ३ मिथोभाषणम् ४ पाषाणरूपा ५ काषायवस्त्रम् ६ नेत्रप्रान्तचञ्चले ७ विलासभरेण मन्थरा मन्दा गतिः ८ निर्मातुमिच्छुः ९ ब्रह्मा. १० मुकुली भूतस्वकीयकमलासनम् ११ स्वच्छम्.

आ[1]स्यं सहास्यं नयनं सलास्यं सिन्दूरबिन्दूदयशोभिभालम् ॥
नवा च वेणीहरिणी दृशश्चेदन्यैरगण्यैरपि भूषणैः किम्॥२९॥

## अथ बालावयववर्णनम् ।

### केशवर्णनम् ।

चि[2]कुरप्रकरा जयन्ति ते विदुषी मूर्धनि यान् बिभर्ति सा ॥
पशुनाऽप्यपुरस्कृ[3]तेन तत्तुलनामिच्छति चामरेण कः ॥ १ ॥
एणीदृशः पाणिपुटे निरुद्धा वेणी विरेजे शयनोत्थितायाः ॥
स[4]रोजकोशादिव निष्पतन्ती श्रे[5]णी घनीभूय मधु[6]व्रतानाम्॥२॥
अस्या मनोहराऽऽकारकबरीभारनिर्जिताः ॥
लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥ ३ ॥
मलिना अपि संय[7]मनात्कुटिला अपि सु[8]मनसां समागमतः ॥
बा[9]ला अपि मु[10]क्तानामनुषङ्गान्निर्ज[11]रत्वमुपयान्ति ॥ ४ ॥
स्तनाऽऽभोगे पतन्भाति कपोलात्कुटिलोऽलकः ॥
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥ ५ ॥

### [12]सीमन्तरचनम् ।

जानुस्थापितदर्पणं परिणमद्ग्रीवं समुद्यद्भुजं
न्यञ्चत्कूर्परमुन्नमद्भुजलसत्कक्षान्तरोहत्कुचम् ॥
पाणिभ्यां प्रविभज्य केशनिचयं सीमन्तकर्मोद्यता
चेतः कस्य वशीकरोति न बलाद्बाला विलोलेक्षणा ॥ १ ॥

---

१ हासयुक्तं मुखम् २ केशकलापाः ३ पश्चात्कृतेन. ४ कमलकुड्मलात् ५ पङ्क्तिः ६ भ्रमराणाम् ७ बन्धनात् इन्द्रियनिग्रहाच्च ८ पुष्पाणां देवानां च ९ केशाः अर्भकाश्च. १० मौक्तिकानां पक्षे जीवन्मुक्तानां. ११ जरार हितत्वं पक्षे देवत्वम् १२ केशवेशः 'भाङ्ग' इतिलोके.

केशान् वामकराऽवलम्बितशिखान् भूयोरणत्कङ्कणं
व्याधूयाऽथकानिष्ठिकानखमुखेनाऽऽकुञ्चिताऽन्याङ्गुलि ॥
सीमन्तं विरचय्य तस्य करभेणोन्मृज्य पार्श्वद्वय
तान्पश्चाद्युगपत्प्रणीयकरयोर्युग्मेन बध्नात्यसौ ॥ २ ॥
आभुग्नाऽङ्गुलिपल्लवौ कचभरे व्यापारयन्ती करौ
बन्धोत्कर्षनिबद्धमानसतया शून्यां दधाना दशाम् ॥
बाहूत्क्षेपसमुन्नते कुचतटे पर्यस्तचोलांऽशुका
ह्रीसंकोचितबाहुमूलसुभगं बध्नाति जूटीं वधूः ॥ ३ ॥
यथायथा यो वलते भुजोऽस्या उदञ्चितः संयमने कचानाम् ॥
तथातथा वल्गति काममेकः स एव वक्षोरुह उत्पलाक्ष्याः॥४॥
स्नेहसंवर्धितान् बालान् दृढं बध्नाति सुन्दरी ॥
करुणा हरिणाक्षीणां कुतः कठिनचेतसाम् ॥ ५ ॥
संप्राप्तचिकुरभावः कचनिचयो वा युवा करे लग्नः ॥
स्त्रीभिर्दृढं निबध्यो नो चेत्परकलत्रमनुसरति ॥ ६ ॥

## अभ्यङ्गारम्भः ।

वक्षोजौ निबिडं निरुध्य सिचये नाऽऽकुञ्च्य मध्यं शनैः
कृत्वा चम्पकतैलसेकमबला संपीड्य मन्दं शिरः ॥
पाणिभ्यां चलकङ्कणोद्यतझणत्कारोत्तराभ्यां करो-
त्यभ्यङ्गं परिपश्यतः सकुतुकं दोरन्तरं प्रेयसः ॥ १ ॥
जानुभ्यामुपविश्य पार्ष्णिनिहितश्रोणीभरा प्रोन्नम-
द्दोर्वल्ली नमदुन्नमत्कुचतटी दीव्यन्नखाऽङ्कावलिः ॥
पाणिभ्यामवधूय कङ्कणझणत्काराऽवतारोत्तरं
बाला नह्यति किं निजालकभरं किंवा मदीयं मनः ॥ २ ॥
अश्रान्तं दृढयन्त्रणेन कुचयोरत्यक्तकाठिन्ययो-
राबद्धस्फुटमण्डलोन्नतिमितश्चोलं विमुच्योन्मः

१ करपृष्ठेन २ कलत्रं श्रोणिभार्ययोः ३ वस्त्राञ्चलेन ४ बध्नाति [illegible]

नीवीविच्छुरितं[1] विधाय तमिमं वामस्तनालम्बिनीं
वेणीं पाणिनखाऽञ्चलैः शिथिलयत्याक्रम्य पीठं पदा ॥ ३ ॥
आवर्त्य कण्ठं सिचयेन सम्यगावध्य वक्षोरुहकुम्भयुग्मम् ॥
काऽसौ कराऽऽलम्बित तैलपात्रा मन्दं समासीदति सुन्दरीं ताम् ४
अस्याः पीठोपविष्टाया अभ्यङ्गं वितनोत्यसौ ॥
ललच्छ्रोणि चलद्वेणि नटद्गुरुपयोधरम् ॥ ५ ॥

## कुङ्कुमादितिलकः ।

बाले ललामलेखेयं भाले भल्लीव[2] राजते ॥
चलताचापमाकृष्य न जाने कं हनिष्यति ॥ १ ॥
विराजतेऽस्यास्तिलकोऽयमञ्चितो विकुञ्चितभ्रूलतिकाद्वयान्तरे ॥
विजित्य लोकद्वितयं दिवं प्रति स्मरेण बाणो धनुषीव योजितः॥२॥
कस्तूरीतिलकं[3] बाले भाले माकुरुमाकुरु ॥
अद्य साम्यं भजामीति जृम्भते शशलाञ्छनः ॥ ३ ॥
श्यामलेना[4]ऽङ्कितं भाले बाले केनाऽपि लक्ष्मणा[5] ॥
मुखं तवाऽन्तरासुप्तभृङ्गफुल्लाम्बु जायते ॥ ४ ॥
लोचनफुल्लाम्भोजद्वयलोभाऽऽन्दोलितैकमनाः ॥
कस्तुरीतिलकमिषादयमलिकेऽलिः समुल्लसति ॥ ५ ॥

## भ्रुवौ ।

स्मरकल्पद्रुमो बाले तव भाले द्विपत्रकः ॥
पत्रयोरनयोश्छाया भ्रुवोर्व्याजादुदञ्चति ॥ १ ॥

---

१ वसनग्रन्थिसंनिहितं कृत्वा २ 'बरची' ति लोके ३ निष्कलङ्कमुखस्य कस्तुरीदिलकेन लाञ्छनवत्त्वाचन्द्रः साम्यं भजेदिति भावः ४ श्यामवर्णेन ५ चिन्हेन 'गोदणें' इति लोके

## नेत्रे ।

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ॥
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ १ ॥
लोचने हरिणगर्वमोचने मा विदूषय नताङ्गि कज्जलैः ॥
सायकः सपदि जीवहारकः किं पुनर्हि [1]गरलेन लेपितः ॥२॥
कामिनीनयनकज्जलपङ्काद्दुत्थितो मदनमत्तवराहः ॥
कामिमानसवनान्तरचारी मूलमुत्खनति मानलतायाः ॥ ३ ॥
निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् ॥
अन्योन्याऽऽलोकनाऽऽनन्दविरहादिव चञ्चलम् ॥ ४ ॥
रामाविलोलनयने किमुमीनबाणौ नीलोत्पले किमथवा किमु खञ्जरीटौ
किंवा जगत्त्रयजयाय कृतिर्भ जाने कन्दर्पभूपरचितानवकार्मणस्य ॥५

## कटाक्षः ।

यत्र यत्र वलते शनैःशनैः सुभ्रुवो नयनकोणविभ्रमः ॥
तत्रतत्र शतपत्रधोरणी तोरणीभवति पुष्पधन्वनः ॥ १ ॥
यासां कटाक्षविशिखैः स्मरचोरेण ताडिताः ॥
छन्नचैतन्यसर्वस्वा मुग्धा मुह्यन्ति कामुकाः ॥ २ ॥
सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ॥
भ्रूचापाऽऽकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते
यावल्लीलावतीनां हृदि न [2]धृतिमुषो दृष्टिबाणाः पतन्ति ॥३॥
तावदेव [3]कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ॥
यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनाऽञ्चलैः ॥४॥

---

१ विषेण २ धैर्यहारिणः ३ पण्डितानाम्

प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् ॥
निपतन्ति नेत्रविशिखा यावन्नेन्दीवराक्षीणाम् ॥ ५ ॥
हत्वा लोचनविशिखैर्गत्वा कतिचित्पदानि पद्माक्षी ॥
जीवति युवा न वा किं भूयोभूयो विलोकयति ॥ ६ ॥
यान्ती गुरुजनैः सार्धं स्मयमानमुखाम्बुजा ॥
तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पत्राकरोज्जगत् ॥ ७ ॥
क्वचित्कृष्णाऽर्जुनगुणा क्वचित्कर्णान्तगामिनी ॥
अपाङ्गश्रीस्तवाऽऽभाति सुभ्रूर्भारतगीरिव ॥ ८ ॥
रेरे घरट मा रोदीः कंकं न भ्रामयन्त्यमूः ॥
कटाक्षवीक्षणादेव कराऽऽकृष्टस्य का कथा ॥ ९ ॥

## नासा ।

पुराणबाणत्यागाय नूतनाऽस्त्रकुतूहलात् ॥
तन्नासा भाति कामेन तूणीवाऽधोमुखीकृता ॥ १ ॥

## नासामौक्तिकम् ।

नासामौक्तिकमबले किमधरबिम्बेन विद्रुमं कुरुषे ॥
दृष्ट्वा गुञ्जाबीजं शिवशिव भूयस्तदेव हसितेन ॥ १ ॥
सुधामयोऽपि क्षयरोगशान्त्यै नासाऽग्रमुक्ताफलकच्छलेन ॥
अनङ्गसंजीवनदृष्टशक्ति मुखाऽमृतं ते पिबतीव चन्द्रः॥ २ ॥

## कर्णौ ।

सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गाऽऽसङ्गभीतया ॥
सूचितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा ॥ १ ॥

---

१ बाणैः २ व्यथयामास 'सपत्रनिष्पत्रादतिव्यथने.' ३ 'जातें' इ०लो.

## कपोलौ ।

कपोलपालीं तव तन्वि मन्ये लावण्यधन्ये दिशमुत्तराख्याम् ॥
विभाति यस्यां ललिताऽलकायां मनोहरा वैश्रवणस्य लक्ष्मीः॥१

द्विधा विधाय शीतांशुं कपोलौ कृतवान् विधिः ॥
तन्व्यास्तद्रसनिष्पन्दबिन्दवो रदनावलिः ॥ २ ॥

## अधरः ।

तवैष विद्रुमच्छायो मरुमार्ग इवाऽधरः ॥
करोति कस्य नो बाले पिपासाऽऽकुलितं मनः ॥ १ ॥

त्वं पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को
माधुर्यं तव विश्वतोऽपि विदितं माध्वीक माध्वीकता ॥
एतत्किं तु मनागरुन्तुदमिव ब्रूमो न चेत्कुप्यसि
यः कान्ताधरपल्लवे मधुरिमा नाऽन्यत्र कुत्राऽपि सः ॥ २ ॥

सर्वेषामेव रत्नानां व्रणेऽर्घः परिहीयते ॥
दयिताधररत्नं तु व्रणितं यात्यनर्घताम् ॥ ३ ॥

## मुखम् ।

यदमरशतैः सिन्धोरन्तः कथं चिदुपाऽर्जितं
सकलमपि तद्धात्रा कान्तामुखे विनिवेशितम् ॥
सुरसुमनसः श्वासाऽऽमोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने ॥ १ ॥

---

१ अलकाः केशाः पक्षे कुबेरनगरी. २ वैश्रवणस्य कुबेरस्य पक्षे वै इति पदच्छेदः श्रवणस्य कर्णस्य. ३ प्रवालकान्तिः पक्षे विगता द्रुमच्छाया यस्मात् ४ मरुदेशस्थमार्गः ‘ मारवाड ’ इति लो० ५ मर्मस्पृक्. ६ छिद्रे. जाते सता-त्यध्याहार्यम्. ७ मूल्यम्. ८ संजातव्रणम्. ९ अमूल्यताम्.

तस्या मुखस्याऽतिमनोहरस्य कर्तुं न शक्तः सदृशं[1] प्रियायाः ॥
अद्याऽपि शीतद्युतिरात्मबिम्बं निर्मायनिर्माय पुनर्भिनत्ति ॥२॥

अनेन रम्भोरु तवाऽऽननेन पीयूषभानोस्तुलया धृतस्य ॥
ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः॥३॥

धिक् तस्य मन्दमनसः कुकवेः कवित्वं
यः स्त्रीमुखं तुहिनबिम्बसमं करोति ॥
भ्रूभङ्गविभ्रमकटाक्षनिरीक्षणानि
कोपप्रसादहसितानि कुतः शशाङ्के ॥ ४ ॥

प्रविश झटिति गेहं मा बहिस्तिष्ठ कान्ते
ग्रहणसमयवेला वर्तते शीतरश्मेः ॥
तव मुखमकलङ्कं वीक्ष्य राहुः स नूनं
ग्रसति तव मुखेन्दुं चन्द्रबिम्बं विहाय ॥ ५ ॥

वासोज्ज्वलाऽऽच्छादितमर्धभागं सौधस्थराधावदनं समीक्ष्य ॥
सर्वेऽपि वृन्दावनवासिनस्ते चक्रुश्चतुर्थीव्रतपारणानि ॥ ६ ॥

विश्वामित्रपराशरप्रभृतयो वाताऽम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ॥
शाल्यन्नं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरम् ॥७॥

अबले सलिले तपस्यता मुखभावो[2] गमितो न पङ्कजेन ॥
कथमादिमवर्णता[3]ऽन्त्यजस्य द्विजराजेन कृतोरुनिग्रहस्य[4]॥८॥

---

१ तुल्यम्. २ मुखत्वम् मुखसाम्यमित्यर्थः ३ आदौ मवर्णो यस्य तस्य भावस्तत्ता ताम् पकारादेः पङ्कजस्य मकारादित्वं कथमित्यर्थः पक्षे ब्राह्मणत्वम् ४ अन्त्ये जकारो यस्य एतादृशस्य पङ्कजस्य पक्षे अतिशूद्रस्य ५ चन्द्रेण ब्राह्मणश्रेष्ठेन. ६ कृतः उरुः महान् निग्रहो दण्डो यस्य.

चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् ॥
तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥ ९ ॥
ननु नीलाञ्चलसंवृतमाननमाभाति हरिणनयनायाः ॥
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाऽङ्कः ॥ १० ॥
ऑसायं सलिलभरे सवितारमुपास्य सादरं तपसा ॥
अधुनाऽब्जेन मनाक् तव मानिनि तुलना मुखस्याऽऽप्ता ॥११॥
विलसत्याननं तस्या नासाऽग्रस्थितमौक्तिकम् ॥
आलक्षितबुधाऽऽश्लेषं राकेन्दोरिव मण्डलम् ॥ १२ ॥
सुविरलमौक्तिकतारे धवलांऽशुकचन्द्रिकाचमत्कारे ॥
वदनपरिपूर्णचन्द्रे सुन्दरि राकाऽसि नाऽत्र संदेहः ॥१३ ॥

## कण्ठः ।

मा॑तङ्गकुम्भसंसर्गजातपातकशङ्कया ॥
स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिगले जले ॥ १ ॥

## बाहू ।

दयिता बाहुपाशस्य कुतोऽयमपरो विधिः ॥
जीवयत्यर्पितः कण्ठे मारयत्य॒पवर्जितः ॥ १ ॥
शब्दवद्भिरलंकारैरुपेतमतिकोमलम् ॥
सुवृत्तं काव्यवद्रेजे तस्या बाहुलताद्वयम् ॥ २ ॥

## अङ्गुल्यः ।

सुदीर्घा रागशालिन्यो बहुपर्वमनोहराः ॥
तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥

---

१ सायंकालपयन्तम् २ अन्त्यजः पक्षे गजः ३ त्यक्तः

## स्तनौ ।

पुष्पेषोरभिषेकहेमकलशौ हारप्रभावाहिनी
चक्राह्वौ मदनोन्मदद्विपपतेः कुम्भौ रतेः कन्दुकौ ॥
कन्दौ बाहुमृणालिकायुगलयोर्लीलालतासत्फले
नव्यौ रत्नसमुद्गकौ वहति सा लावण्यपूर्णौ स्तनौ ॥ १ ॥

मृदङ्गि कठिनौ तन्वि पीनौ सुमुखि दुर्मुखौ ॥
अतएव बहिर्यातौ हृदयात्ते पयोधरौ ॥ २ ॥

स्वयंभूः शम्भुरम्भोजलोचने त्वत्पयोधरः ॥
नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥ ३ ॥

अविवेकि कुचद्वन्द्वं हन्तुं नाम जगत्त्रयम् ॥
श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥ ४ ॥

प्रायश्चित्तं न गृह्णीतस्तन्वङ्ग्याः पतितौ स्तनौ ॥
अत एव तयोः स्पर्शे लोकोऽयं शिथिलाऽऽदरः ॥ ५ ॥

दीपो वातभयान्नीतः कामिन्या वसनान्तरे ॥
दृष्ट्वा तु कुचसौन्दर्यं शिरः कम्पयते मुहुः ॥ ६ ॥

पयोधरघनीभावस्तावदम्बरमध्यगः ॥
आश्लेषोपगमस्तत्र यावन्नैव प्रवर्तते ॥ ७ ॥

बदराऽमलकाऽऽम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण ॥
अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्याः ॥ ८ ॥

जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ ॥
नीलाऽम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते किल कनकाऽचलेन सार्धम् ॥

पटविघटितमपि कुचतटमकपटमनसः कुरङ्गनयनायाः ॥
मणिभवमयूखपटली पटलीनतया न सम्यगालोचि ॥ १० ॥

---

१ चक्रवाकौ २ संपुटौ. ३ पापनिष्कृतिं पक्षे प्रायः बाहुल्येन चित्तं स्वान्तम् ४ पातकिनौ. पक्षे गलितौ ५ पयोधराणा मेघाना घनीभावः प्राचुर्यम् ६ आकाश मध्यवर्तिन्. ७ आश्लेषानक्षत्रस्योदयः पक्षे सुगमम्.

प्रतिपक्षो यदि वक्षोहरुपरिणाहः कुरङ्गनयनायाः ॥
आकाशवासतपसः श्रीफलविफलस्तवाऽऽयासः ॥ ११ ॥

दिवानिशं वारिणि कण्ठदघ्ने[1] दिवाकराऽऽराधनमाचरन्ती[2] ॥
वक्षोजताप्त्यै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा॥१२॥

कुचावस्याः कामद्विपकलभकुम्भाविति परे
वदन्त्यन्ये वक्षःसरसि कमले काञ्चनघटौ ॥
ममाऽयं सिद्धान्तः स्फुरति मदनेन त्रिजगतीं
विनिर्जित्य न्युब्जीकृतमिव निजं दुन्दुभियुगम् ॥ १३ ॥

## मध्यः ।

वयःप्रकर्षादुपचीयमान[3]स्तनद्वयस्योद्वहनश्रमेण ॥
अत्यन्तकार्श्यं वनजायताक्ष्या मध्यो जगामेति ममैष तर्कः॥१॥

स्फुटमसदवलग्नं[4] तन्वि निश्चिन्वते ते
तदनुपलभमानास्तर्कयन्तो ऽपि लोकाः ॥
कुचगिरिवरयुग्मं यद्विनाधारमास्ते
तदिह मकरकेतोरिन्द्रजालं[5] प्रतीमः ॥ २ ॥

## वलित्रयम् ।

एकमेव बलिं[6] बद्ध्वा जगाम हरिरुन्नतिम् ॥
तन्व्यास्त्रिवलिबन्धेऽपि सैव मध्यस्य नम्रता ॥ १ ॥

## रोमावलिः ।

गम्भीरनाभिह्रदसन्निवेशे रराज नीला नवरोमराजिः ॥
मुखेन्दुभीतस्तनचक्रवाकचञ्चुच्युता शैवलमञ्जरीव ॥ १ ॥

---

१ कण्ठप्रमाणे २ सूर्याराधनम् ३ पुष्यमाणः ४ मध्यम् ५ गारुडम् ६ बलिनामान दैत्यम् पक्षे वलिम्.

दत्तं मयापदमिदं नवयौवनाय
त्वं सत्वरं क्व चन शैशवसा धयेति ॥
कामस्य हस्तलिखिताऽक्षरमालिकेव
रोमावली विजयते नलजेक्षणायाः ॥ २ ॥

पयोधरस्तावदयं समुन्नतो
रसस्य वृष्टिः सविधे भविष्यति ॥
अतः समुद्गच्छति नाभिरन्ध्रतो
विसारिरोमालिपिपीलिकाऽऽवलिः ॥ ३ ॥

उत्तुङ्गस्तनपर्वतादवतरद्गङ्गेव हारावली
रोमाली नवनीलनीरजरुचिः सेयं कलिन्दाऽऽत्मजा ॥
जातं तीर्थमिदं सुपुण्यजनकं यत्राऽनयोः सङ्गम-
श्चन्द्रो मज्जति लाञ्छनाऽपहतये नूनं नखाङ्कच्छलात् ॥४॥

## नाभिः ।

मन्येसमाप्तलावण्यसारसर्गे मृगीदृशः ॥
अपूरयित्वैव गतो नाभिरन्ध्रं चतुर्मुखः ॥ १ ॥

## नितम्बः ।

स कथं न स्पृहणीयो विषयस्तैस्तन्नितम्बविन्यासः ॥
शान्तात्मनाऽपि विहितं विश्वसृजा गौरवं यत्र ॥ १ ॥

## अथ जघनम् ।

वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशां
ललितललितैरङ्गन्यासैः पुरा रभसादिव ॥
तदनु सहसा खिन्नेनेव प्रजापतिना भृशं
पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥ १ ॥

---

१ रोमावलिरेव पिपीलिकापंक्तिः २ यमुना ३ नखव्रणच्छलेन ४ प्रशान्तमनसा ५ ब्रह्मणा ६ अत्यन्तसुन्दरैः ७ श्रान्तेनेव

## जङ्घे ।

जङ्घे यदीये संतापं यज्जनस्याऽनुरागिणः ॥
जनयाञ्चक्रतुस्तत्र व्रीडाहेतुर्विलोमता ॥ १ ॥

## चरणौ ।

अमूल्यस्य मम स्वर्णतुला[1]कोटिद्वयं कियत् ॥
इति कोपादिवाऽऽताम्रं पादयुग्मं मृगीदृशः ॥ १ ॥

## नखाः ।

चरणाऽब्जनखश्रेणी राजते हरिणीदृशः ॥
रत्नावलीव लावण्यरत्नाकरसमुद्गता ॥ १ ॥

## सखीकर्तृक उपदेशः ।

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां[2] दूरे कुरु प्रेयसि ॥
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस[3] हृदिस्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥ १ ॥

## सखीं प्रति बालावाक्यम् ।

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाऽऽननं जायते ॥
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टेनिर्वहणं भविष्याति कथं मानस्य तस्मिञ्जने ॥ २ ॥
तद्वक्त्राऽभिमुखं मुखं विनमितं दृष्टिः कृता पादयो-
स्तस्याऽऽलापकुतूहलाऽऽकुलतरे श्रोत्रे निरुद्धे मया ॥

---

१ सुवर्णस्य विंशतिपलात्मकतुलाकोटिद्वयं अथ च पादाङ्गदद्वयम् 'तोरडो' तिलो० २ सरलत्वम् ३ कथय. ४ धारणम्.

पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुकीसंधयः ॥३॥

## सखीकर्तृकमानाऽपनोदः ।

मुग्धे मानं न ते कर्तुं युक्तं प्राणाऽधिके प्रिये ॥
धत्ते मत्सी कियत्कालं जीवितं जीवनं विना ॥ १ ॥

लिखन्नास्ते भूमिं वहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ॥
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवाऽवस्था चेयं विसृज कठिने मानमधुना ॥ २ ॥

सन्त्येवाऽत्र गृहेगृहे युवतयस्ताः पृच्छ गत्वाऽधुना
प्रेयासः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते ॥
आत्मद्रोहिणि दुर्जनप्रलपितं कर्णेऽनिशं मा कृथा-
श्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखाऽनुवृत्त्या पुनः ॥ ३ ॥

स्निग्धे यत्परुषाऽसि यत्प्रणमति स्तब्धाऽसि यद्रागिणि
द्वेषस्थाऽसि यदुन्मुखे विमुखतां याताऽसि तस्मिन् प्रिये ॥
तन्मुग्धे विपरीतकारिणि तव श्रीखण्डचर्चाविषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ ४ ॥

असद्वृत्तो नाऽयं न च खलु गुणैरेव रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपतितः ॥
गृहाणैनं मुग्धे व्रजतु तव कण्ठप्रणयिता-
मुपायो नाऽस्त्यन्यस्तव हृदयदाहोपशमने ॥ ५ ॥

---

१ नम्र. २ उपवासशीलाः ३ संततरोदनेन शोथयुक्तानि नयनानि यासा ताः ४ पाषाणहृदये. ५ प्रियाः । ६ मौक्तिकाना हारः पक्षे मुक्तस्त्यक्तः आहारः अशनं येन प्रियेणेत्यर्थः ७ हृदयदाहशान्त्यै

## नायककर्तृकमानाऽपनोदः ।

ईन्दीवरेण[1] नयनं मुखमम्बुजेन
कुन्देन दन्तमधरं नवपल्लवेन ॥
अङ्गानि चम्पकदलैः सविधाय वेधाः
कान्ते कथं घटितवानुपलेन[2] चेतः ॥ १ ॥

आक्षिपसि कर्णमक्ष्णा[3] बलिरपि[4] बद्धस्त्वया त्रिधा मध्ये ॥
इति जितसकलवदान्ये[5] तनुदाने लज्जसे सुतनु ॥ २ ॥

सुतनु जहिहि[6] मौनं पश्य पादाऽऽनतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ॥
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं[7] न किंतु ॥ ३ ॥

बाले नाथ विमुञ्च मानिनि रुषं[8] रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ॥
तात्किं रोदिषि गद्गदेन वचसा कस्याऽग्रतो रुद्यते
नन्वेतन्मम का तवाऽस्मि दयिता नाऽस्मीत्यतो रुद्यते ॥ ४ ॥

नयनविपातेऽङ्कुरितः पल्लवितो वचसि पुष्पितो हसिते ॥
फलतु कृशाङ्गि तवाङ्गस्पर्शनमात्रे मनोरथाऽऽरण्यतरुः ॥ ५ ॥

सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु[9] ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ॥
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि[10] शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया[11] ॥ ६ ॥

---

१ नीलोत्पलेन, २ पाषाणेन तत्सदृशकठिनत्वात्. ३ श्रोत्रं अङ्गाधिपं च. ४ बलि नामा दैत्यः बवयोः सावर्ण्यात् वलिः वलित्रितयम् ५ जितसर्वदानशौण्डे. ६ त्यज ७ न किंचिदपि उक्तम् ८ क्रोधम् ९ निराकृतिदुःखम् १० मालाम् ११ सर्पभ्रान्त्या.

मोहान् मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिल पक्ष्मविलग्नमद्य
कान्ते प्रमृज्य विगताऽनुशयो भवामि ॥ ७ ॥

## प्रियनर्मोक्तयः ।

अपूर्वं चौर्यमभ्यस्तं त्वया चञ्चललोचने ॥
दिवैव जाग्रतां पुंसां चेतो हरसि दूरतः ॥ १ ॥

उचितं गोपनमनयोः कुचयोः कनकाऽद्रिकान्तितस्करयोः ॥
अवधीरितविधुमण्डलमुखमण्डलगोपनं किमिति ॥ २ ॥

केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
ह्यन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ॥
मुक्तानां सततं निवासरुचिरं वक्षोजकुम्भद्वय-
मित्थं तन्वि वपुः प्रशान्तमपि ते रागं करोत्येव नः ॥३॥

बाले तवाऽधरसुधारसपानकाले चेतो मदीयमभिवाञ्छति शेषभावम् ॥
आलिङ्गने तव विरोचनपौत्रभावमाखण्डलत्वमखिलाऽङ्गनिरीक्षणे ते

भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां
श्यामाऽऽत्मा कुटिलः करोतु कवरीभारोऽपि मारोद्यमम् ॥
मोहं तावदयं च तन्वि तनुतां बिम्बाधरो रागवान्
सद्वृत्तं स्तनमण्डलं तव कथं प्राणैर्मम क्रीडति ॥ ५ ॥

कमलाक्षि विलम्ब्यतां क्षणं कमनीये कचभारबन्धने ॥
दृढलग्नमिदं दृशोर्युगं शनकैरद्य समुद्धराम्यहम् ॥ ६ ॥

१ बन्धनयुक्ताः नियमवन्तश्च. २ कर्णस्य वेदस्य च ३ दन्तानां ब्रह्मणाना च. ४ मौक्तिकानां जीवन्मुक्ताना च ५ अनुरागं क्रोधं च ६ शेषत्वं जिव्हासहस्रवत्वात्. ७ सहस्रार्जुनत्वम् ८ इन्द्रत्वम् ९ भ्रूरेव चापस्तस्मिन्. १० कटाक्ष एव विशिखो बाणः ११ मलिनस्वभावः

कुतः कुवलयं कर्णे करोषि कलभाषिणि ॥
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥ ७ ॥

## वयःसंधिवर्णनम् ।

मन्दंमन्दं श्रवणपुटकोपान्तगं तादृगन्तः
किंचित्किंचित् विरमति मनो धूलिकेलीरसेभ्यः ॥
आविर्भावः स्तनमुकुलयोः काऽपि कान्तिः समन्ता-
दद्य श्वो वा कुसुमधनुषो यौवराज्याऽभिषेकः ॥ १ ॥
स्मितं किंचिद्वक्त्रे सरलतरलो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ॥
गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिह नहि रम्यं मृगदृशः ॥ २ ॥
श्रोणीबन्धस्त्यजति तनुतां[१] सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः[२] संश्रितालोचनाभ्याम् ॥
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
त्वद्गात्राणां गुणविनिमयः[३] कल्पितो यौवनेन ॥ ३ ॥
बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ॥
अधुना हृदयेप्येष मृगशावाक्षि दृश्यते ॥ ४ ॥
न्यञ्चति[४] वयसि प्रथमे समुदञ्चति तरुणिमनि सुदृशः ॥
दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम् ॥ ५ ॥
यदवधि विलासभवनं यौवनमुदियाय[५] चन्द्रवदनायाः ॥
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥ ६ ॥
अधरः किसलयरागः कोमलविटपाऽनुकारिणौ बाहू ॥
कुसुममिव लोभनीयं[६] यौवनमङ्गेषु सन्नद्धम् ॥ ७ ॥

---

१ सूक्ष्मताम् २ चञ्चलगमनानि ३ विपर्यय. 'वदल' इति लो० ४ गच्छति सति ५ उदयं प्राप ६ स्पृहणीयम्

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रना[1]विद्धं[2] रत्नं मधु नवमनास्वादितरसम् ॥
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि ॥ ८ ॥

अत्युन्नतस्तनमुरो नयने सुदीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि ॥
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चाऽद्भुतयौवनायाः ॥ ९ ॥

दृश्यं दृशां सहस्रैर्मनसामयुतैर्वि[3]भावनीयं च ॥
सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रुवो जयति ॥ १०॥

मृ[4]दुलवलिललितमध्यं पृ[5]थुलकुचं चा[6]रुविपु[7]लभूजघनं ॥
पु[8]न्नागस्पृहणीयं स्फुरति वनं यौवनं च नारीणाम् ॥ ११॥

## प्रणयकलहान्तरितनायिकानुनयः ।

गतप्राया रात्रिः शशिमुखि शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ॥
प्रणामान्तो मानस्तदपि न जहासि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि[9] कठिनम् ॥ १ ॥

क्षीणोऽशुः शशलाञ्छनः सखि पुनः क्षीणो न मानस्तव
[10]स्मेरं पद्मवनं मनागपि न ते स्मेरं मुखाऽम्भोरुहम् ॥

---

१ अच्छिन्नम् २ वेधरहितम् ३ ध्येयम् ४ मृद्वी या लवलिर्वृक्षविशेषः तेन ललितः मध्यभागो यस्य तत् पक्षे मृदुलाः याः वलय. वलित्रितयं तेन ललितः मध्यो यस्मिन् ५ पृथवः स्थूलाः लकुचा- पनसाः यस्मिन् पक्षे पृथुलौ कुचौ यस्मिन्. ६ सुन्दरं ७ विपुलाः ये भूजाः वृक्षास्तैर्घनं निविडं पक्षे विपुला भूर्येषा ते विपुलभुवः एतादृशाः जघनाः यस्मिन् तत्. बहुप्रदेशव्यापकजघनमित्यर्थः विपुलभूस्तादृशं जघन यस्मिन्निति वा. ८ पुन्नागे. केसरवृक्षैः स्पृहणीय. पक्षे पुरुषश्रेष्ठैः स्पृहणीयम् ९ अत्यन्तकोपवे. १० विकसितम्

पीतं श्रोत्रयुगेन षट्पदरुतं पीतं न ते जल्पितं
रक्ता शक्रदिगङ्गना रविकरैर्नाऽद्यापि रक्ताऽसि किम्॥२॥
पुरोदिगनुरागिणी तदपि नाऽनुरागोदयः
कृशोदरि निशा कृशा तदपि ते न मानः कृशः ॥
प्रसन्नमिदमम्बरं तदपि न प्रसन्नं मनो
ननाद चरणायुधस्तदपि मौनमालम्बसे ॥ ३ ॥
आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
र्नैशस्यार्चिर्हुतभुज इव च्छिन्न भूयिष्ठधूमा ॥
मोहेनाऽन्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गारोधःपतनकलुषा गृह्णतीव प्रसादम् ॥ ४ ॥

## वीररसः ।

श्रीः । भूमात्रं कियदेतदर्णवमितं तत्साधितं हार्यते
यद्वीरेण भवादृशेन वदति त्रिःसप्तकृत्वो जयः ॥
डिम्भोऽयं नवबाहुरीदृशमिदं घोरं च वीरव्रतं
तत्क्रोधाद्विरम प्रसीद भगवन् जात्यैव पूज्योऽसि नः॥१॥
त्रैलोक्यत्राणशौण्डः सरसिजवसतेर्यः प्रसूतो भुजाभ्यां
सक्षत्रं नामवर्णः कुलिशकठिनयोर्यस्य दोष्णोर्विलीनः ॥
ज्वालाजिह्वालकालानलकवलभयभ्रान्तदेवासुराणि
व्यातन्वानो जगन्ति ज्वलति मुनिरयं पार्वतीधर्मपुत्रः ॥२॥
पुरोजन्मा नाऽद्यप्रभृति मम रामः स्वयमहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम् ॥
अधीरं धीरं वा कलयतु जनो मामयमयं
मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः ॥ ३ ॥

---

१ भ्रमरशब्दः २ प्राची. ३ तीरपातेन मृदाविला. ४ नैर्मल्यम् ५रक्षणम्.
६ ब्रह्मणः ७ बाह्वोः ८ भार्गवः

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः[1] पत्नी[2] गृहीतव्रता ॥
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति[3] स्फीतं यशोदुन्दुभिः ॥ ४ ॥

## करुणारसः ।

श्रीः । सद्यः पुरी[4]परिसरेऽपि शिरीषमृद्वी[5]
गत्वा जवात्रिचतुराणि पदानि सीता ॥
गन्तव्यमस्ति कियदित्यसकृद्[6] ब्रुवाणा
रामाऽश्रुणः कृतवती प्रथमाऽवतारम् ॥ १ ॥

अथेदं रक्षोभिः कनकहरिणच्छद्म[7]विधिना
तथा वृत्तं[8] पापै[9]र्व्यथयति यथा क्षालितमपि ॥
जनस्थाने शून्ये करुणकरुणै[10]रार्यचरितै-
रपि ग्रावा[11] रोदित्यपि दलति[12] वज्रस्य हृदयम् ॥ २ ॥

अविशीर्णकान्तपात्रे नव्यदशे सुमुखि संभृतस्नेहे ॥
मद्गेहदीपकलिके कथमुपयाताऽसि निर्वाणम् ॥ ३ ॥

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
अन्तर्बाष्पभरोपरोधिगदितं चिन्ताजडं दर्शनम् ॥
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः[13]
पीड्यन्ते गृहिणः[14] कथं नु तनया[15]विश्लेषदुःखैर्नवैः ॥ ४ ॥

पातुं न प्रथमं व्यवस्यति जलं युष्मास्व[16]पीतेषु या
नाऽऽदत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ॥

---

१ युधिष्ठिरः २ द्रौपदी. ३ शब्दं करोति. ४ अयोध्यासमीपदेशे. ५ शिरीषकुसुमवत्कोमला. ६ वारंवारम् ७ कपटम्. ८ आचरितम्. ९ दुष्टैः १० अत्यन्तकरुणैः ११ पाषाणः १२ शीर्यति. १३ अरण्यवासिनः १४ गृहस्थाश्रमिणः १५ कन्यावियोगदुःखैः १६ ‘ युष्मास्वपीतेषु ये ’ ति वा पाठः

आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ५ ॥

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ॥
शामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ ६ ॥

अर्थो हि कन्यापरकीय एव तामद्य संप्रेष्य परिग्रहीतुः ॥
जातोऽस्मि सद्यो विशदान्तरात्मा चिरस्य निक्षेपमिवाऽर्पयित्वा ॥७

जातेति कन्या महती हि चिन्ता कस्मै प्रदेयेति महान् वितर्कः॥
दत्ता सुखं यास्यति वा नवेति कन्यापितृत्वं खलु नाम कष्टम्॥८॥

दैवे पराग्वदनशालिनि[1] हन्त जाते
याते च संप्रति दिवं प्रतिबन्धुरत्ने ॥
कस्मै मनः कथयितासि निजामवस्थां
कः शीतलैः शमयिता वचनैस्तवाऽऽधिम्[3] ॥ ९ ॥

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्याऽपि खेद[2]कलिता विमुखी बभूव ॥
सा केवलं हरिणशावकलोचना मे
नैवाऽपयाति हृदयादधिदेवतेव ॥ १० ॥

धृत्वा पदस्खलनभीतिवशात्करं मे
याऽऽरूढवत्यासि शिलाशकलं विवाहे ॥
सा मां विहाय कथमद्य विलासिनि द्यो–
मारोहसीति हृदयं शतधा प्रयाति ॥ ११ ॥

भूमौ स्थिता रमणनाथमनोहरेति
संबोधनैर्यमधिरोपितवत्यसि द्याम् ॥

---

१ पराङ्मुखे २ खेद. ३ मनोव्यथाम् ४ श्रमसंपादिता ५ स्वर्गम्

स्वर्गं गता कथमिव क्षिपसि त्वमेण-
शावाक्षि तं धरणिधूलिषु मामिदानीम् ॥ १२ ॥
ध्रुवं ध्वंसो[1] भावी जलनिधिमहीशैलसरिता-
मतो मृत्योः शीर्यत्कणलवेषु का जन्तुषु कथा ॥
तथाऽप्युच्चैर्बन्धुव्यसनजनितः कोऽपि विषमो
विवेकप्रोन्माथी[2] दहति हृदयं शोकदहनः ॥ १३ ॥
निकृन्ततीव मर्माणि देहं शोषयतीव मे ॥
दहतीवान्तरात्मानं क्रूरः शोकाऽग्निरुत्थितः ॥१४॥

## अद्भुतरसः ।

श्रीः ॥ किं ब्रूमो हरिमस्याविश्वमुदरे किं वा फणान् भोगिनः
शेते यत्र हरिः स्वयं जलनिधेः सोऽप्येकदेशे स्थितः ॥
आश्चर्यं कलशोद्भवो मुनिरसौ[3] यस्यैकहस्तेऽम्बुधि-
र्गण्डूषीयति पङ्कजीयति फणी भृङ्गीयति श्रीपतिः ॥ १ ॥
कस्मै किं कथनीयं कस्य मनःप्रत्ययो[4] भवति ॥
रमयति गोपवधूटी[5] कुञ्जकुटीरे परं ब्रह्म ॥ २ ॥
आदाय चापमचलं[6] कृत्वा हीनं[7] गुणं विषमदृष्टिः[8] ॥
यश्चित्रमच्युतशरो[9] लक्ष्यम[10]भाङ्क्षी[11]न्नमस्तस्मै ॥ ३ ॥
चित्रं कनकलतायां शरदिन्दुस्तत्र खञ्जनद्वितयम् ॥
तत्र च मनोजधनुषी तदुपरि गाढाऽन्धकाराणि ॥ ४ ॥

---

१ नाशः २ विवेकोन्मूलनः ३ अगस्त्यः ४ विश्वासः ५ स्त्री. ६ स्थिरम् पक्षे पर्वतम् ७ गुणरहितं पक्षे अहीनमिति पदच्छेदः सर्पराजं गुणं कृत्वेत्यर्थः ८ असमदृक् पक्षे त्रिलोचनत्वात् विषमदृष्टिः ९ न च्युतः शरो यस्य पक्षे अच्युतः विष्णुः स एव शरो यस्य. १० शरव्यं त्रिपुरमित्यर्थः ११ बभञ्ज

कृष्णेनाऽम्ब गतेन रन्तुमनसा मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली[1] मिथ्याऽम्बपश्याऽऽननम् ॥
व्यादेहीति[2] विकासितेऽथ वदने माता समस्तं जग-
द्दृष्ट्वा यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥ ९ ॥

## हास्यरसः ।

श्रीः ॥ अत्तुं वाञ्छति वाहनं गणपतेराखुं[3] क्षुधार्तः फणी
तं च क्रौञ्चपतेः[4] शिखी[5] च गिरिजासिंहोऽपि नागाननम्[6] ॥
गौरी जन्हुसुतामसूयति[7] कलानाथं कपालाऽनलो
निर्विण्णः स पपौ कुटुम्बकलहादीशोऽपि हालाहलम् ॥ १ ॥
दृष्ट्वा षडाननजनुर्मुदिताऽन्तरेण पञ्चाननेन सहसा चतुराननाय ॥
शार्दूलचर्मभुजगाभरणं सभस्म दत्तं निशम्य गिरिजाहसितं पुनातु ॥ २ ॥
रामाद्याचय[8] मेदिनीं धनपतेर्[9]बीजं बलाल्लाङ्गलं[10]
प्रेतेशान्[11]महिषं तवाऽस्ति वृषभः फालं त्रिशूलादपि ॥
शक्ताऽहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे
खिन्नाऽहं तव याचनात्कुरु कृषिं भिक्षाटनं मा कृथाः ॥ ३ ॥
विष्णोश्चाऽऽगमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं[12]
कौपीनं परिधाय चर्म करिणः शम्भुः पुरो धावति ॥
दृष्ट्वा विष्णुरथं[13] सकम्पहृदयः सर्पोऽपतद्भूतले
कृत्तिर्[14]विस्खलिता ह्रिया नतमुखो नग्नो हरः पातु वः ॥ ४ ॥
उदरद्वयभरणभयादर्धाङ्गीकृतदारः ॥
यदि नैवं तस्यैकसुतः कथमद्याऽपि कुमारः ॥ ५ ॥

---

१ बलरामः २ विकासय. ३ मूषिकम् ४ कार्तिकेयस्य. ५ मयूरः ६ गजवदनम् ७ द्वेष्टि ८ भार्गवात् ९ कुबेरात. १० बलभद्रात्. ११ यमात्. १२ सूत्रम्. १३ गरुडम् १४ गजचर्म.

किं गोत्रं किमु जीवनं किमु धनं का जन्मभूः किं वयः
किं चारित्र्यममुष्य के सहचराः के वंशजाः प्राक्तनाः ॥
का माता जनकः शिवस्य क इति प्रह्वेण पृथ्वीभृता
पृष्टाः सस्मितनम्रमूकवदनाः सप्तर्षयः पान्तु वः ॥ ६ ॥
भस्माऽन्धोरगफूत्कृतिस्फुटभवद्भालस्थवैश्वानर-
ज्वालाखिन्नसुधांशुमण्डलगलत्पीयूषधारारसैः ॥
संजीवद्गजचर्मगर्जितभयभ्राम्यद्वृषाऽऽकर्षण-
व्यासक्तः सहसाऽद्रिजोपहसितो नग्नो हरः पातु वः ॥ ७ ॥
हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः
किं ते स्कन्द[1] विचेष्टितं मम पुरा संख्याकृता चक्षुषाम् ॥
नतत्ते ह्युचितं गजाऽस्य चरितं नासा प्रमिता च मे
तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥ ८ ॥
कृष्णो गोरसचौर्यमम्ब कुरुते किं कृष्ण मातः सुरा–
पानं न प्रकरोमि राम किमिदं नाऽहं परस्त्रीरतः ॥
किं गोविन्द वदत्यसौ हलधरो मिथ्येति तां व्याहरन्
गोपीगोपकदम्बकं विहसयन् मुग्धो मुकुन्दोऽवतु ॥ ९ ॥
परान्नं प्राप्य दुर्बुद्धे मा प्राणेषु दया कुरु ॥
परान्नं दुर्लभं लोके प्राणा जन्मनिजन्मनि ॥ १० ॥
उपभुक्तखदिरवीटकनिजाधरजरागभङ्गभयात् ॥
पितरि मृतेऽपि हि वेश्या रोदिति हा ताततातेति ॥ ११ ॥
चिता प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः ॥
नाऽहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ २ ॥
वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव ॥
त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ ४ ॥

---

1 स्कन्दः

सामगायनपूतं मे नोच्छिष्टमधरं कुरु ॥
उत्कण्ठिताऽसि चेद्भद्रे वामं कर्णं दशस्व मे ॥ ५ ॥
आदौ वेश्या पुनर्दासी पश्चाद्भवति कुट्टिनी ॥
सर्वोपायपरिक्षीणा वृद्धा नारी पतिव्रता ॥ ६ ॥

## भयानकरसः।

श्रीः ॥ ग्रीवाभङ्गाऽभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ॥
दर्भैरर्धाऽवलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ १ ॥
निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिलक्रूरताराऽनराऽस्थि-
ग्रन्थिदन्ताऽन्तरालग्रथितमविरतं जिह्वया घट्टयन्ती ॥
ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरिपरिक्रीडते ताडकेयम् ॥ २ ॥
अन्त्राऽऽकल्पचलत्पयोधरभरव्याविद्धमेघच्छटा
सृक्[1]स्थामिष[2]गृघ्नुगृध्रगरु[3]दारुफालोच्चलन्मूर्धजा ॥
व्यादायाननमट्टहासविकटं दूरेण तारापथा-
त्रस्यत्सिद्धपुरन्ध्रिवृन्दरभसोन्मुक्तादुपक्रामति ॥ ३ ॥

## बीभत्सरसः ।

श्रीः॥ उत्कृत्योत्कृत्य कृत्तिं प्रथममथपृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ॥
आत्तस्नाय्वन्त्रनेत्रप्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ १ ॥

१ ओष्ठप्रान्तः २ लालसाः ३ पक्षाः ४ स्त्री. ५ चर्म ६ कटिदेशस्थमांस-
पिण्डः 'कुले' ७ अत्यन्तदुर्गन्धीनि ८ भक्षयित्वा. ९ मांसम्

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराभूषयत्यम्बरम्॥
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लल-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ २ ॥
रक्तं नक्तंचरौघैः पिबति च वमति व्यग्रकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः ॥
क्रीडत्यव्रीडमस्मिन् रुधिरमधुवशात्पूतना नूतनाङ्गी
योगिन्यो मांसमेदःप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥३॥

## रौद्ररसः ।

श्रीः ॥ येन स्वां विनिहत्य मातरमपि क्षत्राऽस्रमध्वासव-
स्वादाऽभिज्ञपरश्वधेन विदधे निःक्षत्रिया मेदिनी ॥
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥ १ ॥
राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याऽग्रतः
प्रत्यक्षं कुरु बान्धवस्य च तथा कर्णस्य शल्यस्य च ॥
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराऽऽकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥ २ ॥
स्पृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनाऽस्याः परिधानमप्यपहृतं राज्ञां कुरूणां पुरः ॥
यस्योरःस्थलशोणिताऽऽसवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ ३ ॥
योयः शस्त्रं बिभर्ति स्वभुजगुरुमदःपाण्डवीनां चमूनां
योयः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यागतो वा ॥
योयस्तत्कर्मसाक्षी चरति मयि रणे यश्चयश्च प्रतीपः
क्रोधाऽन्धस्तस्य तस्य स्वयमिह जगतामन्तकस्याऽन्तकोऽहम् ॥४॥

---

१ रक्तम्.

# शान्तरसः ।

श्रीः । गतः कामकथोन्मादो गलितो यौवनज्वरः ॥
गतोमोहश्च्युता तृष्णा कृतं पुण्याऽऽश्रमे मनः ॥ १ ॥
वनान्यमूनि न गृहाण्येता नद्यो न योषितः ॥
मृगा इमे न दायादा स्तन्मे नन्दति मानसम् ॥ २ ॥
शान्तिकन्थालसत्कण्ठो मनःस्थालीमिलत्करः ॥
त्रिपुरारिपुरद्वारि कदाऽहं मोक्षभिक्षुकः ॥ ३ ॥
संध्यावन्दनभद्रमस्तु भवते भोः स्नान तुभ्यं नमो
भोदेवाः पितरश्च तर्पणविधौ नाऽहं क्षमः क्षम्यताम् ॥
यत्र क्काऽपि निषद्य यादवकुलोत्तंसस्य कंसद्विपः
स्मारंस्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥ ४ ॥
अतिक्रान्तः कालो लटितललनाभोगसुखदो
भ्रमन्तः शान्ताः स्मः सुचिरमिहसंसारसरणौ ॥
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनागिरः
सुतारैः फूत्कारैः शिवशिवशिवेति प्रतनुमः ॥ ५ ॥
उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः ॥
यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ ६ ॥
एणाक्षीस्पृहयालुता न कथमप्यास्ते विवेकोदया-
न्नित्यं प्रच्युतिशङ्कया क्षणमपि स्वर्गे न मोदामहे ॥
अप्यन्येषु विनाशिभोगविषयाभोगेषु तृष्णा न मे
स्वर्णद्याः पुलिने परं हरिपदध्यानं मनो वाञ्छति ॥ ७ ॥
ॐकारैस्तैःप्रदीपे मृगय गृहपतिं सूक्ष्ममेवाऽऽन्तरस्थं
संयम्य द्वारबाह्यं पवनमविरतं नायकं चेन्द्रियाणाम् ॥

---

१ प्रव्रज्यायाम्, २ पद्धतौ, ३ स्वर्णद्याः ४ प्राणवायुः ५ सद्वस्तुप्रकाशके ६ शोधय ७ आत्मानम्.

वाग्जालं कस्य हेतोर्विरचयसि गिरा दृश्यते नैव किंचि-
द्देहस्थं पश्य नाथं भ्रमसि किमपरं शास्त्रमोहाऽन्धकारे ॥८॥
कामक्रोधग्राह[1]वतीं पञ्चेन्द्रियजलां नदीम् ॥
नावं धृति[2]मयीं कृत्वा जन्मदुर्गाणि संतर ॥ ९ ॥
वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा[3]
विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम् ॥
शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो
मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ १० ॥
समारम्भा भग्नाः कतिकति न वारांस्तव पशो
पिपासोस्तुच्छेऽस्मिन् द्रविणमृगतृष्णाऽर्णवजले ॥
तथाऽपि प्रत्याशा विरमति न ते मूढ शतधा
न दीर्णं यच्चेतो नियतमशनिग्रावघटितम्[4] ॥ ११ ॥
अजानन्दाहाऽर्तिं पतति शलभो दीपदहनं
स मीनोऽप्यज्ञानाद्बडिश[5]युतमश्नाति पिशितम् ॥
विजानन्तोऽप्येते वयमिह विपज्जालजटिला-
न्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ १२ ॥
कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः
शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम् ॥
कदा ब्रह्माभ्यासस्थिरतनुतयाऽरण्यविहगाः
पतिष्यन्ति स्थाणुभ्रमहतधियः स्कन्धशिरसि ॥ १३ ॥
समाश्लिष्यत्युच्चैर्घनपिशित[6]पिण्डं स्तनधिया
मुखं लालाकीर्णं पिबति चषकं[7] साऽऽसवमिव[8] ॥

---

१ मकरः २ धैर्यरूपाम् ३ यष्ट्यधीना ४ वज्रपाषाणघटितम् ५ मत्स्यवेधनम्
६ मासपिण्डम्. ७ पानपात्रम् ८ मद्ययुक्त

अमेध्यक्लेदाऽर्द्रे पथि च रमते स्पर्शरसिको
महामोहान्धानां किमिह रमणीयं न भवति ॥ १४ ॥
मातर्माये भगिनि कुमते हे पितर्मोहजालं
व्यावर्तध्वं भवतु भवतामेष दीर्घो वियोगः ॥
सद्यो लक्ष्मीरमणचरणभ्रष्टगङ्गाप्रवाह-
व्यामिश्रायां दृषदि परमब्रह्मदृष्टिर्भवामि ॥ १५ ॥
मातर्मेदिनि तात मारुत सखे ज्योतिः सुबन्धो जल
भ्रातर्व्योम निबद्ध एष भवतामन्त्यः प्रणामाञ्जलिः ॥
युष्मत्संगवशोपजातसुकृताद्रेकः स्फुरन्निर्मल-
ज्ञानाऽपास्तसमस्तमोहमहिमा लीने परे ब्रह्मणि ॥ १६ ॥
महाशय्या[1] भूमिर्मसृणमु[2]पधानं भुजलता
वितानं[4] चाऽऽकाशं[3] व्यजनमनुकूलोऽयमनिलः ॥
स्फुरच्चन्द्रो दीपः स्वधृति[5]वनितासंगमुदितः
सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥ १७ ॥
नि[6]र्विवेकतया बाल्यं[7] कोपोन्मादेन यौवनम् ॥
वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम् ॥ १८ ॥
प्रातर्मूत्रपुरीषाभ्यां मध्यान्हे क्षुत्पिपासया ॥
तृष्णा कामेन बाध्यन्ते प्राणिनो निशि निद्रया ॥ १९ ॥
गतसारे[8]ऽत्र संसारे सुखभ्रान्तिः शरीरिणाम् ॥
लालापानमिवाऽङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ २० ॥
दिनमेकं शशी पूर्णः क्षीणस्तु बहुवासरान् ॥
सुखाद्दुःखं सुराणामप्यधिकं का कथा नृणाम् ॥ २१ ॥

---

१ पर्यङ्कः २ मृदु ३ 'उशीति' लोके ४उल्लोचः 'छत' इति लो० ५ स्वधृतिः स्वीयधैर्यं तदेव वनिता स्त्री तस्याः संगेन मुदितो हृष्टः सन्. ६ विचारशून्यत्वेन ७ शैशवम् ८ निःसारे

किं निःशङ्कं शेषे शेषे वयसः समागतो मृत्युः ॥
अथ वा सुखं शयीथा निकटे जागर्ति जान्हवी भवतः ॥२२॥
प्रतिपलमखिलाँल्लोकान् मृत्युमुखं निविशतो निरीक्ष्याऽपि ॥
हा हन्त चित्तमेतद्विरमति नाऽद्यापि विषयेभ्यः ॥ २३ ॥
नि[1]खिलं जगदेव न[2]श्वरं पुनरस्मिन्नितरां क[3]लेवरम् ॥
अथ तस्य कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥२४॥
मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः ॥
श्व[4]पचाऽऽत्मभु[5]वोः किमन्तरं मम भूयात्परमात्मनि स्थितिः ॥२५॥

कदा वृन्दाऽरण्ये विमलयमुनातीरपुलिने
चरन्तं गोविन्दं हलधरसुदामादिसहितम् ॥
अये कृष्णस्वामिन् मधुरमुरलीवादन विभो
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ २६ ॥
कदा वा सा[6]केते विमलशरयूतीरपुलिने
चरन्तं श्रीरामं जनकतनयालक्ष्मणयुतम् ॥
अये रामस्वामिन् जनकतनयावल्लभ विभो
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ २७ ॥
कदा वाराणस्याममरत[7]टिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ॥
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ २८ ॥

**नानाप्रकरणैर्युक्तं संगृहीतं मनोरमम् ॥**
**आनन्दाय सतां भूयात्सुभाषितमिदं मम ॥**

---

१ संपूर्णम् २ नाशवत् ३ शरीरम् ४ चाण्डालः ५ पुत्रः ब्रह्मा वा ६ अयोध्यायाम् ७ भागीरथीतीरे

समाप्तोयं ग्रन्थः

# ग्रन्थनामचिह्नानि।

| ग्रन्थनाम | चिन्हम्। |
| --- | --- |
| अनर्घ्यराघवं | अ. रा. |
| अश्वधाटी | अ धा. |
| अच्युतरायजी | अ. रा. |
| इंदिशेसप्रुखे | इं. प्रु |
| उत्तररामचरित्रम् | उ. रा. |
| कर्णामृतम् | क |
| कलिविडम्बनम् | क. वि. |
| कल्पतरुः | क. त. |
| काव्यसंग्रहः | का. सं. |
| काव्यादर्शः | का. |
| कुमारसंभवम् | कु. सं. |
| कुवलयानन्दः | कु. नं. |
| गीतगोविन्दम् | गी. गो. |
| गोवर्धनसप्तशती | गो. स. |
| चर्पटपजरी | च. पं. |
| जानकीपरिणयम् | जा. प. |
| जिनधर्मविवेकः | जि. वि. |
| धनंजयव्यायोगः | ध व्या |
| नलचपूः | न. चं. |
| नैषधम् | नै. |
| पञ्चायुधप्रपञ्चभाणः | पं. भा. |
| पद्यतरङ्गी | प. त. |
| प्रबोधचन्द्रोदयः | प्र. चं. |
| प्रबोधसुधाकरः | प्र. सु. |
| प्रसंगरत्नावली | प्र. र. |
| प्रसंगाभरण | प्र. |
| भर्तृहरी | भ. |
| भामिनीविलासः | भा. वि. |
| भारतचंपूः | भा. चं. |
| भोजप्रबंधः | भो. प्र. |
| माघः | मा. |
| मालविकाग्निमित्रं | मा. मि. |
| मालतीमाधवं | मा. मा. |
| मुकुदानदभाणः | मु. भा. |
| मोहमुद्गरः | मो. मु. |
| रंभाशुकसंवादः | रं. शु. |
| रसिकजीवनं | र. जी. |
| राधाकृष्णसवादः | रा. कृ. |
| लटकमेलनं | ल. मे. |
| वासवदत्ता | वा. |
| वागभट्टः | वाग्. |
| विक्रमोर्वशी | वि. |
| विठोबाअण्णा | वि. अ. |
| विदग्धमुखमंडन | वि मं. |
| विद्वद्भूषण | वि. भू. |
| विश्वगुणादर्शः | वि. गु. |
| वेणीसंहारं | वे. सं. |
| वैद्यजीवनं | वै. जी. |
| शाकुंतलं | शाकुं. |
| शार्ङ्गधरः | शा. |
| सभातरगः | स. त. |
| सूक्तिसंग्रहः | सू. |
| स्फुटश्लोकाः | स्फु. |
| हनुमन्नाटकं | हृ. |
| हितोपदेशः | हि. |

# सूचीपत्रम् ।

## अ.


| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अकरुणत्वमकारणवि. | भर्तृ. | ३० | ५२ |
| अकल्पःस्वाङ्गचेष्टया, | क. त. | १३३ | ४ |
| अकस्मादेवकुप्यन्ति | स.त. | २८ | ३५ |
| अकस्माद्द्वेष्टियोभर्तृ. | प्र.र. | १४६ | २५ |
| अकबेरपुरीविलोकन. | स्फु. | १५८ | १४ |
| अकृतोपद्रवःकश्चित्. | प्र.र. | २६७ | ४३ |
| अकृत्वापरसंतापं. | प्र.र. | ६२ | १ |
| अकूर्चारम्भोपि. | प्र.र. | २७६ | ४९ |
| अकृत्वङ्गमतस्तर्कं. | प्र.र. | २८३ | ८[illegible] |
| अक्षमालापवृत्तिज्ञा, | स्फु. | ३३१ | ७२ |
| अखिलेषुविहगेषु. | इं.प्रु. | २२८ | २ |
| अगजाननपद्मार्के. | स्फु. | ३ | १ |
| अगतित्वमतिश्रद्धा. | कलि. | २९७ | ५ |
| अगस्तितुल्याश्वघृना. | स्फु. | २८० | ६४ |
| अगाधहृदयाभूपा; | स्फु. | २७६ | ३४ |
| अगुरुरितिवदतुलोको. | शा. | २४५ | १ |
| अग्राह्मंहृदयं. | इं.प्रु. | १३४ | ७ |
| अग्रेगीतंसरस. | भर्तृ. | ६०८ | १० |
| अग्रेव्याधःकरधृतशरः | प्र. र. | २१५ | १२ |
| अग्र्यो मुक्तिमता. | स्फु. | १२८ | ३ |
| अङ्काहतक्षितिज. | ज. | ३१६ | १ |
| अङ्गनवेदीवसुधा. | शा. | ६० | ६ |
| अङ्गानिमेकातवियोग. | शा. | १५८ | ३८ |
| अङ्गासंगिमृणाल. | र.जी. | १५५ | १० |
| अङ्गुल्याक कपाटं. | प्र.र. | ८ | १९ |
| अङ्गेषुमुख्या. | वि. अ. | १०६ | २ |
| अङ्गंगलितंपलित. | च.पं. | ७८ | ११ |
| अचिन्त्याःपंथानः | शा. | २२ | ८७ |
| अचिराधिष्ठितराज्यः | स.त. | १४५ | २१ |
| अचोद्यमानानियथा. | प्र.र. | ८९ | ११ |
| अच्युतभक्तिवशा. | वि.भू. | १८० | २७ |
| अजातमृतमूर्खाणा. | कल्प. | १४२ | ९ |
| अजातमृतमूर्खेभ्यो. | कल्प. | १४३ | ५ |
| अजानन्दाहार्ति. | भ.ह. | ३६० | १२ |
| अज्ञतयाप्रेम्णावा | क.त. | २६२ | ५१ |
| अज्ञातशास्त्रसद्भावा | वाग्. | ९६ | ५ |
| अज्ञानतिमिरस्यैव. | स्फु. | ४४ | २८ |
| अज्ञःसुखमाराध्यः | भर्तृ. | ४७ | १ |
| अंजलिस्थानिपुष्पा. | प्र.र. | १८ | ५३ |
| अट्टशूलाजनपदाः | कल्प. | ११९ | २१ |
| अतनुज्वरपिडितासि. | स.त. | ११७ | ६ |
| अतिकुपिताअपिसु. | इं.प्रु. | २१ | ७८ |
| अतिक्रातकालो. | भर्तृ. | ३५९ | ५ |
| अतिपरिचयादवज्ञा. | स्फु. | २८३ | ८२ |
| अतिमलिनेकर्तव्ये. | क.त. | ३१ | ५६ |
| अतिरमणीयेकाव्ये. | इं.प्रु. | ५० | १० |
| अतिसाहसमति. | प्र.र. | ८१ | २ |
| अत्तुंवाछतिवाहनं. | प्र.र. | ३५४ | १ |
| अत्युन्नतस्तनमुरो. | इं.प्रु. | ३५० | ९ |
| अत्यंतविमुखेदैवे. | प्र.र. | ६६ | १० |
| अथेदंरक्षोभिः | उ.रा. | ३५२ | २ |
| अथोपगूढे. | कु. | १६८ | १ |
| अदातापुरुषाः | शा. | २६३ | ५ |
| अद्भुतस्तर्कपाथोधि. | वि.गु. | ९३ | ४ |

| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अदृष्टव्यापार. | वि.गु. | २३० | ३ |
| अग्रशीतंवरीवर्ति. | स्फु. | १६९ | ५ |
| अद्यापिदुर्निवारं. | गो.स. | २८५ | २४ |
| अद्यापिनूनहरकोप. | शा.ना. | १४८ | ६ |
| अद्यापिनोज्झतिहरः | शा. | १९ | ६० |
| अधरस्यमधुरिमाण. | क.त. | २५९ | ९५ |
| अधरेनववीटिका. | स्फु. | ३३३ | २८ |
| अधरेमधुरासरस्वती. | स्फु. | ३३३ | ७ |
| अधरःकिसलयरागः | शा.ना. | ३४९ | ७ |
| अधःकरोषियद्रत्नं | शा. | २३३ | ७ |
| अविगतपरमार्थान्. | भर्तृ. | ३८ | ५ |
| अधुनामधुकरपतिना. | स्फु. | १७९ | २२ |
| अध्यापयन्तिशास्त्रा. | क.वि. | २९९ | ३१ |
| ध्वन्यध्वनिभूरुहः | शा. | २५० | १ |
| अध्वजरामनुष्याणां | स्फु. | २७७ | ४१ |
| अध्वानंनैक. | स्फु. | १६२ | ११ |
| अनलस्तम्भनविद्यां. | शा. | १६९ | ५६ |
| अनवरतपरोपकरण. | प्र.र. | २६२ | ४६ |
| अनवसरेगुणवानपि. | शा. | ६२ | १४ |
| अनासिसीदतिसैकत. | शा. | २१६ | २ |
| अनाघ्रातंपुष्पं. | शाकुं. | ३५० | ८ |
| अनिशंमतंगजानां. | शा. | २०८ | ११ |
| अनुकुरुतःखलसुजाना | शा. | १६ | ३५ |
| अनुकूलेसति. | स्फु. | ८५ | ३३ |
| अनुकूलेविधौ. | स्फु. | ७३ | १ |
| अनुचितमेवाचरितं. | स्फु. | ८५ | ३४ |
| अनुचितकर्मारम्भः | स्फु. | २६५ | २० |
| अनुभवतददतवित्तं | इ.प्र. | ५५ | ३८ |
| अनुरागवंतमपिलोच. | मा. | १६१ | २ |
| अनुयातानेकजनः | स्फु. | २९१ | ४७ |
| अनुसरतिकरिकपोल.इं.प्र. | { | २२१ | ११ |
| | | २९४ | ७० |

| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अनृतंसाहसंमाया. | स्फु. | १३३ | १ |
| अनेकसुषिरंवाद्यं. | स्फु. | १७९ | १८ |
| अनेनरम्भोरुतवाननेन. | शा. | ३४० | ३ |
| अनंकुरितकूर्चकः | स्फु. | १३५ | १२ |
| अनङ्गेनाबलासंगात्. | स्फु. | १४८ | ४ |
| अनन्तपदविन्यास. | प्र.र. | ४६ | ३ |
| अन्तकोपिहिजंतूना | क.नि. | २९८ | २५ |
| अन्तःकटुरपिलघुरपि. | इ.प्र. | २९४ | ७१ |
| अन्तःकरणतत्त्वस्य. | उ.रा. | १४० | ४ |
| अन्तःक्रूराःसौम्यमु. | क.त. | १३५ | १५ |
| अन्तःप्रतप्तमरुसैकत. | शा. | २४५ | १ |
| अन्तर्मलिनदेहेन. | इं.प्र. | ३५ | ९३ |
| अन्तर्वाणिंमन्यमानः | स्फु. | ३५ | ९४ |
| अन्तर्विष्णोस्त्रिलोकी. | कु. | १४६ | २ |
| अन्तरिच्छद्राणिभूयांसि. | शा. | २३८ | १० |
| अन्तःसारविहीनस्य. | प्र.र. | ४२ | १५ |
| अन्त्रप्रोतबृहत्कपाल. | र.जी. | ३५८ | २ |
| अन्त्रकल्पचलत्प. | जा.प. | ३५७ | ३ |
| अन्धंदरिद्रिणमपि. | स्फुट. | २८९ | २९ |
| अन्धनमश्वेदपि. | वि.अ. | ६ | ६ |
| अन्नवस्त्रसुवर्णानि. | प्र.र. | १८८ | १४ |
| अत्यकान्तामि. | अ.रा. | १५२ | २ |
| अन्यथैवहिसौहार्दे. | प्र.र. | ६२ | ५ |
| अन्यस्त्रीस्पृहयालवो. | स्फु. | १९२ | २६ |
| अन्यमुखेदुर्वादो. | गो.स. | २६३ | ३ |
| अन्यवर्णपरावृत्त्या. | वि.गु. | ४९ | ५ |
| अन्याजगद्धितमयी. | स्फु. | ३९ | १२ |
| अन्यासुतावदुपमर्द. | इं.प्र. | २२३ | २६ |
| अन्यानिशास्त्राणि. | क.त. | २९६ | ९२ |
| अन्येतेजलदायिनो. | शा. | २२६ | ११ |
| अन्योपिचन्दनतरो. | भो.प्र. | २०५ | २२ |
| अन्येपिसंतिवत. | शा. | २२६ | १० |

| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अन्वयागतविद्यानां. | स्फु. | २६७ | ४० |
| अपकारिषुयःसाधुः | शा. | १३ | १९ |
| अपदादूरगामीन. | प्र.र. | १७२ | १ |
| अपराधीनूनमहं. | वि.वें. | १५१ | २ |
| अपरीक्षितलक्षण. | वि.गु. | ९३ | ३ |
| अपसरतिनचक्षुषो. | स्फु. | १५६ | २४ |
| अपसरमधुकरदूरं | इं.मु. | २२२ | १७ |
| अपसरणमेवशरणं. | शा. | २१७ | ३ |
| अपागतरलेदृशौ. | र.जी. | ३३३ | २६ |
| अपायिमुनिनापुरा. | इं.मु. | १४६ | ३ |
| अपिदलदरविंद. | भा.वि. | २३८ | ११ |
| अपिप्रारब्ध. | अ.रा. | १५२ | ३ |
| अपिमेरुपमंप्राज्ञं | शा. | ७७ | ५ |
| अपिललितसुगुण. | वि.अ. | १२९ | ४ |
| अपिवेत्तिषडक्षरा. | क.त. | ३५ | ९५ |
| अपिसागरपर्यन्ता. | क.वि. | २९७ | १२ |
| अपूर्वचौर्यमभ्यस्त. | स्फु. | ३८० | १ |
| अपूर्वःकोपिकोपाग्निः | प्र.र. | ३१ | ६२ |
| अपूर्वोभातिभारत्या. | स्फु. | ५१ | ११ |
| अपूर्वरसनाव्यालाः | सू. | २५ | ३ |
| अपेक्षन्तेनचस्नेहं. | शा. | २३ | ९५ |
| अपःपिबन्प्रपापा. | स.त. | १८३ | ४१ |
| अप्यात्मनोविनाशं. | इं.मु. | २७ | २३ |
| अप्रगल्भाःपदन्यासे. | न.च. | ४८ | २ |
| अप्रतिबुद्धेश्रोतरि. | प्र.र. | २७९ | ५६ |
| अप्रार्थितानिदुःखा. | प्र.र. | ६२ | ७ |
| अप्रियवचनदरिद्रैः | भर्तृ. | १७ | ४४ |
| अप्सुप्लवन्तेपाषाणाः | क.त. | ११८ | ६ |
| अबलायत्रप्रबला. | स.त. | २९० | ३२ |
| अबलेसलिलेतपस्यता. | स्फु. | ३४० | ८ |
| अभिमतमहामानग्रं. | भर्तृ. | ८९ | २ |
| अभिनवनलिनी. | प्र.र. | २२० | ६ |

| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अभूत्प्राचीपिङ्गा. | शा. | १६४ | १ |
| अभ्यासेननयत्सिद्धि. | अ.मो. | ९८ | १ |
| अभ्यासादेवपवनं | अ.मो. | ९८ | २ |
| अभ्यासिनामेवलभ्या. | अ.मो | ९८ | ३ |
| अभ्यासस्यप्रसादेन. | अ.मो. | ९८ | ४ |
| अभ्याससदृशंनैव. | अ.मो. | ९८ | ५ |
| अभ्युत्थानमुपागते. | शा. | १३६ | ९ |
| अभ्रच्छायाखलप्रीति. | प्र.र. | २७३ | ५ |
| अमत्रमक्षरंनास्ति. | स्फु. | २७६ | २७ |
| अमरतरुकुसुम. | भा.वि. | २२३ | २४ |
| अमितगुणोपिपदार्थो. | स्फु. | २६२ | ४४ |
| | | २९१ | ४३ |
| अमीषाप्राणाना. | भर्तृ. | ७८ | १० |
| अमुंकालक्षेपं. | शा. | २०४ | १२ |
| अमुष्मिन्नुंद्याने. | शा. | २२८ | ५ |
| अमूलस्यममस्वर्ण. | शा. | ३४२ | १ |
| अम्बरमनूरुलंघ्यं. | स्फु. | २३ | ९८ |
| अम्बाकुप्यतितात. | स्फु. | १७१ | १५ |
| अम्बातुष्यतिनमया. | शा. | ६७ | १८ |
| अम्बुजमम्बुनिजात. | स्फु. | १२४ | १ |
| अम्भोजिनीवनविलास. | भ. | २१७ | २ |
| अम्भोभिःस्थलता. | शा. | ८४ | २५ |
| अम्भोरुहमयेस्नात्वा. | वि. मं. | १८६ | २३ |
| अमृतंदुर्लभंनृणा. | स्फु. | २६५ | २६ |
| अमृतस्येवकुण्डानि. | शा. | ३३० | ३ |
| अम्लानपङ्कजामाला. | स्फु. | १८५ | १० |
| अयमवसरःसरस्ते. | शा. | २३६ | २ |
| अयिकान्तपश्यमेघं. | स्फु. | १७८ | १५ |
| अयिकुरंगितपोवन. | शा. | २१४ | ३ |
| अयिखलुविषमःपुरा. | क.त. | १६९ | २ |
| अयिजलदनदास्यसि. | शा. | २०४ | १० |
| अयित्यक्तासिकस्तूरि. | शा | २६३ | २ |

| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अयिवतगुरुगर्वे. | शा. | २६३ | १ |
| अयिमक्ररंदस्कंदिनि. | क. | २५६ | १ |
| अयिमलयजमहि. | मा.वि. | २४५ | ७ |
| अयिशस्तःसखिवत् | वि.भू. | १८० | २९ |
| अयुक्तंयुक्तंवा. | वि.गु. | १४५ | १७ |
| अयेकीरश्रेणी. | स्फु. | २२९ | १२ |
| अयेलालानुच्चैः | शा. | ६६ | १५ |
| अयेहेलावेला. | भो.प्र | २०५ | २३ |
| अयंनिजःपरोवेति. | स.त. | ५८ | १ |
| अयंपटोमेपितुरङ्गभू. | स्फु. | ६८ | २७ |
| अयंरेवाकुञ्जः | स्फु. | १५४ | ९ |
| अयःपिण्डइवोत्तप्ते. | शा. | ३२ | ६७ |
| ‹ क्षणकृच्चर्वणं. | स्फु | २९० | ३५ |
| र्जुनस्यइमेवाणा. | स्फु | १७७ | ३ |
| अर्जुनीयतियदर्जने. | स्फु. | ५४ | ३५ |
| अरक्षितंतिष्ठति. | प्र.र. | ८४ | २६ |
| अरप्यरुदितंकृतं. | कु.नं. | ४३ | २५ |
| अरण्यंसारङ्गैः | स्फु. | २७७ | ३७ |
| अर्थग्रहणेनतथा. | स्फु. | ३४ | ९६ |
| अर्थनाशंमनस्तापं. | स्फु. | २३ | ५ |
| अर्थमनर्थंभावय. | मो.मु. | ४४ | ४ |
| अर्थातुराणा. | स्फु. | २६५ | ३९ |
| अर्थान्केचित्. | वि.गु. | ४७ | १२ |
| अर्थानसन्तिनच. | शा. | ६५ | ५ |
| अर्थाःपादरजः | भ.ह. | १११ | ५ |
| अर्थाहरणकौशल्यं. | स्फु. | ३९ | १७ |
| अर्थाहसंत्युचित. | स्फु. | २६७ | ५३ |
| अर्थिनिकवयति. | स्फु. | ७३ | २१ |
| अर्थीकरोतिदैन्यं. | क.त. | ६३ | १२ |
| अर्थीलाघवमुच्छ्रितो. | स्फु. | २७९ | ५२ |
| अर्थोहिकन्या. | कलि. | २५३ | ७ |

| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अर्थःसुख कीर्ति. | शा. { | ५९ | ५ |
| | | १३ | १८ |
| अलभ्यंलब्धुकामस्य. | क.त. | २७६ | ३५ |
| अलिपटलैरनुयाता. | का.स. | २०६ | ४ |
| अलिरयनलिनी. | शा. | २२० | १ |
| अलिरनुसरति. | स.त. | २९५ | ९० |
| अलकरोतियः | स्फु. | ३८ | ८ |
| अलंदुर्जनाचित्त. | अ.मो. | ३७ | १११ |
| अलंहिमानीपरि. | स्फु. | १६८ | २ |
| अल्पाक्षररमणीयं. | शा. | १३१ | ४ |
| अल्पानामपिवस्तूना. | प्र.र. | २६७ | ७३ |
| अल्पीयसैवपयसा. | शा. | २३५ | २ |
| अवलोक्यस्तनौ. | शा. | १७३ | १० |
| अविदितगुणापि. | शा. | ४९ | २ |
| अविज्ञातविशेषस्य. | शा. | १६३ | ४ |
| अविनीतःसुतो. | क.त. | १४३ | ७ |
| अविलम्बेनसंसिद्धौ, | क.वि. | २९७ | ७ |
| अविवेकिचद्वन्द्वं. | स्फु. | ३४२ | ४ |
| अविवेकिनिभूपाले. | स.त. | २७६ | २९ |
| अविवेकिन. | अ.रा. | १३२ | ५ |
| अविशीर्णकान्तपात्रे. | र.जी. | ३५२ | ३ |
| अविश्वसन्धूर्ते. | शा. | २२४ | ५ |
| अवेमव्यापारा. | वि.गु. | ६ | ४ |
| अव्यवसायिनं. | प्र.र. | १०० | ९ |
| अशक्ताःशक्ति. | शा. | २९ | ३७ |
| अशठमलोभ. | शा. | २६५ | १९ |
| अशनंमेवसनंमे. | स्फु. { | २८० | ६३ |
| | | ११८ | ४ |
| अशौचदेहा. | रं.शु. | ३१४ | ३५ |
| अश्रान्तंदृढयन्त्रणेन. | पं.मा. | ३३५ | ३ |
| अश्वनैवगजंनैव. | स्फु. | २६८ | ५९ |

| अ. | | पृ. | श्लो. |
|---|---|---|---|
| अश्वःशस्त्रशास्त्रं. | प्र. र. | १०६ | ७ |
| | | २८३ | ८३ |
| असज्जनःसज्जन. | फ.र. | १०२ | २ |
| असत्यमप्रत्यय. | क.त. | १३२ | ३ |
| असद्वृत्तोनायं. | शा. | ३४३ | ५ |
| असतामास्तुकुत्रा. | पि. | ३७ | ११९ |
| असमानेसमानत्व. | शा. | १६९ | ५ |
| असाधु साधुर्वा. | प्र.र. | १७ | ४५ |
| असारेखलुसंसारे. | स्फु. | ११६ | ३ |
| असारेखलुसंसारे. | स्फु. | ११६ | ४ |
| असुलभासकलेन्दुमुखी. | वि. | १५१ | १ |
| असुखमथसुखंवा. | वि.गु. | ९७ | ४ |
| असेवितेश्वरद्वारं. | प्र.र. | २८३ | ८६ |
| असौभाग्यंधत्ते. | स्फु. | २८६ | ९ |
| असंपादयतःकंचित्. | माघ. | ८६ | १३ |
| असंभोगेनसामान्यं. | प्र.र. | ७१ | ७ |
| अस्त्रियद्यपिसर्वत्र. | शा. | २१९ | १२ |
| | | २१९ | १२ |
| अस्तंगतवतिसवितरि. | स्फु. | १६२ | १० |
| अस्तंगतोयमरविंद. | शा. | २५८ | १८ |
| अस्त्यद्यापिचतुः | स.शा. | १३० | ९ |
| अस्त्रामासतृणं. | वि.गु. | ११ | ४ |
| अस्थिनास्तिशिरो | क.त. | १७४ | १५ |
| अस्माकंजलजीविनां. | क.त. | १७० | १० |
| अस्मानवेहिकलमान्. | स्फु. | २८९ | ३० |
| अस्मान्विचित्र. | स.त. | २२७ | ३ |
| अस्यकातातिथिः | स्फु. | १९३ | २९ |
| अस्यक्षोणिपतेः. | नै. | १४७ | ४ |
| अस्यदग्धोदरस्या. | स.त. | ९१ | १२ |
| अस्यामनोहराकार. | शा. | ३३४ | ३ |
| अस्याःपीठोपविष्टाया. | पं.भा. | ३३६ | ५ |
| अस्याश्चेद्गतिसौ. | स.त. | २३३ | २५ |

| आ. | | पृ. | श्लो. |
|---|---|---|---|
| अस्याःसर्गविधौ. | वि. | ३३१ | ४ |
| अस्यासखेबधिर. | शा. | २२३ | १ |
| अहंकिमंबाकिम. | भा.चं. | १४० | ७ |
| अहंमहानसायातः. | वि.मं. | १८६ | २२ |
| अहंचत्वंचराजेंद्र. | प्र.रं. | १८२ | ३७ |
| अहमिहस्थितवत्यपि. | स्फु. | १५९ | ४१ |
| अहमेवगुरुः | स.त. | २५ | २ |
| अहहचंडसमीर. | स्फु. | २०७ | ८ |
| अहिताहिताविचार. | शा. | ९१ | ११ |
| अहिराहिरिति. | शा. | २५६ | ४ |
| अहिरिपुपति. | स्फु. | १७८ | ३ |
| अहोकनकमाहात्म्यं. | स.त. | ४५ | २३ |
| अहोकिमपिचित्राणि. | शा. | २२ | ८३ |
| अहोदुर्जनसंसर्गा. | प्र.र. | २९ | ४३ |
| अहोनक्षत्रराजस्य. | शा. | २०० | १७ |
| अहोनुकष्टः | स्फु. | १२५ | १ |
| अहोभक्त्याकंकरोपि. | अ.रा. | १०५ | ३ |
| अहोमहत्वंमहता. | स.त. | १२ | ७ |
| अहोमोहोवराकस्य | प्र.र. | २३२ | १० |
| अहोप्रकृतिसादृश्यं. | क.त. | ३६ | १०१ |
| अहोबतमहत्कष्टं. | शा. | २६२ | ४ |
| अहोविवेकराज. | अ.रा. | १३२ | ४ |
| **आ.** | | | |
| आकर्ण्यभूपाल. | स्फु. | २७६ | ३३ |
| आकारेणशशी. | शा. | १३९ | १६ |
| आकाशमुत्पततु. | प.त. | ८९ | ११ |
| आकाशवापीसित. | शा. | २०० | १२ |
| आकिंचन्यादतिपरि. | वि.गु. | १२५ | ४ |
| आक्रान्तंमरणेनजन्मभ. | भ. | १०९ | २ |
| आक्षिपसिकर्णमक्ष्णा. | स्फु. | २८४ | २ |
| आगतःपाडवाःसर्वे. | स्फु. | १८५ | ६ |

| आ. | | पृ. | श्लो. |
|---|---|---|---|
| आघ्रातंपरिचुम्बित. | ह.ना. | २४० | ८ |
| आचक्ष्महेतव. | शा. | २३४ | ३ |
| आजन्मसिद्धकौटिल्य. | प्र.र. | ११८ | २ |
| आज्ञाकीर्तिःपालनं. | भ. | १४४ | ११ |
| आज्ञातशास्त्र. | स्फु. | ९६ | ५ |
| आटीकसेग. | अ. | ३१९ | ५ |
| आत्मनोमुखदोषेण. | प्र.र. | ९१ | १ |
| आत्मबुद्धिःसुखायैव. | कल्प. | २६६ | ३७ |
| आत्माधीनशरीराणा. | क.त. | ६२ | ८ |
| आदरेणयथास्तौति. | स्फु. | १०० | ७ |
| आदातुंसकृदीक्षते. | स.त. | १५४ | ८ |
| आदायचापमचलं. | स्फु. | ३५४ | ३ |
| आदिमध्यनिधनेषु. | शा. | १३ | २० |
| [illegible]तपाणिः | स्फु. | १७५ | ७ |
| [illegible]नाशिनी. | स.त. | ११९ | १ |
| आदौवेश्यापुनर्दासी. | कल्प. | ३५७ | ६ |
| आदौसत्ययुगे. | स्फु. | १२१ | १ |
| आधिव्याधिशतैः | भ. | १०९ | ३ |
| आननानिहरिणी. | स.त. | २०२ | २७ |
| आनीतानटवत्. | स्फु. | २८७ | १२ |
| आनन्दवाष्परोमाचौ. | क.वि. | २९९ | ३३ |
| आनन्दमात्रमकरन्द. | स्फु. | ३ | ४ |
| आनन्दमृगदावाग्निः | क.त | ३४१ | ८५ |
| आनन्दरूपोनिजबोध. | रं.शु. | ३१३ | १९ |
| आनन्दस्तुतिरात्मनो. | क.त. | १४० | ५ |
| आपद्गतंहससिकिं. | स्फु. | ५५१ | ३६ |
| आपद्गतःखलुमहा. | स.त. | २३ | ९९ |
| आपत्स्वेवहिमहता. | शा. | २२ | ८४ |
| आपरितोषाद्विदुषा. | शा.ना. | २८८ | २२ |
| आपाण्डुपीनकठिनं. | वि.सु. | १७३ | ७ |
| आपुष्पंप्रसवात् | शाकुं. | २५० | १ |
| आपूर्येतपुनः | शा. | २५८ | १७ |
| आपदिरेम्वरपथ. | भा.वि. | २३६ | ५ |
| आपोविमुक्ताः | शा. | २०४ | १४ |
| आःपाकंनकरोषि. | स्फु. | १३८ | ६ |
| आभीरनार्याःकरमा. | रा.कृ. | ३१६ | १४ |
| आभुग्नाङ्गुलिपल्लवौ. | प.भा. | ३४४ | ३ |
| आमध्यान्हंनदीवासः. | क.वि. | २९९ | ३५ |
| आमरणादपिविरतं. | शा. | २३१ | २ |
| आमोदीनिसुमेदुराणि. | शा. | २५३ | १ |
| आयातागुरवः | स्फु. | ७६ | १० |
| आयातासिवि. | स्फु. | १४० | २२ |
| आयुःकल्लोललोलं. | भ. | ११० | ६ |
| आयुःप्रश्नेदीर्घमायुः | क.वि. | २९७ | १० |
| आयुर्वर्षशतंनृणा. | भ. | १११ | ९ |
| आरभन्तेल्पमेवाज्ञाः | माघ. | १५ | २८ |
| आरभ्यतेनखलुविघ्न. | भ. | १६ | ३८ |
| आरामाभरणस्य. | स.त. | २४५ | १२ |
| आरोग्यंविद्वत्ता. | प्र.र. | ६३ | १० |
| आरोपिताशिलायां. | स्फु. | १३७ | ५ |
| आर्तादेवान्नमस्यन्ति. | स.त. | २९० | ३९ |
| आलस्योपहताविद्या. | कल्प. | २९५ | ८६ |
| आलस्यंस्थिरता. | अ.रा. | १०२ | २० |
| आलस्यंस्त्रीसेवा. | प्र.र. | १०१ | १० |
| आलस्यंहिमनुष्याणा. | भ. | ८६ | ७ |
| आलोकवंतःसंत्येव. | शा. | १९९ | १ |
| आलोकातप्रतिहत. | वि. | १४५ | १९ |
| आलम्बेजगदालम्बे. | मल्लि. | ३ | २ |
| आवर्त्यकण्ठंसिचयेन. | पं.भा. | ३३६ | ४ |
| आविर्भूतेशशिनि. | वि. | ३५१ | ४ |
| आशानामनदी. | भ. | ७७ | ८ |
| आशानापूरणं. | अ.रा. | ८० | ३४ |
| आशानिघ्नप्रतिघ्ना. | स्फु. | ८० | ३१ |
| आशाबलवती. | स्फु. | ७८ | १४ |

